श्रीगणेशाय नमः ॥



गुरुमण्डलग्रन्थमालायाः पञ्चदशपुष्पम्

# श्री-सात्त्विक-जीवन-स्तोत्रमाला

तस्याः

## देवीभगवतीविष्णुकृष्णरामादिदेव-

स्तुतिगुम्फितो



# द्वितीयो भागः

( स्तोत्र संख्या २०७ )

पूर्वार्द्धम्

सज्जनकुमार मोर

५, क्लाइव रो,

कलकत्ता—१

केवलमावरणमुद्रकः

सारनमण्डलान्तर्गत गोरियाकोठी

निवासी श्रीमत्स्वर्गतगोपालप्रसाद

सूनुः श्रीअवधकिशोरसिंहः

स्वयन्त्रालये

# गोपाल प्रिण्टिङ्ग वर्क्स

नामके

स्थानम् :— ८७।ए, राजा दिनेन्द्र स्ट्रीट,

कलकत्ता – ६

॥ श्रीगणेशायनमः ॥



गुरुमण्डलग्रन्थमालायाः पञ्चदशं पुष्पम्

# श्री-सात्त्विक-जीवन-स्तोत्रमाला

तस्याः

## देवीभगवतीविष्णुकृष्णरामादिदेव-

स्तुतिगुम्फितो

# द्वितीयो भागः

( स्तोत्र संख्या २०७ )

**पूर्वार्द्धम्**

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं बटुकत्रयम्पदयुगं दूतीक्रमं मण्डलम् (शाम्भवम्) ॥
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्देगुरोर्मण्डलम् ॥

**सज्जनकुमार मोर**

५, क्राइव रो,

कलकत्ता-१

कमसम्वत्
२०१७

प्रथमवार
१०००

ईशवीयवत्सर
१९६०

* श्रीगणेशायनमः *

श्रीसात्त्विकजीवनस्तोत्रमालायाःपूर्वार्द्धद्वितीयभागस्य

# विषयसूचिका

——:o:——

स्तोत्रनाम | पृष्ठा

## भगवतीस्तोत्राणि

## श्रीविष्णुस्तोत्राणि



सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा

—:०:—

॥ श्रीगणेशाय नमः ॥

# सात्त्विकजीवन-स्तोत्रमाला

## द्वितीयो भागः

## भगवतीस्तोत्राणि

### श्री सिद्धसरस्वतीस्तोत्रम्

ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य ब्रह्माऋषिः गायत्रीच्छन्दः। श्रीसरस्वती-देवता। धर्मार्थकाममोक्षार्थे जपे विनियोगः।

#### ध्यानम्

आरूढा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्षसूत्रं, वामे हस्ते च दिव्याम्बर-कनकमयीं पुस्तकं ज्ञानगम्या। सा वीणां वादयन्ती स्वकरकरजपैः शास्त्रविज्ञान-शब्दैः क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥१॥ श्वेतपद्मासना देवी श्वेतगन्धानुलेपना। अर्चिता मुनिभिः सर्वैर्ऋषिभिः स्तूयते सदा। एवं ध्यात्वा सदा देवीं वाञ्छितं लभते नरः ॥२॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं, वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्। हस्ते स्फाटिकमालिकां विद-धतीं पद्मासने संस्थितां, वन्दे ताम्परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥३॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता, या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना। या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता, सा माम्पातु सरस्वती भगवती निःशेषजाड्यापहा ॥४॥ ॐ ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले

कल्पविम्बप्रशोभे भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे । पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसम्पादयित्रि, प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि ! संसारसारे । ॥५॥ ॐ ऐं ऐं ऐं दृष्टमन्त्रे कमलभवमुखाम्भोजभूतिस्वरूपे, रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे । न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नाऽपि विज्ञानतत्त्वे, विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले नित्यशुद्धे ॥ ६ ॥ ॐ ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते, मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिम्प्रशस्ताम् । विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे, मार्गातीतस्वरूपे भव मम वरदा शारदे । शुभ्रहारे । ॥७॥ ॐ धीं धीं धीं धारणाख्ये धृतिमतिनुतिभिर्नामभिः कीर्तनीये नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे । पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे, मातर्मात्रार्धतत्त्वे मतिमतिमतिदे माधवप्रीतिमोदे ॥८॥ ॐ ह्रूं ह्रूं ह्रूं स्वस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते, सन्तुष्टाकारचित्ते स्मितमुखिसुभगे जृम्भिणि स्तम्भविद्ये । मोहे मुग्धप्रवाहे कुरु मम विमतिध्वान्तविध्वंसमीडे, गीर्गौर्वाग्भारति । त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये ॥९॥ स्तौमि त्वां त्वाञ्च वन्दे मम खलु रसना मा(नो) कदाचित्त्यजेथाः, मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि । मे यातु पापम् । मा मे दुःखं कदाचित्क्वचिदपि विषयेऽप्यस्तु मेऽनाकुलत्वं, शास्त्रे वादे कवित्वे प्रसरतु मम धीर्माऽस्तु कुण्ठा कदापि ॥१०॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो, वाणी वाचस्पतेरप्यविदितविभवो वाक्पटुर्मृष्टकण्ठः, सः स्यादिष्टार्थलाभैः सुतमिव सततं पाति तं सा च देवी, सौभाग्यन्तस्य लोके प्रभवति कविता विघ्नमस्तम्प्रयाति ॥११॥ निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोध , कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् । दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो, वाग्देव्याः सम्प्रसादात्त्रिजगति विजयी जायते सत्सभासु ॥१२॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः । सारस्वतो जनः पाठात्सकृदिष्टार्थलाभवान् ॥१३॥ पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया । अविच्छिन्नः पठेद्धीमान्

ा देवी सरस्वतीम् ॥१४॥ सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः । वाञ्छितं
ाप्नोति लोकेऽस्मिन्नाऽत्र संशयः ॥१५॥ ब्रह्मणेति स्वयम्प्रोक्तं सरस्वत्याः स्तवं
[ । प्रयत्नेनपठेन्नित्यं सोऽमृतत्वायकल्पते ॥१६॥

॥ इति श्रीमद्ब्रह्मणाविनिता श्रीसिद्धसरस्वतीस्तोत्रं सम्पूर्णम् ॥

---

# अथ कर्पूरस्तोत्रम्

कर्पूरम्मध्यमान्त्यस्वरपररहितं सेन्दुवामाक्षियुक्तम्बीजन्तेमातरेतत्त्रिपुरहर-
ुत्रिष्कृतं ये जपन्ति । तेषाङ्गद्यानि पद्यानि च मुखकुहरादुल्लसन्तीव वाचः,
च्छन्दध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिङ्गतानाम् ॥१॥ ईशानस्सेन्दुवामश्रव-
परिगतम्बीजमन्यन्महेशि, द्वन्द्वन्तेमन्दचेता यदि जपति जनो वारमेकङ्कदाचित् ।
ञत्वा वाचामधीशन्धनदमपि चिरम्मोहयत्यम्बुजाक्षी, वृन्दश्चन्द्रार्द्धचूडे प्रभवति
। महाघोररावावतंसे ॥२॥ ईशो वैश्वानरस्थः शशधरविलसद्वामनेत्रेण युक्तम्बी-
ान्ते द्वन्द्वमन्यद्विगलितचिकुरे कालिके ये जपन्ति । द्वेष्टारन्ते निहन्ति त्रिभुवनम-
ासिते वश्यभावन्नयन्ति, सृक्कद्वन्द्वास्त्रधाराद्वयधरवदने दक्षिणे कालिकेति ॥३॥ ऊर्ध्वं
वामे कृपाणङ्करतलकमले च्छिन्नमुण्डन्तथाऽधः, सव्ये भीतिम्वरञ्च त्रिजगदघहरे
दक्षिणे कालिके च । जप्त्वैतन्नामवर्णन्तवमनुविभवम्भावयन्तस्तदर्थन्तेषामष्टौ करस्थाः
प्रकटितवदने सिद्धयस्त्र्यम्बकस्य ॥४॥ वर्गाद्यम्वह्निसंस्थं विधुरतिललितन्तत्त्रयङ्कू-
र्च्चयुग्मंल्लजाद्वन्द्वञ्च पश्चात्स्मितमुखि तदधष्ठद्वयं योजयित्वा । मातर्ये ये जपन्ति
स्मरहरमहिले भावयन्ते स्वरूपन्ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति
॥५॥ प्रत्येकम्वा द्वयम्वा त्रयमपि च परम्बीजमत्यन्तगुह्यन्त्वन्नाम्ना योजयित्वा सक-
लमपि सदा भावयन्तो जपन्ति । तेषान्नेत्रारविन्दे विहरति कमलावक्त्रशुभ्रां-
शुबिम्बे वाग्देवी दिव्यमुण्डस्रगतिशयलसत्कण्ठपीनस्तनाढ्ये ॥६॥ गतासूनाम्बाहु-

प्रकरकृतकाञ्चीपरिलसज्जितम्बान्दिग्वस्त्रान्त्रिभुवनविधात्रीन्त्रिनयनाम् । श्मशानस्थे तल्पे शवहृत महाकालसुरतप्रसक्तान्त्वान्ध्यायञ्जननि । जडचेता अपि कविः ॥ ७ ॥ शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिकरैः, परं सङ्कीर्णायाम्प्रकटितचितायां हरवधूम् । प्रविष्टां सन्तुष्टामुपरिसुरतेनाऽतियुवती, सदा त्वान्ध्यायन्ति क्वचिदपि न तेषाम्परिभवः ॥८॥ वदामस्तेकिम्वा जननि ! वयमुच्चैर्जडधियो, न धाता नापीशो हरिरपि न ते वेत्ति परमम् । तथापि त्वद्भक्तिर्म्मुखरयति चाऽस्माकममिते, तदेतत्क्षन्तव्यो न खलु पशुरोष समुचितः ॥ ९ ॥ समन्तादापीनस्तनजघनधृग्यौवनवतीरतासक्तो नक्तं यदि जपति भक्तस्तव मनुम् । विवासास्त्वान्ध्यायन्गलितचिकुरस्तस्य वशगाः, समस्ताः सिद्धौघा भुवि चिरतरञ्जीवति कविः ॥१०॥ समः स्वस्थीभूतो जपति विपरीतो यदि सदा, विचिन्त्यत्वान्ध्यायन्नतिशयमहाकालसुरताम् । तदेतस्य क्षोणीतलविहरमाणस्य विदुषः, कराम्भोजे वश्याः स्मरहरवधूसिद्धिनिवहाः ॥११॥ प्रसूते संसारञ्जननि जगतीम्पालयति वा, समस्तक्षित्यादि प्रलयसमये संहरति च । अतस्त्वां धाताऽपि त्रिभुवनपतिः श्रीपतिरपि, महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥१२॥ अनेके सेवन्ते भवदधिकगीर्व्वाणनिवहा, विमूढास्ते मातः ! किमपि न हि जानन्ति परमम् । समाराध्यामाद्यां हरिहरविरञ्च्यादिविबुधैः, प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम् ॥ १३ ॥ धरित्री कीलालं शुचिरपि समीरोऽपि गगनन्त्वमेका कल्याणी गिरिशरमणी कालि ! सकलम् । स्तुतिः का ते मातर्निजकरुणया मामगतिकम्प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः । श्मशानस्थः स्वस्थो गलितचिकुरो दिक्पटधरः सहस्रं त्वर्क्काणां निजगलितवीर्येण कुसुमम् । जपंस्त्वत्प्रत्येकम्मनुमपि तव ध्याननिरतो, महाकालि ! स्वैरं स भवति धरित्रीपरिवृढः ॥ १५ ॥ गृहे सम्मार्ज्जन्या परिगलितवीर्यं हि कुसुमं, समूलम्मध्याह्ने वितरति चितायां कुजदिने । समुच्चार्य प्रेम्णा मनुमपि सकृत्कालि ! सततं, गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥१६॥ स्वपुष्पैराकीर्णङ्कुसुमधनुषो मन्दिरमहो, पुरोध्यायन्ध्यायञ्जपति यदि भक्तस्तव मनुम् । सगन्धर्व्वश्रेणीपतिरपि कविर्त्वा-

मृतनदी, नदीनः पर्य्यन्ते परमपदलीनः प्रभवति ॥१७॥ त्रिपञ्चारे पीठे शवशिव-हृदि स्मेरवदनाम्महाकालेनोच्चैर्म्मदनरसलावण्यनिरताम्। समासक्तो नक्तं स्वयमपि रतानन्दनिरतो, जनो यो ध्यायेत्त्वामपि जननि स स्यात्स्मरहरः ॥१८॥ सलोमास्थिस्वैरम्पललमपि मार्ज्जारमसिते, परञ्चोष्ट्रम्मेषन्नरमहिषयोश्छागमपि वा। बलिन्ते पूजायामपि वितरताम्मर्त्त्यवसतां, सतां सिद्धिः सर्व्वा प्रतिपदमपूर्व्वा प्रभवति ॥ १९ ॥ वशीलक्षम्मन्त्रम्प्रजपति हविष्याशनरतो, दिवा मातर्य्युष्मच्चरणयुगलध्याननिरतः। परन्नक्तं नग्नो निधुवनविनोदेन च मनुं, जनो लक्षं सम्यक्स्मरहरसमानः क्षितितले ॥२०॥ इदं स्तोत्रं मातस्तवमनुसमुद्धारणजप, स्वरूपाख्यम्पादाम्बुजयुगलपूजाविधियुतम्। निशार्द्धे वा पूजा समयमथवा यस्तु पठति, प्रलापस्तस्याऽपि प्रसरति कवित्वामृतरसः ॥२१॥ कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलम्वपुस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिः। रिपुः कारागारं कलयति च तत्केलिकलया, चिरञ्जीवन्मुक्तस्स भवति सुभक्तः प्रतिजनुः ॥२२॥

॥ इति श्रीमहाकालप्रणीतङ्कर्पूरस्तोत्रं सम्पूणम् ॥

---

## अथ श्रीमहाकालीस्तोत्रम्

प्राग्देहस्थो यदाऽहन्तवचरणयुगन्नाऽऽश्रितो नाऽर्च्चितोऽहन्तेनाद्या कीर्तिवर्गैर्ज्जठरजदहनैर्बाध्यमानो बलिष्ठैः। क्षिप्त्वा जन्मान्तरान्नः पुनरिह भविता काऽऽश्रयः काऽपि सेवा क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले! ॥ १ ॥ बाल्ये बालाभिलापैर्ज्जडितजडमतिर्बाललीलाप्रसक्तो न त्वां जानामि मातः! कलिकलुषहराम्भोगमोक्षप्रदात्रीम्। नाऽऽचारो नैवपूजा न च यजनकथा न स्मृतिर्नैव सेवा, क्षन्तव्यो मेऽपराधः प्रकटितवदने कामरूपे कराले॥ २ ॥ प्राप्तोऽहं यौवनञ्चेद्विपधरसदृशैरिन्द्रियैर्दष्टगात्रो नष्टप्रज्ञः परस्त्रीपरधनहरणे सर्व्वदा साभि-

लाप । त्वत्पादाम्भोजयुग्मं क्षणमपि मनसा न स्मृतोऽहं कदापि क्षन्तव्यो० ॥ ३ ॥ प्रौढो भिक्षाभिलाषी सुतदुहितृकलत्रार्थमन्नादिचेष्टः क्व प्राप्स्ये कुत्र यामीत्यनुदिनमनिशं चिन्तया मग्नदेहः । नो ते ध्यानं च चाऽऽस्था न च भजनविधिर्नामसङ्कीर्तनं वा क्षन्तव्यो० ॥ ४ ॥ वृद्धत्वे बुद्धिहीनः कृशविवशतनुः श्वासकासातिसारैः कर्मानर्होऽक्षिहीनः प्रगलितदशनः क्षुत्पिपासाभिभूतः । पश्चात्तापेन दग्धो मरणमनुदिनं ध्येयमात्रं च चान्यत्क्षन्तव्यो० ॥ ५ ॥ कृत्वा स्नानं दिनादौ क्वचिदपि सलिलं नो कृतं नैव पुष्पं ते नैवेद्यादिकं च क्वचिदपि न कृतं नाऽपि भावो न भक्तिः । न न्यासो नैव पूजा न च गुणकथनं नापि चाऽर्चा कृता ते क्षन्तव्यो० ॥६॥ जानामि त्वां न चाऽहं भवभयहरणीं सर्वसिद्धिप्रदात्रीं नित्यानन्दोदयाढ्यां त्रितयगुणमयीं नित्यशुद्धोदयाढ्याम् । मिथ्याकर्माभिलाषैरनुदिनमभितः पीडितो दुःखसङ्घैः क्षन्तव्यो० ॥ ७ ॥ कालाभ्रां श्यामलाङ्गीं विगलितचिकुरां खड्गमुण्डाभिरामां त्रासत्राणेष्टदात्रीं कुणपगणशिरोमालिनीं दीर्घनेत्राम् । संसारस्यैकसारां भवजननहरां भावितो भावनाभिः क्षन्तव्यो० ॥ ८ ॥ ब्रह्मा विष्णुस्तथेशः परिणमति सदा त्वत्पदाम्भोजयुग्मं भाग्याभावान्न चाऽहं भवजननि । भवत्पादयुग्मं भजामि । नित्यं लोभप्रलोभैः कृतविवशमतिः कामुकस्त्वां प्रयाचे क्षन्तव्यो० ॥ ९ ॥ रागद्वेषैः प्रमत्तः कलुषयुततनुः कामनाभोगलुब्धः कार्याकार्याविचारी कुलमतिरहितः कौलसङ्घैर्विहीनः । क्व ध्यानं ते क्व चाऽर्चा क्व च मनुजपनं नैव किञ्चित्कृतोऽहं क्षन्तव्यो० ॥१०॥ रोगी दुःखी दरिद्रः परवशकृपणः पांशुलः पापचेताः निद्रालस्यप्रसक्तः सुजठरभरणे व्याकुलः कल्पितात्मा । किं ते पूजाविधानं त्वयि क्व(?)नुमतिः क्वाऽनुरागः क्व चाऽऽस्था क्षन्तव्यो० ॥ ११ ॥ मिथ्याव्यामोहरागैः परिवृतमनसः क्लेशसङ्घान्वितस्य क्षुन्निद्रौघान्वितस्य स्मरणविरहिणः पापकर्मप्रवृत्तेः । दारिद्र्यस्य क्व धर्मः क्व च जननि । रुचिः क्व स्थितिः साधुसङ्गैः क्षन्तव्यो० ॥१२॥ मातस्तातस्य देहाज्जननि जठरगः संस्थितस्त्वद्वशोऽहं त्वं हर्त्ताकारयित्री करणगुणमयी कर्महेतुस्वरूपा । त्वं बुद्धिश्चित्तसंस्थाऽप्यहमतिभवती सर्वमेतत्क्षमस्व क्षन्तव्यो० ॥ १३ ॥

त्वम्भूमिस्त्वं जलञ्च त्वमसि हुतवहस्त्वं जगद्वायुरूपा त्वञ्चाकाशम्मनश्चप्रकृतिरसि महत्पूर्व्विका पूर्व्वपूर्व्वा। आत्मात्वञ्चाऽसि मातः परमसि भवती त्वत्परन्नैवकिञ्चि-त्क्षन्तव्यो० ॥१४॥ त्वं काली त्वञ्च तारा त्वमसि गिरिसुता सुन्दरी भैरवी त्वं त्वं दुर्गा छिन्नमस्ता त्वमसि च भुवना त्वं हि लक्ष्मीः शिवा त्वम्। धूमा मातङ्गिनी त्वं त्वमसि च वगला मङ्गलादिस्तवाऽऽख्या क्षन्तव्यो० ॥१५॥ स्तोत्रेणाऽनेन देवी-म्परिणमति जनो यः सदा भक्तियुक्तो दुष्कृत्यादुर्गसङ्घम्परितरति शतम्विघ्नता-नाशमेति। नाधिर्व्याधिः कदाचिद्भवति यदि पुनस्सर्वदा सापराधः सर्वन्तत्काम-रूपे त्रिभुवनजननि! क्षामये पुत्र बुद्ध्या ॥१६॥ ज्ञाता वक्ता कवीशो भवति धन-पतिर्दानशीलो दयात्मा निष्पापी निष्कलङ्की कुलपतिकुशलस्सत्यवाग्धार्मिकश्च। नित्यानन्दो दयाढ्यः पशुगणविमुखः सत्पथाचारशीलः संसाराब्धिं सुखेन प्रत-रति गिरिजा पादयुग्मावलम्बात् ॥१७॥

॥ इति श्रीकालीस्तोत्रम् समाप्तम् ॥

---

# अथ कवचम्

भैरव्यु वाच।

कालीपूजा श्रुता नाथ! भावाश्च विविधाः प्रभो!। इदानीं श्रोतुमिच्छामि कवचम्पूर्वसूचितम् ॥ १ ॥ त्वमेव स्रष्टा पाता च संहर्त्ता च त्वमेव हि। त्वमेव शरणं नाथ! त्राहि मां दुःखसङ्कटात् ॥ २ ॥ भैरव उवाच। रहस्यं शृणु वक्ष्यामि भैरवि! प्राणवल्लभे!। श्री जगन्मङ्गलन्नाम कवचम्मन्त्रविग्रहम् ॥ ३ ॥ पठित्वा धारयित्वा च त्रैलोक्यम्मोहयेत्क्षणात्। नारायणोऽपि यद्धृत्वा नारी भूत्वा महे-श्वरम् ॥ ४ ॥ योगिनं क्षोभमनयद्यद्धृत्वा च रघूत्तमः। वरतृप्तो जघानैव रावणादिनिशाचरान् ॥ ५ ॥ यस्य प्रसादादीशोऽहं त्रैलोक्यविजयी विभुः। धना-

धिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ॥ ६ ॥ एवं हि सकला देवाः सर्वसिद्धीश्वराः प्रिये ! । श्रीजगन्मङ्गलस्यास्य कवचस्य ऋषिः शिवः ॥ ७ ॥ छन्दोऽनुष्टुब्देवता च कालिका दक्षिणेरिता । जगताम्मोहने दुष्टविजये भुक्तिमुक्तिषु ॥ ८ ॥ योषिदाकर्षणे चैव विनियोगः प्रकीर्त्तितः । शिरो मे कालिका पातु क्रीङ्कारैकाक्षरी परा ॥ ९ ॥ क्रीं क्रीं क्रीं मे ललाटञ्च कालिका खड्गधारिणी । हूं हूं पातु नेत्रयुगं ह्रीं ह्रीं पातु श्रुती मम ॥१०॥ दक्षिणे कालिका पातु घ्राणयुग्मम्महेश्वरी । क्रीं क्रीं क्रीं रसनाम्पातु हूं हूं पातु कपोलकम् ॥११॥ वदनं सकलम्पातु ह्रीं ह्रीं स्वाहा स्वरूपिणी । द्वाविंशत्यक्षरी स्कन्धौ महाविद्या सुखप्रदा ॥१२॥ खड्गमुण्डधराकाली सर्व्वाङ्गमभितोऽवतु । क्रीं हूं ह्रीं त्र्यक्षरी पातु चामुण्डा हृदयम्मम ॥१३॥ ऐं हूं ओं ऐं स्तनद्वन्द्वं ह्रीं फट् स्वाहा ककुत्स्थलम् । अष्टाक्षरी महाविद्या भुजौ पातु सकर्तृका ॥ १४ ॥ क्रीं क्रीं हूं हूं ह्रीं ह्रींकारी पातु षडक्षरी मम । क्रीं नाभिम्मध्यदेशञ्च दक्षिणे कालिकाऽवतु ॥१५॥ क्रीं स्वाहा पातु पृष्ठञ्च कालिका सा दशाक्षरी । क्रीं मे गुह्यं सदा पातु कालिकायै नमस्ततः ॥१६॥ सप्ताक्षरी महाविद्या सर्वतन्त्रेषु गोपिता । ह्रीं ह्रीं दक्षिणे कालिके हूं हूं पातु कटिद्वयम् ॥१७॥ काली दशाक्षरी विद्या स्वाहा मामूरुयुग्मकम् । ॐ क्रीं क्रीं मे स्वाहा पातु कालिका जानुनी सदा ॥१८॥ काली हृन्नामविद्येयञ्चतुर्वर्गफलप्रदा । क्रीं ह्रीं ह्रीं पातु सा गुल्फन्दक्षिणे कालिकाऽवतु ॥१९॥ क्रीं हूं ह्रीं स्वाहा पदम्पातु चतुर्दशाक्षरी मम । खड्गमुण्डधरा काली वरदाभयधारिणी ॥२०॥ विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु । कालीकपालिनी कुल्ला कुरुकुल्लाविरोधिनी ॥२१॥ विप्रचित्ता तथोग्रोग्रप्रभादीप्ता घनत्विषा । नीला घना बलाका च मात्रा मुद्रामिता च माम् ॥२२॥ एताः सर्वाः खड्गधरा मुण्डमालाविभूषणाः । रक्षन्तु दिग्विदिक्षु मां ब्राह्मी नारायणी तथा ॥२३॥ माहेश्वरी च चामुण्डा कौमारी चाऽपराजिता । वाराही नारसिंही च सर्वाश्चामितभूषणाः ॥२४॥ रक्षन्तु स्वायुधैर्दिक्षु विदिक्षु मां यथा तथा । इति ते कथितन्दिव्यं कवचम्परमाद्भुतम् ॥२५॥ श्रीजगन्मङ्गलन्नाम महाविद्यौघ-

विग्रहम् । त्रैलोक्याकर्षणम्ब्रह्मन् ! कवचं मन्मुखोदितम् ॥२६॥ गुरुपूजाम्विधायाऽथ विधिवत्प्रपठेत्ततः । कवचन्त्रिः सकृद्वाऽपि यावज्जीवञ्च वा पुनः ॥२७॥ एतच्छतार्द्धमावृत्या त्रैलोक्यविजयी भवेत् । त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ॥२८॥ महाकविर्भवेन्मासं सर्वसिद्धीश्वरो भवेत् । पुष्पाञ्जलीन्कालिकायै मूलेनैवाऽर्पयेत्सकृत् ॥२६॥ शतवर्षसहस्राणाम्पूजायाः फलमाप्नुयात् । भूर्ज्जे विलिखितञ्चैतत्स्वर्णस्थं धारयेद्यदि ॥३०॥ विशाखायान्दक्षबाहौ कण्ठे वा धारयेद्यदि । त्रैलोक्यम्मोहयेत्क्रोधात्त्रैलोक्यञ्चूर्णयेत्क्षणात् ॥ ३१ ॥ पुत्रवान्धनवाञ्छ्रीमान्नाना विद्यानिधिर्भवेत् । ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रस्पर्शनात्ततः ॥३२॥ नाशमायाति या नारी वन्ध्या वाऽमृतपुत्रिणी । बह्वपत्या जीवतोका भवत्येव न संशयः ॥३३॥ न देयम्परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः । शिष्येभ्यो भक्तियुक्तेभ्यो ह्यन्यथा मृत्युमाप्नुयात् ॥३४॥ स्पर्द्धामूद्धूय कमला वाग्देवी मन्दिरे सुखे । पौत्रान्तं स्थैर्य्यमास्थाय निवसत्येव निश्चितम् ॥३५॥ इदङ्कवचमज्ञात्वा यो भजेद्घोरदक्षिणाम् । शतलक्षम्प्रजप्त्वाऽपि तस्य विद्या न सिध्यति । सहस्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥३५॥

॥ इति श्रीमहाकालीकवचं समाप्तम् ॥

---

# अथ हृदयम्

श्रीमहाकाल उवाच ।

महाकौतूहलस्तोत्रं हृदयाऽऽख्यं महोत्तमम् । शृणु प्रिये ! महागोप्यन्दक्षिणायाः सुगोपितम् ॥ १ ॥ अवाच्यमपि वक्ष्यामि तव प्रीत्या प्रकाशितम् । अन्येभ्यः कुरु गोप्यञ्च सत्यं सत्यञ्च शैलजे ! ॥ २ ॥ श्री देव्युवाच । कस्मिन् युगे समुत्पन्नं केन स्तोत्रं कृतम्पुरा । तत्सर्व्वं कथ्यतां शम्भो ! महेश्वर ! दयानिधे ॥ ३ ॥ श्री-

धिपः कुबेरोऽपि सुरेशोऽभूच्छचीपतिः ॥ ६ ॥ एवं हि सकला देवाः सर्वसिद्धीश्वराः प्रिये। श्रीजगन्मङ्गलस्याऽस्य कवचस्य ऋषिः शिवः ॥ ७ ॥ छन्दोऽनुष्टुब्देवता च कालिका दक्षिणेरिता। जगतान्मोहने दुष्टविजये भुक्तिमुक्तिषु ॥ ८ ॥ योषिदाकर्षणे चैव विनियोगः प्रकीर्त्तितः। शिरो मे कालिका पातु क्रीङ्कारैकाक्षरी परा ॥ ९ ॥ क्रीं क्रीं क्रीं मे ललाटञ्च कालिका खड्गधारिणी। हूं हूं पातु नेत्रयुगं ह्रीं ह्रीं पातु श्रुती मम ॥१०॥ दक्षिणे कालिका पातु घ्राणयुग्मम्महेश्वरी। क्रीं क्रीं क्रीं रसनाम्पातु हूं हूं पातु कपोलकम् ॥११॥ वदनं सकलम्पातु ह्रीं ह्रीं स्वाहा स्वरूपिणी। द्वाविंशत्यक्षरी स्कन्धौ महाविद्या सुखप्रदा ॥१२॥ खड्गमुण्डधराकाली सर्वाङ्गमभितोऽवतु। क्रीं हूं ह्रीं त्र्यक्षरी पातु चामुण्डा हृदयम्मम ॥१३॥ ऐं हूं ओं ऐं स्तनद्वन्द्वं ह्रीं फट् स्वाहा ककुत्स्थलम्। अष्टाक्षरी महाविद्या भुजौ पातु सकर्तृका ॥ १४ ॥ क्रीं क्रीं हूं हूं ह्रीं ह्रींकारी पातु षडक्षरी मम। क्रीं नाभिम्मध्यदेशञ्च दक्षिणे कालिकाऽवतु ॥१५॥ क्रीं स्वाहा पातु पृष्ठञ्च कालिका सा दशाक्षरी। क्रीं मे गुह्यं सदा पातु कालिकायै नमस्ततः ॥१६॥ सप्ताक्षरी महाविद्या सर्वतन्त्रेषु गोपिता। ह्रीं ह्रीं दक्षिणे कालिके हूं हूं पातु कटिद्वयम् ॥१७॥ काली दशाक्षरी विद्या स्वाहा मामूरुयुग्मकम्। ॐ क्रीं क्रीं मे स्वाहा पातु कालिका जानुनी सदा ॥१८॥ काली हृन्नामविद्येयञ्चतुर्वर्गफलप्रदा। क्रीं ह्रीं ह्रीं पातु सा गुल्फन्दक्षिणे कालिकाऽवतु ॥१९॥ क्रीं हूं ह्रीं स्वाहा पदम्पातु चतुर्दशाक्षरी मम। खड्गमुण्डधरा काली वरदाभयधारिणी ॥२०॥ विद्याभिः सकलाभिः सा सर्वाङ्गमभितोऽवतु। कालीकपालिनी कुल्ला कुरुकुल्लविरोधिनी ॥२१॥ विप्रचित्ता तथोग्रोग्रप्रभादीप्ता घनत्विषा। नीला घना बलाका च मात्रा मुद्रामिता च माम् ॥२२॥ एताः सर्वाः खड्गधरा मुण्डमालाविभूषणाः। रक्षन्तु दिग्विदिक्षु मां ब्राह्मी नारायणी तथा ॥२३॥ माहेश्वरी च चामुण्डा कौमारी चाऽपराजिता। वाराही नारसिंही च सर्वाश्चामितभूषणाः ॥२४॥ रक्षन्तु स्वायुधैर्दिक्षु विदिक्षु मां यथा तथा। इति ते कथितन्दिव्यं कवचम्परमाद्भुतम् ॥२५॥ श्रीजगन्मङ्गलन्नाम महाविद्यौघ-

विग्रहम् । त्रैलोक्याकर्षणम्ब्रह्मन् ! कवचं मन्मुखोदितम् ॥२६॥ गुरुपूजाम्विधायाऽथ विधिवत्प्रपठेत्ततः । कवचन्त्रिः सकृद्वाऽपि यावज्जीवञ्च वा पुनः ॥२७॥ एतच्छतार्द्धमावृत्या त्रैलोक्यविजयी भवेत् । त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसादतः ॥२८॥ महाकविर्भवेन्मासं सर्वसिद्धीश्वरो भवेत् । पुष्पाञ्जलीन्कालिकायै मूलेनैवाऽर्प्पयेत्सकृत् ॥२९॥ शतवर्षसहस्राणाम्पूजायाः फलमाप्नुयात् । भूर्ज्जे विलिखितञ्चैतत्स्वर्णस्थं धारयेद्यदि ॥३०॥ विशाखायान्दक्षबाहौ कण्ठे वा धारयेद्यदि । त्रैलोक्यम्मोहयेत्क्रोधात्त्रैलोक्यञ्चूर्णयेत्क्षणात् ॥ ३१ ॥ पुत्रवान्धनवाञ्छ्रीमान्नाना विद्यानिधिर्भवेत् । ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रस्पर्शनात्ततः ॥३२॥ नाशमायाति या नारी वन्ध्या वाऽमृतपुत्रिणी । बह्वपत्या जीवतोका भवत्येव न संशयः ॥३३॥ न देयम्परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः । शिष्येभ्यो भक्तियुक्तेभ्यो ह्यन्यथा मृत्युमाप्नुयात् ॥३४॥ स्पर्द्धामूद्धूय कमला वाग्देवी मन्दिरे सुखे । पौत्रान्तं स्थैर्य्यमास्थाय निवसत्येव निश्चितम् ॥३५॥ इदङ्कवचमज्ञात्वा यो भजेद्घोरदक्षिणाम् । शतलक्षम्प्रजप्त्वाऽपि तस्य विद्या न सिध्यति । सहस्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥३५॥

॥ इति श्रीमहाकालीकवचं समाप्तम् ॥

---

# अथ हृदयम्

श्रीमहाकाल उवाच ।

महाकौतूहलस्तोत्रं हृदयाऽऽख्यं महोत्तमम् । शृणु प्रिये ! महागोप्यन्दक्षिणायाः सुगोपितम् ॥ १ ॥ अवाच्यमपि वक्ष्यामि तव प्रीत्या प्रकाशितम् । अन्येभ्यः कुरु गोप्यञ्च सत्यं सत्यञ्च शैलजे ! ॥ २ ॥ श्री देव्युवाच । कस्मिन् युगे समुत्पन्नं केन स्तोत्रं कृतम्पुरा । तत्सर्व्वं कथ्यतां शम्भो ! महेश्वर ! दयानिधे ॥ ३ ॥ श्री-

महाकाल उवाच। पुरा प्रजापतेः शीर्षच्छेदनं कृतवानहम्। ब्रह्महत्याकृतैः पापैर्भैरवत्वम्ममाऽऽगतम् ॥ ४ ॥ ब्रह्महत्याविनाशाय कृतं स्तोत्रम्मया प्रिये ।। कृत्याविनाशकं स्तोत्रम्ब्रह्महत्यापहारकम् ॥ ५ ॥

ॐ अस्य श्री दक्षिणकाल्या हृदयस्तोत्रमन्त्रस्य श्रीमहाकालऋषिरुष्णिक्छन्दः श्रीदक्षिणकालिका देवता क्रीं बीजं, ह्रीं शक्तिः, नमः कीलकम् सर्वत्र सर्व्वदा जपे विनियोगः। ॐ क्रां हृदयाय नमः। ॐ क्रीं शिरसे स्वाहा। ॐ क्रूं शिखायै वषट्। ॐ क्रैं कवचाय हूम्। ॐ क्रौं नेत्रत्रयाय वौषट्। ॐ क्रः अस्त्राय फट्।

अथ ध्यानम्।

ध्यायेत्कालीम्महामायान्त्रिनेत्राम्बहुरूपिणीम्। चतुर्भुजां ललज्जिह्वां पूर्णचन्द्रनिभाननाम् ॥ १ ॥ नीलोत्पलदलप्रख्यां शत्रुसङ्घविदारिणीम्। नरमुण्डन्तथा खड्गं कमलं वरदं तथा ॥ २ ॥ बिभ्राणां रक्तवदनां दंष्ट्रालीङ्घोररूपिणीम्। अट्टाट्टहासनिरतां सर्वदा च दिगम्बराम् ॥ ३ ॥ शवासनस्थितां देवीम्मुण्डमालाविभूषिताम्। इति ध्यात्वा महादेवीं ततस्तु हृदयम्पठेत् ॥ ४ ॥ ॐ कालिकाघोररूपाद्या सर्वकामफलप्रदा। सर्व्वदेवस्तुता देवी शत्रुनाशं करोतु मे ॥ ५ ॥ ह्रीं ह्रीं स्वरूपिणी श्रेष्ठा त्रिषु लोकेषु दुर्लभा। तव स्नेहान्मयाख्यातन्न देयं यस्य कस्यचित् ॥६॥ अथ ध्यानम्प्रवक्ष्यामि निशामय परात्मिके।। यस्य विज्ञानमात्रेण जीवन्मुक्तो भविष्यति ॥ ७ ॥ नागयज्ञोपवीताञ्च चन्द्रार्द्धकृतशेखराम्। जटाजूटाञ्च सञ्चिन्त्य महाकालसमीपगाम् ॥८॥ एवन्न्यासादयः सर्वे ये प्रकुर्व्वन्ति मानवाः। प्राप्नुवन्ति च ते मोक्षं सत्यं सत्यं वरानने। ॥९॥ यन्त्रं शृणु परन्देव्याः सर्वार्थसिद्धिदायकम्। गोप्याद्गोप्यतरं गोप्यं गोप्याद् गोप्यतरम्महत् ॥१०॥ त्रिकोणम्पञ्चकञ्चाष्टकमलम्भूपुरान्वितम्। मुण्डपङ्क्तिञ्च ज्वालाञ्च कालियन्त्रं सुसिद्धिदम् ॥ ११ ॥ मन्त्रन्तुपूर्व्वङ्कथितन्धारयस्व सदा प्रिये !। देव्या दक्षिणकाल्यास्तु नाममालान्निशामय ॥१२॥ काली दक्षिणकाली च कृष्णरूपा परात्मिका। मुण्डमाली विशालाक्षी सृष्टिसंहारकारिका ॥१३॥ स्थितिरूपा महामाया योगनिद्रा

भगात्मिका। भगसर्पिः पानरता भगोद्योता भगाङ्गजा ॥१४॥ आद्या सदानवा घोरा महातेजाः करात्मिका। प्रेतवाहा सिद्धलक्ष्मीरनिरुद्धा सरस्वती ॥१५॥ एतानि नाममाल्यानि ये पठन्ति दिने दिने। तेषां दासस्य दासोऽहं सत्यं सत्यं महेश्वरि! ॥१६॥ कालीं कालहरां देवीं कङ्कालबीजरूपिणीम्। कालरूपाङ्कलातीता-ङ्कालिकां दक्षिणाम्भजे ॥१७॥ कुण्डगोलप्रियान्देवीं स्वयम्भूकुसुमे रताम्। रतिप्रि-याम्महारौद्रीं कालिकाम्प्रणमाम्यहम् ॥ १८ ॥ दूतीप्रियाम्महादूतीं दूतीयोगेश्वरी-म्पराम्। दूतीयोगोद्भवरतान्दूतीरूपान्नमाम्यहम् ॥१९॥ क्रीं मन्त्रेण जलं जप्त्वा सप्तधा सेचनेन तु। सर्व्वे रोगा विनश्यन्ति नाऽत्र कार्या विचारणा ॥२०॥ क्रीं स्वाहान्तैर्महामन्त्रैश्चन्दनं साधयेत्ततः। तिलकङ्क्रियते प्राज्ञैर्लोको वश्यो भवेत्सदा ॥२१॥ क्रीं हूं ह्रीं मन्त्रजप्तेन चाक्षतं सप्तभिः प्रिये!। महाभयविनाशश्च जायते नाऽत्र संशयः ॥२२॥ क्रीं ह्रीं हूं स्वाहा मन्त्रेण श्मशानाग्निञ्च मन्त्रयेत्। शत्रोर्गृहे प्रतिक्षिप्त्वा शत्रोर्मृत्युर्भविष्यति ॥२३॥ हूँ ह्रीं क्रीं चैव उच्चाटे पुष्पं संशोध्य सप्तधा। रिपूणाञ्चैव चोच्चाटन्नयत्येव न संशयः ॥२४॥ आकर्षणे क्रीं क्रीं क्रीं जप्त्वाऽक्षत-म्प्रतिक्षिपेत्। सहस्रयोजनस्था च शीघ्रमागच्छति प्रिये! ॥२५॥ क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं च कज्जलं शोधितन्तथा। तिलकेन जगन्मोहं सप्तधा मन्त्रमाचरेत् ॥२६॥ हृदयम्परमेशानि! सर्वपापहरम्परम्। अश्वमेधादिदानानां कोटिकोटिगुणोत्तरम् ॥ २७ ॥ कन्यादानादिदानानां कोटिकोटिगुणं फलम्। दूतीयागादियागानां कोटिकोटिफलं स्मृतम् ॥ २८ ॥ गङ्गादिसर्वतीर्थानां फलं कोटिगुणं स्मृतम्। एकधा पाठमात्रेण सत्यं सत्यं मयोदितम् ॥२९॥ कौमारी स्वेष्टरूपेण पूजाङ्कृत्वा विधानतः। पठेत्स्तोत्रम्महेशानि! जीवन्मुक्तः स उच्यते ॥३०॥ रजस्वलाभगन्दृष्ट्वा पठेदेकाग्रमानसः। लभते परमं स्थानं देवीलोके वरानने! ॥३१॥ महादुःखे महारोगे महासङ्कटके दिने। महाभये महाघोरे पठेत्स्तोत्रं महोत्तमम्। सत्यं सत्यं पुनः सत्यं गोपयेन्मातृजारवत् ॥३२॥

॥ इति श्रीकालीहृदयं समाप्तम् ॥

# अथोपनिषद्

अथ हैनाम्ब्रह्मरन्ध्रे ब्रह्मस्वरूपिणीमाप्नोति सुभगा कामरेफेन्दिरा समप्रिरूपिणी-मादौ तदन्यकर्त्तुर्बीजद्वयकूर्च्चबीजन्तद्धोम पष्ठस्वरबिन्दुमेलनं रूपन्तदनुभुवनाद्वय भुवनातु व्योमज्वलनेन्दिराशून्यमेलनरूपा दक्षिणे कालिके वेत्यभिमुखद्गता तदनुबीज सप्तकमुच्चार्य्य बृहद्भानुजायामुच्चरेत्। अयं सर्वमन्त्रोत्तमोत्तम इमं सकृज्जपन् स तु विश्वेश्वर स तु नारीश्वरः स तु वेदेश्वरः स सर्व्वगुरुः सर्वनमस्यः सर्वेषु वेदेष्व-धिष्ठितो भवति स सर्वेषु तीर्थेषु स्नातो भवति सर्वेषु यज्ञेषु दीक्षितो भवति स स्वयं सदाशिवः त्रिकोणन्त्रिकोणन्त्रिकोणम्पुनश्चैवन्त्रिकोणन्त्रिकोणन्ततो वसुदलं सार्द्ध-चन्द्रकेसरयुग्मशो विलिख्य सम्भूनम्भूपुरैकेन युतं सर्वज्ञेनाऽभ्यर्च्य तस्मिन्देवीदले रेखाया विन्यस्य ध्येया अभिनवजलदवदनाघनस्तनी कुटिलदंष्ट्रा शवासना वरा-भयखड्गमुण्डमण्डितहस्ता कालिका ध्येया कालीकपालिनी कुल्ला कुरुकुल्ला विरो-धिनी विप्रचित्तेति षट्कोणगाः, उग्रा उग्रप्रभादीप्तानीलाघनाबलाकामात्रा मुद्रामितेति नवकोणगाः इत्थम्पञ्चदशकोणगाः। ब्राह्मी नारायणी माहेश्वरी चामुण्डा कौमारी अपराजिता वाराही नारसिंहीत्यष्टपत्रगाः। चतुष्कोणगाश्च-त्वारो देवाः माधवरुद्रविनायकसौराः। चतुर्दिक्षु इन्द्रयमवरुणकुबेराः। देवीं सर्वाङ्गेनाऽऽदौ सम्पूज्य भगोदकेन तर्पणम्पञ्चमकारेण पूजनमेतस्याः सपर्यायाः किमधिकन्नो शक्यम्ब्रह्मादिपदं हेयं हेलया प्राप्नोति। एतस्या एकद्वित्रिक्रमेण मनवो भवन्ति नारिमित्रादिलक्षणमत्रवर्त्तते। अमुष्यमन्त्रपाठकस्य गतिरस्ति नान्यस्येह गति-रस्ति। एतस्यान्तारामनोर्दुर्गामनोर्वा सिद्धिः।। इदानीन्तु सर्वाः स्वप्रभूता अमितैव जागर्त्ति इमामसिताख्यामुपनिषदं यो वाऽधीते सोऽपुत्रः पुत्री भवति निर्द्धनो धना-यति धर्म्मार्थकाममोक्षाणाम्पात्रीयति। अन्यस्य वरदः दृष्ट्वा जगन्मोहयति क्रोधस्त-ज्जहाति गङ्गादितीर्थक्षेत्राणामग्निष्टोमादियज्ञाना फलभागीयति। इत्याथर्व्वणवेद-सौभाग्यकाण्डे कालिकोपनिषत् समाप्ता ॥

---

# अथ शतनाम

भैरव उवाच।

शतनाम प्रवक्ष्यामि कालिकाया वरानने! यस्य प्रपठनाद्वाग्मी सर्वत्र विजयी भवेत्॥ १॥ काली कपालिनी कान्ता कामदा कामसुन्दरी। कालरात्रिः कालिका च कालभैरवपूजिता॥ २॥ कुरुकुल्ला कामिनी च कमनीयस्वभाविनी। कुलीना कुलकर्त्री च कुलवर्त्मप्रकाशिनी॥ ३॥ कस्तूरी रसनीला च काम्या कामस्वरूपिणी। ककारवर्णनिलया कामधेनुः करालिका॥ ४॥ कुलकान्ता करालास्या कामार्त्ता च कलावती। कृशोदरी च कामाख्या कौमारी कुलपालिनी॥ ५॥ कुलजा कुलकन्या च कलहा कलपूजिता। कामेश्वरी कामकान्ता कुञ्जरेश्वरगामिनी॥ ६॥ कामदात्री कामहर्त्री कृष्णा चैव कपर्द्दिनी। कुमुदा कृष्णदेहा च कालिन्दी कुलपूजिता॥ ७॥ काश्यपी कृष्णमाता च कुलिशाङ्गी कला तथा। क्रींरूपा कुलगम्या च कमला कृष्णपूजिता॥ ८॥ कृशाङ्गी किन्नरी कर्त्री कलकण्ठी च कार्त्तिकी। कम्बुकण्ठी कौलिनी च कुमुदा कामजीविनी॥ ९॥ कुलस्त्री कीर्त्तिका कृत्या कीर्तिश्च कुलपालिका। कामदेवकला कल्पलता कामाङ्गवर्द्धिनी॥ १०॥ कुन्ता च कुमुदप्रीता कदम्बकुसुमोत्सुका। कादम्बिनी कमलिनी कृष्णानन्दप्रदायिनी॥ ११॥ कुमारीपूजनरता कुमारीगणशोभिता। कुमारीरञ्जनरता कुमारीव्रतधारिणी॥१२॥ कङ्काली कमनीया च कामशास्त्रविशारदा। कपालखट्वांगधरा कालभैरवरूपिणी॥१३॥ कोटरी कोटराक्षी च काशी कैलासवासिनी! कात्यायनी कार्यकरी काव्यशास्त्रप्रमोदिनी॥ १४॥ कामाकर्षणरूपा च कामपीठनिवासिनी। कंगिनी काकिनी क्रीड़ा कुत्सिता कलहप्रिया॥ १५॥ कुण्डगोलोद्भवप्राणा कौशिकी कीर्त्तिवर्द्धिनी। कुम्भस्तनी कटाक्षा च काव्या कोकनदप्रिया॥१६॥ कान्तारवासिनी कान्तिः कठिना कृष्णवल्लभा। इति ते कथितं देवि! गुह्याद्गुह्यतरम्परम्॥१७॥ प्रपठेद्य इदं नित्यं कालीनामशताष्टकम्। त्रिपु लोकेषु

देवेशि। तस्मादसाध्यञ्च विद्यते ॥१८॥ प्रातःकाले च मध्याह्ने सायाह्ने च सदा निशि। यः पठेत्परया भक्त्या कालीनामशताष्टकम् ॥१९॥ कालिका तस्य गेहे च संस्थानं कुरुते सदा। शून्यागारे श्मशाने च प्रान्तरे जलमध्यतः ॥२०॥ वह्निमध्ये च संग्रामे तथा प्राणस्य संशये। शताष्टकजपन्मन्त्री लभते क्षेममुत्तमम् ॥२१॥ कालीं संस्थाप्य विधिवत्स्तुत्वा नामशताष्टकैः। साधकः सिद्धिमाप्नोति कालिकायाः प्रसादतः ॥२२॥

॥ इति कालिकाष्टोत्तरशतनाम समाप्तम् ॥

---

# अथ दुर्गाकवचम्

शृणु देवि! प्रवक्ष्यामि कवचं सर्वसिद्धिदम्। पठित्वा पाठयित्वा च नरोमुच्यते सङ्कटात् ॥१॥ अज्ञात्वा कवचं देवि! दुर्गामन्त्रञ्च यो जपेत्। स नाऽऽप्नोति फलन्तस्य परञ्च नरकं व्रजेत्। उमादेवी शिरः पातु ललाटे शूलधारिणी। चक्षुषी खेचरी पातु कर्णौ चत्वरवासिनी ॥ ३ ॥ सुगन्धा नासिके पातु वदनं सर्वधारिणी। जिह्वाञ्च चण्डिका देवी ग्रीवां सौभद्रिका तथा ॥४॥ अशोकवासिनी चेतो द्वौ बाहू वज्रधारिणी। हृदयं ललितादेवी उदरं सिंहवाहिनी ॥ ५ ॥ कटिम्भगवती देवी द्वावूरू विन्ध्यवासिनी। महाबला च जङ्घे द्वे पादौ भूतलवासिनी ॥ ६ ॥ एवं स्थिताऽसि देवि! त्वं त्रैलोक्ये रक्षणात्मिका। रक्ष मां सर्वगात्रेषु दुर्गे! देवि! नमोऽस्तु ते ॥७॥

॥ इति श्रीदुर्गाकवचं सम्पूर्णम् ॥

---

# दुर्गाष्टोत्तरशतनामस्तोत्रम्

ईश्वर उवाच

शतनाम प्रवक्ष्यामि शृणुष्व कमलानने!। यस्यप्रसादमात्रेण दुर्गा प्रीता भवेत्सती ॥ १ ॥ ॐ सती साध्वी भवप्रीता भवानी भवमोचनी। आर्या दुर्गा जया चाद्या त्रिनेत्रा शूलधारिणी ॥ २ ॥ पिनाकधारिणी चित्रा चण्डघण्टा महातपाः। मनोबुद्धिरहङ्कारा चित्तरूपा चिताचितिः ॥३॥ सर्वमन्त्रमयी सत्या सत्यानन्दस्वरूपिणी। अनन्ता भाविनी भाव्या भवा भव्या सदागतिः ॥ ४ ॥ शाम्भवी देवमाता च चिन्ता रत्नप्रिया सदा। सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी ॥ ५ ॥ अपर्णाऽनेकवर्णा च पाटला पाटलावती। पट्टाम्बरपरीधाना कलमञ्जीररञ्जिनी ॥ ६ ॥ अमेयविक्रमा क्रूरा सुन्दरी कुल (सुर) सुन्दरी। वनदुर्गा च मातङ्गी मतङ्गमुनिपूजिता ॥ ७ ॥ ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा। चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः ॥ ८ ॥ विमलोत्कर्षिणी ज्ञाना क्रिया नित्या च बुद्धिदा। बहुला बहुलप्रेमा सर्ववाहनवाहना ॥ ९ ॥ निशुम्भशुम्भहननी महिषासुरमर्दिनी। मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी ॥१०॥ सर्वाऽसुरविनाशा च सर्वदानवघातिनी। सर्वशास्त्रमयी सत्या(विद्या)सर्वास्त्रधारिणी तथा ॥११॥ अनेकशस्त्रहस्ता च अनेकास्त्रस्य(वि)धारिणी। कुमारी चैककन्या च कैशोरी(कौमारी)युवती यतिः ॥१२॥ अप्रौढा चैव प्रौढा च वृद्धमाता बलप्रदा। महोदरी मुक्तकेशी घोररूपा महाबला ॥१३॥ अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी। नारायणी भद्रकाली विष्णुमाया जलोदरी ॥१४॥ शिवदूती कराली च अनन्ता परमेश्वरी। कात्यायनी च सावित्री प्रत्यक्षा ब्रह्मवादिनी ॥१५॥ य इदं प्रपठेन्नित्यं दुर्गानामशताष्टकम्। नासाध्यं विद्यते देवि! त्रिषु लोकेषु पार्वति! ॥१६॥ धनं धान्यं सुतं जायां हयं हस्तिनमेव च। चतुर्वर्गं तथा चान्ते लभेन्मुक्तिञ्च शाश्वतीम् ॥१७॥ कुमारीम्पूजयित्वा तु ध्यात्वा देवीं सुरेश्वरीम्। पूजयेत्परया भक्त्या पठेन्नामशताष्टकम् ।१८

तस्य सिद्धिर्भवेद्देवि। सर्वं सुरवरैरपि। राजानो दासता यान्ति राज्यश्रियमवाप्नुयात् ॥१९॥ गोरोचनालक्तककुङ्कुमेन सिन्दूरकर्पूरमधुत्रयेण। विलिख्य यन्त्रं विधिना विधिज्ञो भवेत्सदा धारयते(ना) पुरारि ॥२०॥ भौमावास्या निशामग्रे (भागे) चन्द्रे शतभिषा गते। विलिख्य प्रपठेत्स्तोत्रं स भवेत्सम्पदाम्पदम् ॥२१॥

॥ इति श्रीदुर्गाष्टोत्तर शतनामस्तोत्रं सम्पूर्णम् ॥

---

## श्रीमहामहिमामयीतारास्तोत्रम्

मातर्नीलसरस्वति। प्रणमतां सौभाग्यसम्पत्प्रदे, प्रत्यालीढपदस्थिते शवहृदि स्मेराननाम्भोरुहे। फुल्लेन्दीवरलोचने त्रिनयने कर्त्री कपालोत्पले, खड्गञ्चादधती त्वमेवशरणन्त्वामीश्वरीमाश्रये ॥१॥ वाचामीश्वरि। भक्तकल्पलतिके सर्वार्थसिद्धीश्वरि। गद्यप्राकृतपद्यजातरचनासर्व्वार्थसिद्धिप्रदे। नीलेन्दीवरलोचनत्रययुते कारुण्यवारा निधे, सौभाग्यामृतवर्द्धनेन कृपया सिञ्च त्वमस्मादृशम् ॥ २ ॥ खर्व्वे गर्व्वसमूहपूरिततनो सर्प्पादिवेषोज्ज्वले, व्याघ्रत्वक्परिवीतसुन्दरकटिव्याधूतघण्टाङ्किते। सद्यः कृत्तगलद्रज.परिमिलन्मुण्डद्वयीमूर्द्धजग्रन्थिश्रेणिनृमुण्डदाम ललिते भीमे। भयन्नाशय ॥ ३ ॥ मायानङ्गविकाररूपललना बिन्द्वर्द्धचन्द्राम्बिके, हूं फट्कारमयि। त्वमेव शरणम्मन्त्रात्मिके मादृशः। मूर्त्तिस्ते जननि। त्रिधामघटिता स्थूलातिसूक्ष्मा परा, वेदानान्न हि गोचरा कथमपि प्राज्ञैर्नुतामाश्रये ॥ ४ ॥ त्वत्पादाम्बुजसेवया सुकृतिनो गच्छन्ति सायुज्यतां, तस्याः श्रीपरमेश्वरत्रिनयनब्रह्मादिसाम्यात्मनः। संसाराम्बुधिमज्जनेऽपटुतनुर्देवेन्द्रमुख्यान्सुरान्, मातस्त्वत्पदसेवने हि विमुखान् किं मन्दधीः सेवते ॥ ५ ॥ मातस्त्वत्पदपङ्कजद्वयरजो मुद्राङ्ककोटीरिणस्ते देवा जयसंगरे विजयिनो निःशङ्कमङ्के गताः। देवोऽहम्भुवने न मे सम इति स्पर्द्धाम्वहन्तः परान्तत्तुल्यान्नियतं यथा शुचिरवी नाशन्व्रजन्ति स्वयम् ॥ ६ ॥

त्वन्नामस्मरणात्पलायनपरा द्रष्टुञ्च शक्ता न ते भूतप्रेतपिशाचराक्षसगणा यक्षाश्च नागाधिपाः। दैत्या दानवपुङ्गवाश्च खचरा व्याघ्रादिका जन्तवो, डाकिन्यः कुपितान्तकश्चमनुजो मातः क्षणम्भूतले ॥ ७ ॥ लक्ष्मीः सिद्धिगणश्च पादुकमुखाः सिद्धास्तथा वैरिणां स्तम्भश्चापि वरांगने गजघटास्तम्भस्तथा मोहनम्। मातस्त्वत्पदसेवया खलु नृणां सिध्यन्ति ते ते गुणाः क्लान्तः कान्तमनोभवस्य भवति क्षुद्रोऽतिवाचस्पतिः ॥ ८ ॥ ताराष्टकमिदम्पुण्यं भक्तिमान् यः पठेन्नरः। प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ॥ ९ ॥ लभते कवितां विद्यां सर्वशास्त्रार्थविद्भवेत्। लक्ष्मीमनश्वराम्प्राप्य भुक्त्वा भोगान्यथेप्सितान् ॥ १० ॥ कीर्त्तिङ्कान्तिञ्च नैरुज्यम्प्राप्याऽन्ते मोक्षमाप्नुयात्॥११॥

॥ इति नीलतन्त्रे तारास्तोत्रं समाप्तम् ॥

---

## अथ ताराकवचम्

ईश्वर उवाच।

कोटितन्त्रेषु गोप्या हि विद्याऽतिभयमोचिनी। दिव्यं हि कवचन्तस्याः शृणुष्व सर्वकामदम् ॥१॥ ताराकवचस्याऽक्षोभ्यऋषिस्त्रिष्टुप्छन्दो भगवती तारा देवता सर्वमन्त्रसिद्धये विनियोगः। ॐ प्रणवो मे शिरः पातु ब्रह्मरूपा महेश्वरी। ह्रींकारः पातु ललाटे बीजरूपा महेश्वरी ॥२॥ स्त्रींकारः पातु वदने लज्जारूपा महेश्वरी। हूंकारः पातु हृदये भवानी शक्तिरूपधृक् ॥३॥ फट्कारः पातु सर्वांगेः सर्वसिद्धिफलप्रदा। खर्वा माम्पातु देवेशी गण्डयुग्मे भयापहा ॥४॥ नीला माम्पातु देवेशी गण्डयुग्मे भयापहा। लम्बोदरी सदा पातु कर्णयुगमम्भयापहा ॥५॥ व्याघ्रचर्म्मावृतकटिः पातु देवी शिवप्रिया। पीनोन्नतस्तनी पातु पार्श्वयुग्मे महेश्वरी ॥६॥ रक्तवर्त्तुलनेत्रा च कटिदेशे सदाऽवतु। ललज्जिह्वा सदा पातु नाभौ माम्भुवनेश्वरी ॥ ७ ॥ करालास्या

सदा पातु लिङ्गे देवी हरप्रिया। पिङ्गोग्रैकजटा पातु जङ्घायाम्विघ्ननाशिनी ॥ ८ ॥ खड्गहस्ता महादेवी जानुचक्रे महेश्वरी। नीलवर्णा सदा पातु जानुनी सर्व्वदा मम ॥ ९ ॥ नागकुण्डलधर्त्री च पातु पादयुगे ततः। नागहारधरा देवी सर्वाङ्गम्पातु सर्वदा ॥१०॥ नागाङ्गदधरा देवी पातु पाण्डवदेशतः। चतुर्भुजा सदा पातु गमने शत्रुनाशिनी ॥११॥ खड्गहस्ता महादेवी पातु माम्विजयप्रदा। नीलाम्बरधरा देवी पातु माम्विघ्ननाशिनी ॥१२॥ कर्त्तृहस्ता सदा पातु विवादे शत्रुमध्यतः। ब्रह्मरूपधरादेवी सङ्ग्रामे पातु सर्वदा ॥१३॥ नागकङ्कणधर्त्री च भोजने पातु सर्वदा। शवकर्णा महादेवी शयने पातु सर्वदा ॥१४॥ वीरासनधरादेवी निद्रायाम्पातु सर्वदा। धनुर्व्वाणधरा देवी पातु माम्विघ्नसङ्कुले ॥१५॥ नागाञ्चितकटिः पातु देवी मा सर्वकर्मसु ॥१६॥ छिन्नमुण्डधरादेवी कानने सर्वदाऽवतु। चितामध्यस्थिता देवी मारणे पातु सर्वदा ॥१७॥ द्वीपिचर्म्मधरा देवी पुत्रदारधनादिषु। अलङ्कारान्विता देवी पातु मा हरवल्लभा ॥१८॥ रक्ष रक्ष नदीकुञ्जे हुं हुं हुं फट् समन्विते। बीजरूपा महादेवी पर्व्वते पातु सर्व्वदा ॥१९॥ मणिधरिवज्रिणी देवी महाप्रतिसरे तथा। रक्ष रक्ष सदा हूं हूं ॐ ह्रीं स्वाहा महेश्वरी ॥२०॥ पुष्पकेतुराजार्हते कानने पातु सर्व्वदा। ॐ वज्रपुष्पे हूं फट् च पाण्डवे पातु सर्व्वदा ॥२१॥ पुष्पे पुष्पे महापुष्पे पातु पुत्रान्महेश्वरी। ॐ स्वाहा शक्तिसंयुक्ता दारान्रक्षतु सर्वदा ॥२२॥ ॐ पवित्र वज्रभूमे हूं फट् स्वाहा समन्विता। पूरिका पातु मान्देवी सर्वविघ्नविनाशिनी ॥२३॥ आसुरेखे वज्ररेखे हूं फट् स्वाहा समन्विता। पाताले पातु मान्देवी नागिनी मानसञ्चिता ॥२४॥ ह्रींकारी पातु पूर्वे मां शक्तिरूपा महेश्वरी। स्त्रींकारी दक्षिणे पातु स्त्रीरूपा परमेश्वरी ॥२५॥ हूं स्वरूपा महामाया पातु मा क्रोधरूपिणी। कस्वरूपा महामाया पश्चिमे पातु सर्वदा ॥२६॥ उत्तरे पातु मान्देवी ढस्वरूपा हरिप्रिया। मध्ये माम्पातु देवेशी हूं स्वरूपा नगात्मजा ॥२७॥ नीलवर्णा सदा पातु सर्वत्र वाग्भवी सदा। तारिणी पातु भवने सर्वैश्वर्य्यप्रदायिनी ॥२८॥ विद्यादानरता देवी पातु वक्त्रे सरस्वती। शास्त्रे वादे च सङ्ग्रामे जले च विषमे गिरौ ॥२९॥ भीमरूपा सदा

पातु श्मशाने भयनाशिनी। भूतप्रेतालये घोरे दुर्गे माम्भीपणाऽवतु ॥३०॥ पातु नित्यम्महेशानी सर्वत्र शिवदूतिका। कवचस्य च माहात्म्यान्नाऽहं वर्षशतैरपि ॥३१॥ शक्नोमि कथितुं देवि! भवेत्तस्य फलन्तु यत्। पुत्रदारेषु बन्धूनां सर्वदेशे च सर्वदा ॥३२ न विद्यते भयन्तस्य नृपपूज्यो भवेच्च सः। शुचिर्भूत्वाऽशुचिर्वाऽपि कवचं सर्वकामदम् ॥३३॥ प्रपठन्वास्मरन्मर्त्यो दुःखशोकविवर्जितः। सर्वशास्त्रे महेशानि! कविराड्भवति ध्रुवम् ॥३४॥ सर्ववागीश्वरो मर्त्यो लोकवश्यो धनेश्वरः। रणे द्यूते विवादे च जयस्तस्य भवेद्ध्रुवम् ॥३५॥ पुत्रपौत्रान्वितो मर्त्यो विलासी सर्वयोषिताम्। शत्रवो दासतां यान्ति सर्वेषाम्वल्लभः सदा ॥३६॥ गर्वी खर्वी भवत्येव वादी ज्वलति दर्शनात्। मृत्युश्च वश्यतां याति दासस्तस्याऽवनीश्वरः ॥३७॥ प्रसङ्गात्कथितं सर्वङ्कवचं सर्वकामदम्। प्रपठन्वा स्मरन्मर्त्यः शापानुग्रहणे क्षमः ॥३८॥ आनन्दवृन्दसिन्धूनामधिपः कविराड् भवेत्। सर्वयोगीश्वरो मर्त्यो लोकबन्धुःसदा सुखी ॥३९॥ गुरोः प्रसादमासाद्य विद्याम्प्राप्य सुगोपिताम्। तत्राऽपि कवचन्देवि! दुर्लभम्भुवनत्रये ॥४०॥ गुरुर्देवो हरः साक्षात्पत्नी तस्य हरप्रिया। अभेदेन यजेद्यस्तु तस्य सिद्धिरदूरतः ॥४१॥ मन्त्राचारा महेशानि! कथिताः पूर्वतः प्रिये!। नाभौ ज्योतिस्तथा वक्त्रे हृदये परिचिन्तयेत् ॥४२॥ ऐश्वर्यं सुकवित्वञ्च रुद्रश्च सिद्धिदायकः। तन्दृष्ट्वा साधकन्देवि! लज्जायुक्ता भवन्ति ते ॥४३॥ स्वर्गे मर्त्ये च पाताले ये देवासुरसत्तमाः। प्रशंसन्ति सदा सर्वे तन्दृष्ट्वा साधकोत्तमम् ॥४४॥ विघ्नात्मानश्च ये देवाः स्वर्गे मर्त्ये रसातले। प्रशंसन्ति सदा सर्वे तन्दृष्ट्वा साधकोत्तमम् ॥४५॥ इति ते कथितन्देवि! मया सम्यक्प्रकीर्त्तितम्। भुक्तिमुक्तिकरं साक्षात् कल्पवृक्षस्वरूपकम् ॥४६॥ आसाद्याऽद्य गुरुम्प्रसाद्य य इदङ्कल्पद्रुमालम्बनम्, मोहेनाऽपि मदेन वा न हि जनो जाड्येन वा मुह्यति ॥ सिद्धोऽसौ भुवि सर्वदुःखविपदाम्पारम्प्रयात्यन्तके, मित्रन्तस्य नृपश्च देवि! विपदो नश्यन्ति तस्याऽऽशु च ॥४७॥ तद्गात्रम्प्राप्य शस्त्राणि ब्रह्मास्त्रादीनि वै भुवि। तस्य गेहे स्थिरा लक्ष्मीर्वाणी वक्त्रे वसेद्ध्रुवम् ॥४८॥ इदङ्कवचमज्ञात्वा तारां

यो भजते नरः। अल्पायुर्निर्द्धनो मूर्खो भवत्येव न संशयः ॥४६॥ लिखित्वा धारयेद्यस्तु कण्ठे वा मस्तके भुजे। तस्य सर्वार्थसिद्धिः स्याद्यद्यन्मनसि वर्त्तते ॥५०॥ गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा। यावकैर्वा महेशानि! लिखेन्मन्त्रम्विशेषतः ॥५१॥ अष्टम्याम्मङ्गलदिने चतुर्दश्यामथाऽपि वा। सन्ध्यायान्देवदेवेशि! लिखेन्मन्त्रं समाहितः ॥५२॥ मघायां श्रवणायाम्वा रेवत्याञ्च विशेषतः। सिंहराशौ गते चन्द्रे कर्कटस्थे दिवाकरे ॥५३॥ मीनराशौ गुरौ याते वृश्चिकस्थे शनैश्चरे। लिखित्वा धारयेद्यस्तु साधको भक्तिभावतः। अचिरात्तस्य सिद्धिः स्यान्नाऽत्रकार्या विचारणा ॥५४॥ वादी मूकति दूषकःस्तवयति क्षोणीपतिर्दासति, गर्व्वी खर्व्वति सर्वविच्च जडति वैश्वानरः शीतति। आचाराङ्कवसिद्धिरूपमपरं सिद्धो भवेद्दुर्लभं त्वाम्वन्दे भयभीतिभञ्जनकरीं नीलां गिरीशप्रियाम् ॥५५॥

॥ इति श्रीनीलतन्त्रे परमरहस्यकमुग्रताराकवचं समाप्तम् ॥

---

## श्रीताराहृदयम्

श्रीशिव उवाच।

शृणु पार्वति! भद्रन्ते लोकानां हितकारकम्। कथ्यते सर्वदा गोप्यन्ताराहृदयमुत्तमम् ॥ १ ॥ श्रीपार्वत्युवाच। स्तोत्रं कथं समुत्पन्नं कृतं केन पुरा प्रभो।। कथ्यतां सर्वं सद्वृत्तङ्कृपा कृत्वा ममोपरि ॥ २ ॥ श्रीशिव उवाच। रणे देवासुरे पूर्वङ्कृतमिन्द्रेण सुप्रिये।। दुष्टशत्रुविनाशार्थम्बलवृद्धियशस्करम् ॥३॥ ओङ्मस्य श्रीमदुग्रताराहृदयस्तोत्रमन्त्रस्य श्रीभैरवऋषिरनुष्टुप्छन्दः श्रीमदुग्रतारादेवता स्त्रीं बीजं हूं शक्तिः नमः कीलकं सकलशत्रुविनाशार्थे पाठे विनियोगः।

ॐ स्त्रीं हृदयाय नमः ॐ ह्रीं शिरसे स्वाहा।

ॐ हूं शिखायै वषट् ॐ त्रीं कवचाय हूम् ।

ॐ ऐं नेत्रत्रयाय वौषट् ॐ हं सः अस्त्राय फट्

अथ ध्यानम् ।

ध्यायेत्कोटिदिवाकरद्युतिनिभां बालेन्दुयुक्छेखरां, रक्ताङ्गीं रसनां सुरक्तवसनां पूर्णेन्दुबिम्बाननाम् । पाशं कर्त्रिं महाङ्कुशादि दधतीं दोर्भिश्चतुर्भिर्युतां नानाभूषणभूषिताम्भगवतीं तारां जगत्तारिणीम् ॥

एवन्ध्यात्वा शुभान्तारां ततस्तु हृदयम्पठेत् । तारिणी तत्त्वनिष्ठानां सर्वतत्त्वप्रकाशिका ॥ १ ॥ रामाभिन्ना पराशक्तिः शत्रुनाशङ्करोतु मे । सर्वदा शत्रुसंरम्भे तारा मे कुरुताञ्जयम् । स्त्रीं त्रीं स्वरूपिणी देवी त्रिषु लोकेषु विश्रुता ॥ २ ॥ तव स्नेहान्मयाख्यातं न पशूनम्प्रकाशयताम् । शृणु देवि ! तव स्नेहात्तारानामानि तत्त्वतः ॥ ३ ॥ वर्णयिष्यामि गुप्तानि दुर्लभानि जगत्त्रये । तारिणी तरला तारा त्रिरूपा तरणी प्रभा ॥ ४ ॥ सत्त्वरूपा महासाध्वी सर्वसज्जनपालिका । रमणीया रजोरूपा जगत्सृष्टिकरी परा ॥ ५ ॥ तमोरूपा महामाया घोररावा भयानका । कालरूपा कालिकाख्या जगद्विध्वंसकारिका ॥ ६ ॥ तत्त्वज्ञानपरानन्दा तत्त्वज्ञानप्रदाऽनघा ॥ ७ ॥ रक्ताङ्गी रक्तवस्त्रा च रक्तमालाप्रशोभिता । सिद्धिर्लक्ष्मीश्च ब्रह्माणी महाकाली महालया ॥ ८ ॥ नामान्येतानि ये मर्त्याः सर्वदैकाग्रमानसाः । प्रपठन्ति प्रिये ! तेषां किङ्करत्वं करोम्यहम् । तारान्तारपरान्देवीं तारकेश्वरपूजिताम् । तारिणीम्भवपाथोधेरुग्रतारम्भजाम्यहम् ॥ ९ ॥ स्त्रीं ह्रीं हूं त्रीं फण्मन्त्रेण जलञ्जप्त्वाऽभिषेचयेत् ॥१०॥ सर्वे रोगाः प्रणश्यन्ति सत्यं सत्यं वदाम्यहम् । त्रीं स्वाहान्तैर्महामन्त्रैश्चन्दनं साधयेत्ततः ॥११॥ तिलकङ्कुरुते प्राज्ञो लोको वश्यो भवेत्प्रिये ! । स्त्रीं ह्रीं त्रीं स्वाहा मन्त्रेण श्मशानभस्म मन्त्रयेत् ॥१२॥ शत्रोर्गृहे प्रतिक्षिप्त्वा शत्रोर्मृत्युर्भविष्यति । ह्रीं हूं स्त्रीं फडन्तमन्त्रः पुष्पं संशोध्य सप्तधा ॥१३ उच्चाटनं नयत्याशु रिपूणां नैव संशयः । स्त्रीं त्रीं ह्रीं मन्त्रवर्येण अक्षताश्चाभिमन्त्रिताः ॥१४॥ तत्प्रतिक्षेपमात्रेण शीघ्रमायाति मानिनी । ( हंसः ॐ ह्रीं स्त्रीं हूं हं

स. ) इति मन्त्रेण जप्तेन शोधितङ्कङ्कजलम्प्रिये ॥१५॥ तस्यैव तिलकं कृत्वा जगन्मोहं समाचरेत् । ताराया हृदयन्देवि ! सर्व्वपापप्रणाशनम् ॥१६॥ वाजपेयादियज्ञानां कोटिकोटिगुणोत्तरम् । गङ्गादिसर्वतीर्थानां फलं कोटिगुणं स्मृतम् ॥१७॥ महादुःखे महारोगे सङ्कटे प्राणसंशये । महाभये महाघोरे पठेत्स्तोत्रम्महोत्तमम् ॥१८॥ सत्यं सत्यं मयोक्तन्ते पार्व्वति ! प्राणवल्लभे ! । गोपनीयम्प्रयत्नेन न प्रकाश्यमिदं क्वचित् ॥१९॥

॥ इति श्रीभैरवीतन्त्रे शिवपार्व्वतीसम्वादे श्रीमदुग्रताराहृदयं सम्पूर्णम् ॥

---

# अथ तारोपनिषद्

ॐ तत्सद्ब्रह्म तद्रूपम्प्रकृतिपरङ्गगनाभन्तत्परम्परमम्महासत्यं तदहं ह्रींकारं रक्तवर्णनाम्नाभिर्स्त्रींकारम्पिङ्गलाभं हूंकारं विशदाभम्मद्धृदयरूपं भूमण्डलम्फट्कारन्धूम्रवर्णम्मन खड्गमोङ्कारञ्चलद्रूपम्मन्मस्तकं वेदा मद्धस्ताश्चन्द्रार्कानला मन्नेत्रा दिवानक्तम्मत्पादौ सन्ध्या मत्कर्णौ सम्वत्सरो मदुदरो मदंष्ट्रा पङ्क्तौ मत्पार्श्वौ बारसंघो मदङ्गुल्यो दिशा मन्नखाः पावको मन्मुखं मही मद्रसना द्यौर्मन्मुखं गगनं मद्धृदयं भक्तिर्ममचर्म्म रसम्मद्रुधिरं बान्नं वासांसि फलानि निरहङ्काराऽस्थीनि सुधा मन्मज्जा स्थावराणि मद्रोमाणि पातालादिलोकौ मत्कुचौ ब्रह्मनादं मन्नाड्यो (ड्यः) ज्ञानम्मन्मनः क्षमाबुद्धिः शून्यम्मदासनं नक्षत्राणि मद्भूषणानि । एतद्वैराटकं मद्वपु मज्जलं मत्त्वं विन्दुस्वरूपम्महाकारस्वरूपञ्ज्योतिर्म्मयं विद्धि शिर उग्रतारामहोग्रानीलाद्यष्टमेकजटाम्महामायाम्प्रकृतिम्मां विदित्वा यो जपति मद्रूपाणि यो वेत्ति मन्मन्त्रं यो जपति मद्रूपकल्पिता यो जपति भगम्भजति निर्विकल्पः साधकः सदा मद्रूपो भवति । सर्वाणि कर्म्माणि साध्यानि निर्भयो भवति गुरुं नत्वा स्तुत्वा वस्त्रभूषणानि दत्त्वा इमामुपनिषद् विद्याम्प्राप्य मा यो जपति स जीवन्मुक्तो भवति । ॥ इत्यथर्व्वणवेदे सौभाग्यकाण्डे तारोपनिषत्समाप्ता ॥

# अथ ताराशतनामस्तोत्रम्

श्रीशिव उवाच ।

तारणी तरला तन्वी तारा तरुणवल्लरी । तीररूपा तरी श्यामा तनुक्षीण पयोधरा ॥ १ ॥ तुरीया तरला तीव्रगमना नीलवाहिनी । उग्रतारा जया चण्डी श्रीमदेकजटाशिरा ॥ २ ॥ तरुणी शाम्भवी छिन्नमाला च भद्रतारिणी । उग्रा उग्रप्रभा नीला कृष्णा नीलसरस्वती ॥ ३ ॥ द्वितीया शोभना नित्या नवीना नित्यनूतना । चण्डिका विजयाऽऽराध्या देवी गगनवाहिनी ॥ ४ ॥ अट्टहास्या करालास्या चरास्या दितिपूजिता । सगुणा सगुणाराध्या हरीन्द्रदेवपूजिता ॥ ५ ॥ रक्तप्रिया च रक्ताक्षी रुधिरास्यविभूषिता । बलिप्रिया बलिरता दुर्गा बलवती बला ॥ ६ ॥ बलप्रिया बलरता बलरामप्रपूजिता । अर्द्धकेशेश्वरी केशा केशवा सविभूषिता ॥ ७ ॥ पद्ममाला च पद्माक्षी कामाख्या गिरिनन्दिनी । दक्षिणा चैव दक्षा च दक्षजा दक्षिणे रता ॥ ८ ॥ वज्रपुष्पप्रिया रक्तप्रिया कुसुमभूषिता । माहेश्वरी महादेवप्रिया पञ्चविभूषिता ॥ ९ ॥ इडा च पिङ्गला चैव सुषुम्ना प्राणरूपिणी । गान्धारी पञ्चमी पञ्चाननादिपरिपूजिता ॥१०॥ तथ्यविद्या तथ्यरूपा तथ्यमार्गानुसारिणी । तत्त्वरूपा तत्त्वप्रिया तत्त्वज्ञानात्मिकाऽनघा ॥११॥ ताण्डवाचारसन्तुष्टा ताण्डवप्रियकारिणी । तालदानरता क्रूरतापिनी तरणि प्रभा ॥१२॥ त्रपायुक्ता त्रपामुक्ता तर्पिता तृप्तिकारिणी । तारुण्यभावसन्तुष्टा शक्तिभक्तानुरागिणी ॥१३॥ शिवासक्ता शिवरतिः शिवभक्तिपरायणा । ताम्रद्युतिस्ताम्ररागा ताम्रपात्रप्रभोजिनी ॥१४॥ बलभद्रप्रेमरता बलिभुग्बलिकल्पिनी । रामरूपा रामशक्ती रामरूपानुकारिणी ॥ १५ ॥ इत्येतत्कथितन्देवि ! रहस्यं परमाद्भुतम् । श्रुत्वा मोक्षमवाऽऽप्नोति तारा देव्याः प्रसादतः ॥१६॥ य इदं पठति स्तोत्रं तारास्तुतिरहस्यकम् । सर्वसिद्धियुतो भूत्वा विहरेत् क्षितिमण्डले ॥१७॥ तस्यैव मन्त्रसिद्धिः

स्यान्ममसिद्धिरनुत्तमा। भवत्येव महामाये सत्यं सत्यं न संशयः ॥१८॥ मन्दे मङ्गलवारे च यः पठेन्निशि संयतः। तस्यैव मन्त्रसिद्धिःस्याद्गाणपत्यंलभेत सः ॥१९॥ श्रद्धयाऽश्रद्धया वाऽपि पठेत्ताराहस्यकम्। सोऽचिरेणैव कालेन जीवन्मुक्तः शिवो भवेत् ॥२०॥ सहस्रावर्त्तनाद्देवि ! पुरश्चर्याफलं लभेत्। एवं सततयुक्ता ये ध्यायन्तस्त्वामुपासते। ते कृतार्था महेशानि ! मृत्युसंसारवर्त्मनः ॥२१॥

॥ इति श्रीस्वर्णमालातन्त्रे तारणीशतनामस्तोत्रं समाप्तम् ॥

---

# अथ षोडशीप्रकरणम्

बालार्कमण्डलाभासां चतुर्बाहुन्त्रिलोचनाम्।
पाशाङ्कुशशरांश्चापन्धारयन्तीं शिवाम्भजे ॥

## अथ षोडशीस्तोत्रम्

कल्याणवृष्टिभिरिवाऽमृतपूरिताभिर्लक्ष्मीस्वयम्वरणमङ्गलदीपिकाभिः। सेवाभिरम्ब ! तव पादसरोजमूले नाऽकारि किम्मनसि भक्तिमताञ्जनानाम् ॥१॥ एतावदेव जननि ! स्पृहणीयमास्ते त्वद्वन्दनेषु सलिलस्थसरोजनेत्रे !। सान्निध्यमुद्यदरुणाम्बुजसोदरस्य त्वद्विग्रहस्य सुधया परयाऽऽप्लुतस्य ॥ २ ॥ ईषत्प्रभावकलुषाः कति नाम सन्ति ब्रह्मादयः प्रतिदिनम्प्रलयाभिभूताः। एकः स एव जननि ! स्थिरसिद्धिरास्ते यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥ लब्ध्वा सकृत्त्रिपुरसुन्दरि ! तावकीनं कारुण्यकन्दलितकान्तिभरङ्कटाक्षम्। कन्दर्प्पभावसुभगास्त्वयि भक्तिभाजः सम्मोहयन्ति तरुणीम्भुवनत्रयेऽपि ॥४॥ ह्रीङ्कारमेव तव नाम गृणन्ति वा ये मातस्त्रिकोणनिलये ! त्रिपुरे ! त्रिनेत्रे !। त्वत्संस्मृतौ यमभटाभिभवं विहाय दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥ हन्तुः पुरामधिगलत्परिपूर्णमानः क्रूर कथं न भविता गरलस्य वेगः। नाऽऽश्वासनाय यदि मातरिदन्तवार्द्धदेहस्य शश्वदमृताप्लुत-

शीतलस्य ॥ ६ ॥ सर्वज्ञतां सदसि वाक्पटुतां प्रसूते देवि ! त्वदङ्घ्रिसरसीरुहयोः प्रणामः । किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रन्द्वे चामरे च महतीम्वसुधान्दधाति ॥७॥ कल्पद्रुमैरभिमतप्रतिपादनेषु कारुण्यवारिधिभिरम्ब ! भवत्कटाक्षैः । आलोकय त्रिपुरसुन्दरि ! मामनाथन्त्वय्येव भक्तिभरितन्त्वयि बद्धदृष्टिम् ॥८॥ हन्तेतरेष्वपि निधाय मनांसि चाऽन्ये भक्तिम्वहन्ति किल सा परदैवतेषु । त्वामेव देवि ! मनसाऽहमनुस्मरामि त्वामेव नौमि शरणञ्जननि ! त्वमेव ॥९॥ लक्षेषु सत्स्वपि तवाऽक्षिविलोकनानामालोकय त्रिपुरसुन्दरि ! मां कथञ्चित् । नूनम्मया च सदृशङ्करुणैकपात्रञ्जातो जनिष्यति जनो न च जायते वा ॥१०॥ ह्रीं ह्रीमिति प्रतिदिनञ्जपतान्तवाऽऽख्याङ्किन्नामदुर्ल्लभमिह त्रिपुराभिधाने ! । मालाकिरीटमदवारणमाननीयांस्तान्सेवते मधुमती स्वयमेव लक्ष्मीः ॥११॥ सम्पत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानकुशलानि सरोरुहाक्षि ! । त्वद्वन्दनानि दुरितोद्धरणोद्यतानि मामेव मातरनिशङ्कलयन्तु नाऽन्यम् ॥१२॥ कल्पोपसंहरणकल्पितताण्डवस्य देवस्य खण्डपरशोः परभैरवस्य । पाशाङ्कुशक्षचशरासनपुष्पवाणाः सा साक्षिणी विजयते तव मूर्त्तिरेका ॥ १३ ॥ लग्नं सदा भवतु मातरिदन्त्वदीयन्तेजःपरम्बहुलकुङ्कुमपङ्कशोणम् । भास्वत्किरीटममृतांशुकलावतंसं रूपं त्रिकोणमुदितम्परमामृताक्तम् ॥ १४ ॥ ह्रींकारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं स्तोत्रं यः प्रतिवासरन्तव पुरो मातर्ज्जपेन्मन्त्रवित् । तस्य क्षोणिभुजो भज(व)न्ति वशगा लक्ष्मीश्चिरं स्थायिनी वाणी निर्म्मलसूक्तिभावभरिता जागर्त्ति दीर्घं यशः ॥१५॥

॥ इति श्रीब्रह्मविरचितं षोडशीकल्याणीस्तोत्रं सम्पूर्णम् ॥

---

# अथ षोडशीकवचम्

देव्युवाच ।

देवदेव ! महादेव ! भक्तानाम्प्रीतिदायक ! । सुचिन्तयन्महादेव्याः कवचङ्कथयस्व मे ॥

श्रीमहादेव उवाच ।

शृणु देवि ! प्रवक्ष्यामि कवचन्देवदुर्लभम् । अप्रकाश्यम्परङ्गुह्यं साधकाऽभीष्टसिद्धिदम् ॥२॥ कवचस्य ऋषिर्देवि ! दक्षिणामूर्त्तिरव्ययः । छन्दः पङ्क्तिः समुद्दिष्टन्देवी त्रिपुरसुन्दरी ॥ ३ ॥ धर्म्मार्थकाममोक्षाणाम्विनियोगस्तु साधने । वाग्भवं कामबीजं च शक्तिबीजं सुरेश्वरि ! ॥ ४ ॥ वाग्भवम्पातुशीर्षे मां कामबीजन्तथा हृदि । शक्तिबीजं सदा पातु नाभौ गुह्ये च पादयोः ॥ ५ ॥ ऐं क्लीं सौं वदने पातु बाला मां सर्वसिद्धये । हसौः सकल ह्रीं पातु भैरवी कण्ठदेशतः ॥ ६ ॥ सुन्दरी नाभिदेशे च शीर्षे कामकला सदा । भ्रूनासयोरन्तराले महात्रिपुरसुन्दरी ॥ ७ ॥ ललाटे सुभगा पातु भगा मां कण्ठदेशतः । भगोदया तु हृदये उदरे भगसर्पिणी ॥८॥ भगमाला नाभिदेशे लिङ्गे पातु मनोभवा । गुह्ये पातु महादेवी राजराजेश्वरी शिवा ॥ ९ ॥ चैतन्यरूपिणी पातु पादयोर्ज्जगदम्बिका । नारायणी सर्व्वगात्रे सर्व्वकाये शुभङ्करी ॥१०॥ ब्रह्माणी पातु माम्पूर्वे दक्षिणे वैष्णवी तथा । पश्चिमे पातु वाराही उत्तरे च महेश्वरी ॥११॥ आग्नेय्याम्पातु कौमारी महालक्ष्मीस्तु नैर्ऋते । वायव्याम्पातु चामुण्डा इन्द्राणी पातु ईशके ॥१२॥ जले पातु महामाया पृथिव्यां सर्व्वमङ्गला । आकाशे पातु वरदा सर्वं त्रिभुवनेश्वरी ॥ १३ ॥ इदन्तु कवचन्देव्या देवानामपि दुर्ल्लभम् । यः पठेत्प्रातरुत्थाय शुचिः प्रयतमानसः ॥१४॥ नाधयो व्याधयस्तस्य न भयञ्च कचिद्भवेत् । न तु मारीभयन्तस्य पातकानाम्भयन्तथा ॥१५॥ न दारिद्र्यवशङ्गच्छेत्तिष्ठेन्मृत्युवशेन च । गच्छेत्स्थिरपुरन्देवि ! सत्यं सत्यं वदाम्यहम् ॥१६॥ इदङ्कवचमज्ञात्वा श्रीविद्यांयो जपेत्प्रिये ! । स नाऽऽप्नोति फलन्तस्य प्राप्नुयाच्छस्त्रघातनम् ॥१७॥

॥ इति सिद्धयामले श्रीषोडशीविद्याकवचं समाप्तम् ॥

# अथ षोडशीहृदयम्

कैलासे करुणाक्रान्ता परोपकृतिमानसा। पप्रच्छ करुणासिन्धुं सुप्रसन्नम्महेश्वरम् ॥१॥ श्रीपार्वत्युवाच॥ आगामिनि कलौ ब्रह्मन्! धर्म्मकर्म्मविवर्ज्जिताः। भविष्यन्ति जनास्तेषां कथं श्रेयो भविष्यति॥ २॥ श्रीशिव उवाच॥ शृणु देवि! प्रवक्ष्यामि तव स्नेहान्महेश्वरि!। दुर्लभन्त्रिषु लोकेषु सुन्दरीहृदयस्तवम् ॥३॥ ये नरा दुःखसन्तप्ता दारिद्र्यहतमानसाः। अस्यैव पाठमात्रेण तेषां श्रेयो भविष्यति ॥४॥ ओ३म्अस्य श्रीमहाषोडशीहृदयस्तोत्रमन्त्रस्य आनन्दभैरवऋषिर्दैवी गायत्रीच्छन्दः श्रीमहात्रिपुरसुन्दरी देवता ऐं बीजं सौः शक्तिः क्लीं कीलकं धर्म्मार्थकाममोक्षार्थे(जपे)विनियोगः। आनन्दभैरवऋषये नमः शिरसि। दैवीगायत्रीच्छन्दसे नमः मुखे। श्रीमहात्रिपुरसुन्दरीदेवतायै नमः हृदये। ऐं बीजाय नमः नाभौ। सौः शक्तये नमः स्वाधिष्ठाने। क्लीं कीलकाय नमः मूलाधारे। धर्म्मार्थकाममोक्षार्थे विनियोगः पादयोः। अथ कराङ्गन्यासौ। ऐं ह्रीं क्लीं अङ्गुष्ठाभ्यां नमः। क्लीं श्रीं सौः ऐं तर्ज्जनीभ्यां स्वाहा। सौः ॐ ह्रीं श्रीं मध्यमाभ्यां वषट्। ऐं क ए ई ल ह्रीं ह स कहल ह्रीं अनामिकाभ्यां हूम्। क्लीं सकल कनिष्ठाभ्यां वौषट्। सौः सौः ऐं क्लीं ह्रीं श्रीं करतलकरपृष्ठाभ्याम्फट्। एवमङ्गन्यासः। ध्यानम्। बालव्यक्तविभाकरामितनिभाम्भव्यप्रदाम्भारतीमीषत्फुल्लमुखाम्बुजस्मितकरैराशाभवान्धापहाम्। पाशं साभयमङ्कुशं च वरदं सम्बिभ्रतीम्भूतिदां भ्राजन्तीञ्चतुरम्बुजाकृतिकरैर्भक्त्या भजे षोडशीम् ॥ ५ ॥ सुन्दरी सकलकल्मषापहा कोटिकञ्जप्रियकाम्यकान्तिका। कोटिकल्पकृतपुण्यकर्म्मणा पूजनीयपदपुण्यपुष्करा ॥ ६॥ शर्वरीशसमसुन्दरानना श्रीशशक्तिसुकृताश्रयश्रिता। सज्जनानुशरणीयसत्पदा सङ्कटे सुरगणैः सुवन्दिता ॥७॥ या सुरासुररणे जवान्विता आजघान जगदम्बिकाऽजिता। ताम्भजामि जगतां जनिं जयां युद्धयुक्तदितिजान्सुदुर्जयान् ॥ ८ ॥ योगिनां हृदयसङ्गतां शिवां योगयुक्तमनसां यतात्मनाम्। जाग्रतीं जगति यत्नतो द्विजा यांजपन्ति हृदि तां भजा-

म्यहम् ॥ ९ ॥ कल्पकान्तु कलयन्ति कालिका यत्कलाकलिजनोपकारिका । कौलिकालिकुलिनाङ्घ्रिपङ्कजकान्ताम्भजामि कलिकल्मषापहाम् ॥१०॥ बालार्कानन्तशोचिर्न्निजतनुकिरणैर्दीपयन्तीं दिगन्तान् दीप्तैर्देदीप्यमाना दनुजहलवनानल्पदावानलाभाम् । दान्तोदन्तोग्रचित्तान्दलितदितिसुता दर्शनीया दुरन्ता देवी दीनार्द्रचित्ता हृदि मुदितमना. षोडशीं संस्मरामि ॥११॥ धीरा धन्यां धरित्री धवविधृतशिरो धूतधूल्यब्जपादा धृष्टा धाराधराधोविनिधृतचपला चारुचन्द्रप्रभाभाम् । धर्म्मान्धृतोपहारान्धरणिसुरधवोद्धारिणीं ध्येयरूपान्धीमद्धन्यातिधन्यां धनदधनवृतां सुन्दरीञ्चिन्तयामि ॥ १२ ॥ जयतु जयतु जल्पा योगिनी योगयुक्ता जयतु जयतु सौम्या सुन्दरी सुन्दरास्या । जयतु जयतु पद्मा पद्मिनी केशवस्य जयतु जयतु काली कालिनी कालकान्ता ॥१३॥ जयतु जयतु खर्वा षोडशी वेदहस्ता जयतु जयतु धात्री धर्म्मिणी धातृशान्तिः । जयतु जयतु वाणी ब्राह्मणी ब्रह्मवन्द्या जयतु जयतु दुर्गा दारिणी देवशत्रोः ॥१४॥ देवि ! त्वं सृष्टिकाले कमलभवभृता राजसी रक्तरूपा रक्षाकाले त्वमम्बा हरिहृदयधृता सात्त्विकी श्वेतरूपा। भूरिक्रोधा भवान्ते भवभवनगता तामसी कृष्णरूपा एताश्चान्यास्त्वमेव क्षितिमनुजमता सुन्दरी केवलाऽऽद्या ॥१५॥ सुमलसुमनमेतद्देवि ! गोप्यङ्गुणज्ञे ! ग्रहणमननयोग्यं षोडशीयद्व्लग्नम् । सुरतरुसमशीलं सम्प्रदम्पाठकानां प्रभवति हृदयाख्यं स्तोत्रमत्यन्तमान्यम् ॥१६॥ इदं त्रिपुरसुन्दर्य्याः षोडश्याः परमाद्भुतम् । यः शृणोति नरःस्तोत्रं स सदा सुखमश्नुते ॥१७॥ न शूद्राय प्रदातव्यं शठाय समलात्मने । देयन्दान्ताय भक्ताय ब्राह्मणाय विशेषतः ॥१८॥

॥ इति श्रीत्रिपुरसुन्दरीतन्त्रे षोडशीहृदयस्तोत्रं समाप्तम् ॥

---

## अथोपनिषद्

ॐ परमकारणभूता शक्तिः केन नवचक्ररूपो देहः नवचक्रशक्तिमयं श्रीचक्रं वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता पुरुषार्थाः सागराः देहो नवरत्नद्वीपः, आधारनवकमुद्राः शक्तयः, त्वगादिसप्तधातुभिरनेकैः संयुक्ताः सङ्कल्पाः कल्पतरवः तेजः कल्पकोद्यानं रसनया भासमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्रसाः क्रियाशक्तिपीठं कुण्डलिनी ज्ञानशक्तिः अहं इच्छाशक्तिर्महात्रिपुरसुन्दरी ज्ञाता होता ज्ञानमर्घ्यं, ज्ञेयं हविः, ज्ञातृज्ञानज्ञेयानमोभेदभावनं श्रीचक्रपूजनं, नियतिसहितशृङ्गारादयो नवरसाः, अणिमादयः कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्टशक्तयः, आधारं नवकमुद्राशक्तयः, पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थविकाराः षोडशशक्तयः वचनादानगमनविसर्गानन्दादानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ, अलम्बुषाकुहूविश्वोदरी वरुणा हस्तिजिह्वा यशस्विनी गान्धारी पूषा सरस्वती इडा पिङ्गला सुषुम्ना चेति चतुर्दशनाड्यः, सर्वसङ्क्षोभिण्यादिचतुर्दशारदेवताः, प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जया दश वायवः, सर्वसिद्धिप्रदादिबहिर्दशारदेवताः, एतद्वायुदशकं ससर्गोपाधिभेदेन रेचकपूरकपोषकदाहकाप्लावकामृतमिति प्राणसख्यत्वेन पञ्चविधोऽस्ति। जाठराग्निर्मनुष्याणां मोहको भक्ष्यभोज्यलेह्यचोष्यात्मकञ्चतुर्विधमन्नम्पाचयति। तदाऽऽकाशवान्सकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः, शीतोष्णसुखदुःखेच्छासत्त्वरजस्तमोगुणादिवशिन्यादिशक्तयोऽष्टौ शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणाः मनेक्षुधनुर्वल्ल्यो, बाणो रागः, पाशो द्वेषोऽङ्कुशोऽव्यक्तमहत्तत्त्वाहङ्कारकामेश्वरी वज्रेश्वरी भगमालिन्योऽन्तस्त्रिकोणाग्रदेवताः, पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनपञ्चदशनित्याशुद्धानुरूपाधि देवता निरुपाधि सार्वदैवकामेश्वरी सदानन्दपूर्णाः स्वात्मैक्यरूप ललिता कामेश्वरी सदानन्दघनपूर्णा स्वात्मैक्यरूपा देवता ललितामिति साहित्यकरणं सत्त्वं कर्त्तव्यमकर्त्तव्यमिति-

म्यहम् ॥ ९ ॥ कल्पकास्तु कलयन्ति कालिका यत्कलाकलिजनोपकारिका । कौलिकालिकलिताङ्घ्रिकञ्जकान्तान्भजामि कलिकल्मपापहाम् ॥१०॥ बालार्कानन्तशोचिर्निजतनुकिरणैर्दीपयन्तीं दिगन्तान् दीप्तैर्देदीप्यमाना दनुजहलवनानलपदावानलाभाम् । दान्तोदन्तोग्रचित्तान्दलितदितिसुता दर्शनीया दुरन्ता देवीं दीनार्द्रचित्ता हृदि मुदितमनाः षोडशीं संस्मरामि ॥११॥ धीरा धन्या धरित्रीं धवविधृतशिरो धूतधूल्यब्जपादा धृष्टा धाराधराधोविनिधृतचपला चारुचन्द्रप्रभाभाम् । धर्म्मान्धूतोपहारान्धरणिसुरधवोद्धारिणीं ध्येयरूपान्धीमद्धन्यातिधन्या धनदधनवृतां सुन्दरीञ्चिन्तयामि ॥ १२ ॥ जयतु जयतु जल्पा योगिनी योगयुक्ता जयतु जयतु सौम्या सुन्दरी सुन्दरास्या । जयतु जयतु पद्मा पद्मिनी केशवस्य जयतु जयतु काली कालिनी कालकान्ता ॥१३॥ जयतु जयतु खर्वा षोडशी वेदहस्ता जयतु जयतु धात्री धर्म्मिणी धातृशान्तिः । जयतु जयतु वाणी ब्राह्मणा ब्रह्मवन्द्या जयतु जयतु दुर्गा दारिणी देवशत्रोः ॥१४॥ देवि । त्वं सृष्टिकाले कमलभवभृता राजसी रक्तरूपा रक्षाकाले त्वमम्बा हरिहृदयधृता सात्त्विकी श्वेतरूपा । भूरिक्रोधा भयान्ते भवभवनगता तामसी कृष्णरूपा एताश्चान्यास्त्वमेव क्षितिमनुजमता सुन्दरी केवलाऽऽद्या ॥१५॥ सुमलसुमनमेनद्देवि ! गोप्यङ्गुणज्ञे ! ग्रहणमननयोग्यं षोडशीयद्वलग्नम् । सुरतरुमशीलं सम्प्रदम्पाठकानां प्रभवति हृदयाख्यं स्तोत्रमत्यन्तमान्यम् ॥१६॥ इदं त्रिपुरसुन्दर्य्याः षोडश्याः परमाद्भुतम् । यः शृणोति नरःस्तोत्रं स सदा सुखमश्नुते ॥१७॥ न शूद्राय प्रदातव्यं शठाय समलात्मने । देयन्दान्ताय भक्ताय ब्राह्मणाय विशेषतः ॥१८॥

॥ इति श्रीत्रिपुरसुन्दरीतन्त्रे षोडशीहृदयस्तोत्रं समाप्तम् ॥

---

# अथोपनिषद्

ॐ परमकारणभूता शक्तिः केन नवचक्ररूपो देहः नवचक्रशक्तिमयं श्रीचक्रं वाराही पितृरूपा कुरुकुल्ला चीलदेवता मातापुरुषार्थाः सागराः देहो नवरत्नद्वीपः, आधारनवकमुद्राः शक्तयः, त्वगादिसप्तधातुभिरनेकैः संयुक्ताः सङ्कल्पाः कल्पतरवः तेजः कल्पकोद्यानं रसनया भासमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्ऋतवः क्रियाशक्तिपीठं कुण्डलिनी ज्ञानशक्तिः अहं इच्छाशक्तिर्महात्रिपुरसुन्दरी ज्ञाता होता ज्ञानमर्घ्यं, ज्ञेयं हविः, ज्ञातृज्ञानज्ञेयानमोभेदभावनं श्रीचक्रपूजनं, नियतिसहितश्रृङ्गारादयो नवरसाः, अणिमादयः कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्टशक्तयः, आधारं नवकमुद्राशक्तयः, पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्यपाणिपादपायूपस्थविकाराः षोडशशक्तयः वचनादानगमनविसर्गानन्दादानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ, अलम्बुषाकुहूर्विश्वोदरी वरुणा हस्तजिह्वा यशस्विनी गान्धारी पूषा सरस्वती इडा पिङ्गला सुषुम्ना चेतिचतुर्दशनाड्यः, सर्वसङ्क्षोभिण्यादिचतुर्दशारदेवताः, प्राणापानव्यानोदानसमाननागकूर्म्मकृकलदेवदत्तधनञ्जया दश वायवः, सर्वसिद्धिप्रदादिर्बहिर्दशारदेवताः, एतद्वायुदशकं संसर्गोपाधिभेदेन रेचकपूरकपोषकदाहकप्लावकामृतमिति प्राणसख्यत्वेन पञ्चविधोऽस्ति। जाठराग्निर्मनुष्याणां मोहको भक्ष्यभोज्यलेह्यचोष्यात्मकञ्चतुर्विधमन्नम्पाचयति। तदाऽऽकाशवान्सकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः, शीतोष्णसुखदुःखेच्छासत्त्वरजस्तमोगुणादिवशिन्यादिशक्तयोऽष्टौ शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणाः मनइक्षुधनुर्व्वल्यो, बाणो रागः, पाशो द्वेषोऽङ्कुशोऽव्यक्तमहत्तत्त्वाहङ्कारकामेश्वरी वज्रेश्वरी भगमालिन्योऽन्तस्त्रिकोणाग्रदेवताः, पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनपञ्चदशनित्याशुद्धानुरूपाधि देवता निरुपाधि सार्व्वदेवकामेश्वरी सदानन्दपूर्णाः स्वात्मैक्यरूप ललिता कामेश्वरी सदानन्दघनपूर्णा स्वात्म्यैकरूपा देवता ललितामिति साहित्यकरणं सत्त्वं [illegible]

# अथ श्रीभुवनेश्वरीस्तोत्राणि

उद्यदिन ( बालरवि ) द्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् ।
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकराम्प्रभजे भुवनेशीम् ॥

श्रीभुवनेश्वरीस्तोत्रम्

अथानन्दमयीं साक्षाच्छब्दब्रह्मस्वरूपिणीम् । ईडे सकलसम्पत्त्यै जगत्कारणमम्बिकाम् ॥ १ ॥ विद्यामशेषजननीमरविन्दयोनेर्विष्णोः शिवस्य च वपुः प्रतिपादयित्रीम् । सृष्टिस्थितिक्षयकरीं जगतान्त्रयाणां स्तुत्वा गिरं विमलयाम्यहमम्बिके ! त्वाम् ॥ २ ॥ पृथ्व्या जलेन शिखिना मरुताम्बरेण होत्रेन्दुना दिनकरेण च मूर्त्तिभाजः । देवस्य मन्मथरिपोरपि शक्तिमत्ता हेतुस्त्वमेव खलु पर्वतराजपुत्रि ! ॥३॥ त्रिस्रोतसः सकलदेवसमर्चिताया वैशिष्ट्यकारणमवैमि तदेव मातः । त्वत्पादपङ्कजपरागपवित्रितासु शम्भोर्जटासु सततम्परिवर्त्तनंयत् ॥४॥ आनन्दयेत्कुमुदिनीमधिपः कलानां नान्यामिनः कमलिनीमथ नेतराम्वा । एकस्य मोदनविधौ परमेकमीष्टे त्वन्तु प्रपञ्चमभिनन्दयसि स्वदृष्ट्या ॥ ५ ॥ आद्याऽप्यशेषजगतां नवयौवनाऽसि शैलाधिराजतनयाऽप्यतिकोमलाऽसि । त्रय्याः प्रसूरपि तया न समीक्षिताऽसि ध्येयाऽसि गौरि ! मनसो न पथि स्थिताऽसि ॥ ६ ॥ आसाद्य जन्म मनुजेषु चिराद् दुरापन्तत्राऽपि पाटवमवाप्य निजेन्द्रियाणाम् । नाभ्यर्चयन्ति जगताञ्जनयित्रि ! ये त्वां निश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥ ७ ॥ कर्पूरचूर्णहिमवारिविलोडितेन ये चन्दनेन कुसुमैश्च सुजातगन्धैः । आराधयन्ति हि भवानि ! समुत्सुकास्त्वां ते खल्वखण्डभुवनाधिभुवः प्रथन्ते ॥ ८ ॥ आविश्य मध्यपदवीम्प्रथमे सरोजे सुप्ता हि राजसदृशी विरचय्य विश्वम् । विद्युल्लतावलयविभ्रममुद्वहन्ती पद्मानि पञ्च विदलय्य समश्नुवाना ॥ ९ ॥ तन्निर्गतामृतरसैरभिषिच्य गात्रम्मार्गेण तेन विलयम्पुनरप्यवाप्ना । येषां हृदि स्फुरसि जातु न ते भवेयुर्मातर्महेश्वरकुटुम्बिनि ! गर्भभाजः ॥१०॥ आलम्बिकुण्डलभराभिरामवक्त्रामापीवरस्तनतटीन्तनुवृत्तमध्याम् । चिन्ताक्षसूत्रकलशालिखिताढ्यहस्तामावर्त्तयामि मनसा तव गौरि ! मूर्त्तिम् ॥११॥ आस्थाय योगमविजित्य च वैरिषट्कमावध्य चेन्द्रियगण-

म्मनसि प्रसन्ने। पाशाङ्कुशाभयवराढ्यकरांशुवक्त्रामालोकयन्ति भुवनेश्वरि! योगिनस्त्वाम् ॥१२॥ उत्तप्तहाटकनिभाङ्करिभिश्चतुर्भिरावर्त्तितामृतघटैरभिषिच्यमाना। हस्तद्वयेन नलिने रुचिरे वहन्ती पद्मापि सा भयकरा भवसि त्वमेव ॥ १३ ॥ अष्टाभिरुग्रविविधायुधवाहिनीभिर्दोर्वल्लरीभिरधिरुह्य मृगाधिवासम्। दूर्वादलद्युतिरमर्त्यविपक्षपक्षान्न्यक्कुर्वती त्वमसि देवि! भवानि! दुर्गे! ॥१४॥ आविर्निदाघजलशीकरशोभिवक्त्राङ्गुञ्जाफलेन परिकल्पितहारयष्टिम्। रत्नांशुकामसितकान्तिमलङ्कृतां त्वामाद्यां पुलिन्दतरुणीमसकृन्नमामि ॥१५॥ हंसैर्गतिः क्वणितनूपुरदूरदृष्टे मूर्त्तेरिवाप्तवचनैरनुगम्यमानौ। पद्माविवोर्ध्वमुखरूढसुजातनालौ श्रीकण्ठपत्नि! शिरसैव दधे तवाऽङ्घ्री ॥१६॥ द्वाभ्यां समीक्षितुमतृप्तिमतेव दृग्भ्यामुत्पादिता त्रिनयनं वृषकेतनेन सान्द्रानुरागभवनेन निरीक्ष्यमाणे जङ्घे उभे अपि भवानि! तवानतोऽस्मि ॥१७॥ ऊरू स्मरामि जितहस्तिकरावलेपौ स्थौल्येन मार्दवतया परिभूतरम्भौ। श्रोणीभरस्य सह नौ परिकल्प्य दत्तौ स्तम्भाविवाङ्गवयसा तव मध्यमेन ॥१८॥ श्रोण्यौ स्तनौ च युगपत्प्रथयिष्यतोच्चैर्बाल्यात् परेण वयसा परिकृष्टसारः। रोमावलीविलसितेन विभाव्य मूर्त्तिर्मध्यन्तव स्फुरतु मे हृदयस्य मध्ये ॥१९॥ सख्यास्स्मरस्य हरनेत्रहुताशभीरोर्लावण्यवारिभरितन्नवयौवनेन। आपाद्य दत्तमिव पल्लवमप्रविष्टं नाभिं कदापि तव देवि! न विस्मरेयम् ॥२०॥ ईशोऽपि गेहपिशुनम्भसितं दधाने काश्मीरकर्दममनुस्तनपङ्कजे ते। स्नानोत्थितस्य करिणः क्षणलक्षफेनौ सिन्दूरितौ स्मरयतः समदस्य कुम्भौ ॥२१॥ कण्ठातिरिक्तगलदुज्ज्वलकान्तिधाराशोभौ भुजौ निजरिपोर्म्मकरध्वजेन कण्ठग्रहाय रचितौ किल दीर्घपाशौ मातर्म्मम स्मृतिपथन्न विलङ्घयेताम् ॥ २२ ॥ नात्यायतं रुचिरकम्बुविलासचौर्य्यं भूषाभरेण विविधेन विराजमानम्। कण्ठम्मनोहरगुणं गिरिराजकन्ये सञ्चिन्त्य तृप्तिमुपयामि कदापि नाऽहम् ॥२३॥ अत्यायताक्षमभिजातललाटपट्टम्मन्दस्मितेन दरफुल्लकपोलरेखम्। बिम्बाधरं खलु समुन्नतदीर्घनासं यत्ते स्मरत्यसकृदम्ब! स एव जातः ॥२४॥ आविस्तुषारकरलेखमनल्पगन्धः पुष्पोपरिभ्रमदलिव्रजनिर्व्विशेषम्। यश्चेतसा

कलयते तव केशपाशन्तस्य स्वयङ्कलति देवि । पुराणपाशः ॥२५॥ श्रुतिसुरचिपाकन्धीमता स्तोत्रमेतत् पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा । स भवपदमुच्चैस्सम्पदाम्पादनम्रक्षितिपमुकुटलक्ष्मीर्लक्षणानाश्चिराय ॥२६॥

॥ इति श्रीभुवनेश्वरीस्तोत्रं समाप्तम् ॥

---

## अथ कवचम्

देव्युवाच । भुवनेश्याश्च देवेश । या या विद्याः प्रकाशिताः । श्रुताश्चाऽधिगताः सर्वाः श्रोतुमिच्छामि साम्प्रतम् ॥ १ ॥ त्रैलोक्यमङ्गलं नाम कवचं यत्पुरोदितम् । ईश्वर उवाच । शृणु पार्वति । वक्ष्यामि सावधानाऽवधारय ॥ २ ॥ त्रैलोक्यमङ्गलन्नाम कवचम्मन्त्रविग्रहम् । सिद्धविद्यामयन्देवि । सर्वैश्वर्यप्रदायकम् ॥३॥ पठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत् ॥ ४ ॥ त्रैलोक्यमङ्गलस्याऽस्य कवचस्य ऋषिः शिवः । छन्दोविराड्जगद्धात्री देवता भुवनेश्वरी ॥ ५ ॥ धर्म्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः । ह्रीं बीजम्मे शिरः पातु भुवनेशी ललाटकम ॥ ६ ॥ ऐं पातु दक्षनेत्रम्मे ह्रीं पातु वामलोचनम् । श्रीं पातु दक्षकर्ण्णम्मे त्रिवर्णात्मा महेश्वरी ॥७॥ वामकर्ण्णं सदा पातु ऐं घ्राणम्पातु मे सदा । ह्रीं पातु वदनन्देवि ! ऐं पातु रसनाम्मम ॥ ८ ॥ वाक्पुटा च त्रिवर्णात्मा कण्ठम्पातु परात्मिका । श्रीं स्कन्धौ पातु नियतं ह्रीं भुजौ पातु सर्वदा ॥ ९ ॥ क्लीं करौ त्रिपुरेशानी त्रिपुरैश्वर्य्यदायिनी । ओ३म्पातु हृदयं ह्रीं मे मध्यदेशं सदाऽवतु॥१०॥ क्रौं पातु नाभिदेशं सा त्र्यक्षरी भुवनेश्वरी । सर्व्वबीजप्रदा पृष्ठम्पातु सर्ववशङ्करी ॥११॥ ह्रीं पातु गुददेशम्मे नमो भगवती कटिम् । माहेश्वरी सदा पातु सक्थिनी जानुयुग्मकम् ॥१२॥ अन्नपूर्णा सदा पातु स्वाहा पातु पदद्वयम् । सप्तदशाक्षरी पायादन्नपूर्णात्मिका पुरा ॥१३॥ तारम्माया रमा कामः षोडशार्ण्णा ततः परम् । शिरःस्था सर्वदा पातु विंशत्यर्ण्णात्मिका

परा ॥१५॥ तारदुर्गे युगं रक्षिणी स्वाहेति दशाक्षरी । जय दुर्गा घनश्यामा पातु माम्पूर्वतो मुदा ॥१५॥ मायाबीजादिका चैषा दशार्ण्णा च परा तथा । उत्तप्त-काञ्चनाभासा जय दुर्गाननेऽवतु ॥१६॥ तारं ह्रीं दुन्दुर्गायै नमोऽष्टार्ण्णात्मिका परा । शङ्खचक्रधनुर्बाणधरा मान्दक्षिणेऽवतु ॥१७॥ महिषामर्दिनी स्वाहा वसु वर्णात्मिका परा । नैर्ऋत्यां सर्वदा पातु महिषासुरनाशिनी ॥१८॥ मायापद्मा-वती स्वाहा सप्तार्ण्णा परिकीर्त्तिता । पद्मावती पद्मसंस्था पश्चिमे मां सदाऽवतु ॥१९॥ पाशाङ्कुशपुटा माये हि परमेश्वरि स्वाहा । त्रयोदशार्णा ताराद्या अश्वारूढाऽऽननेऽ-वतु ॥२०॥ सरस्वती पञ्चशरे नित्यक्लिन्ने मदद्रवे । स्वाहारव्यक्षरी विद्या मामुत्तरे सदाऽवतु ॥२१॥ तारम्मायातु कवचं खे रक्षेत्सततम्वधूः । हूं क्षे ह्रीं फट् महाविद्या द्वादशार्ण्णा खिलप्रदा ॥२२॥ त्वरिताष्टाहिभिः पायाच्छिवकोणे सदा च माम् । ए क्लीं सौः सा ततो बाला मामूर्द्ध्वदेशतोऽवतु ॥२३॥ विन्द्वन्ता भैरवी बाला भूमौ च मां सदाऽवतु । इति ते कथितम्पुण्यं त्रैलोक्यं मङ्गलम्परम् ॥२४॥ सारं सारतरं पुण्यं महाविद्यौघविग्रहम् । अस्याऽपि पठनात्सद्यः कुवेरोऽपि धनेश्वरः ॥२५॥ इन्द्राद्याः सकला देवाः पठनाद्धारणाद्यतः । सर्वसिद्धीश्वराः सन्तः सर्व्वैश्वर्यमवाप्नुयुः ॥२६॥ पुष्पाञ्जल्यष्टकन्दत्वा मूलेनैव पठेत्सकृत् । सम्वत्सरकृतायास्तु पूजायाः फलमाप्नु-यात् ॥२७॥ प्रीतिमन्योन्यतः कृत्वा कमला निश्चला गृहे । वाणी च निवसेद्वक्त्रे सत्यं सत्यं न संशयः ॥२८॥ यो धारयति पुण्यात्मा त्रैलोक्यमङ्गलाभिधम् । कव-चम्परमम्पुण्यं सोऽपि पुण्यवताम्वरः ॥२९॥ सर्व्वैश्वर्ययुतो भूत्वा त्रैलोक्यविजयी भवेत् । पुरुषो दक्षिणे बाहौ नारी वामभुजे तथा ॥३०॥ बहुपुत्रवती भूत्वा वन्ध्याऽपि लभते सुतम् । ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम् ॥३१॥ एतत्कवच-मज्ञात्वा यो जपेद्भुवनेश्वरीम् । दारिद्र्यम्परमम्प्राप्य सोऽचिरामृत्युमाप्नुयात् ॥३२॥

॥ इति श्रीरुद्रयामले देवीश्वरसम्वादे त्रैलोक्यमङ्गलं नाम भुवनेश्वरीकवचं समाप्तम् ॥

# अथ हृदयम्

देव्युवाच । भगवन्ब्रूहि तत्स्तोत्रं सर्वकामप्रसाधनम् । तस्य श्रवणमात्रेण नान्य-
च्छ्रोतव्यमिष्यते ॥ १ ॥ यदि मेऽनुग्रहः कार्य्यः प्रीतिश्चाऽपि ममोपरि । तदिदं
कथय ब्रह्मन् विमलं यन्महीतले ॥ २ ॥ ईश्वर उवाच । शृणु देवि ! प्रवक्ष्यामि
सर्व्वकामप्रसाधनम् । हृदयम्भुवनेश्वर्य्याः स्तोत्रमस्ति यशोदयम् ॥ ३ ॥ ॐ अस्य
श्रीभुवनेश्वरीहृदयस्तोत्रमन्त्रस्य शक्तिर्ऋषिर्गायत्रीच्छन्दो भुवनेश्वरीदेवता हकारो-
बीजं ईकारः शक्तीरेफः कीलकं सकलमनोवाञ्छितसिद्ध्यर्थे पाठे विनियोगः ।

अथाङ्गन्यासः । ॐ ह्रीं हृदयाय नमः । ॐ श्रीं शिरसे स्वाहा । ॐ ऐं शिखायै
वषट् । ॐ ह्रीं कवचाय हुम् । ॐ श्रीं नेत्रत्रयाय वौषट् । ॐ ऐं अस्त्राय फट् । एवं
करन्यासः । अथ ध्यानम् । ध्यायेद्ब्रह्मादिकानां कृतजनिजननीं योगिनीं योगयोनिं
देवानां जीवनायोज्ज्वलितजयपरज्योतिरुग्राङ्गधात्रीम् । शङ्खञ्चक्रञ्च बाणान्धनुरपि
दधतीन्दोश्चतुष्काम्बुजातैर्मायामाद्यां विशिष्टाम्भवभवभुवनाम्भूभवाभारभूमिम् ॥४॥
यदाज्ञया यो जगदाद्यशेषं सृजत्यजः श्रीपतिरौरसम्वा । बिभर्त्ति संहन्ति
भवस्तदन्ते भजामहे श्रीभुवनेश्वरीन्ताम् ॥ ५ ॥ जगज्जनानन्दकरीं जयाख्यां
यशस्विनीं यन्त्रसुयज्ञयोनिम् । जितामितामित्रकृतप्रपञ्चाम्भजामहे श्रीभुवनेश्व-
रीन्ताम् ॥ ६ ॥ हरौ प्रसुप्ते भुवनत्रयान्ते अवातरन्नाभिजपद्मजन्मा । विधिस्त-
तोऽन्धे विदधारयत्पदम्भजामहे श्रीभुवनेश्वरीन्ताम् ॥ ७ ॥ न विद्यते काऽपि तु
जन्म यस्या न वा स्थितिः सान्ततिकीह यस्याः । न वा निरोधेऽखिलकर्म्म यस्याः
भजामहे श्रीभुवनेश्वरीन्ताम् ॥ ८ ॥ कटाक्षमोक्षा चरणोग्रवित्ता निवेशितार्ण्णाः
करुणार्द्रचित्ता । सुभक्तये एति समीप्सितं या भजामहे० ॥ ९ ॥ यतो जगज्जन्म
बभूव योनेस्तदेव मध्ये प्रतिपाति याऽम्बा । तदत्ति याऽन्तेऽखिलमुग्रकाली भजा-
महे० ॥१०॥ सुषुप्तिकाले जनमध्ययन्त्या यया जनस्वप्नमवैति किञ्चित् । प्रबुद्ध्यते
जाग्रति जीव एष भजामहे० ॥११॥ दयास्फुरत्कोरकटाक्षलाभान्न केऽत्र यस्याः प्रल-

भन्ति सिद्धाः। कवित्वमीशित्वमपि स्वतन्त्रा भजामहे० ॥१२॥ लसन्मुखाम्भोरुह-मुत्स्फुरन्तं हृदि प्रणिध्याय दिशि स्फुरन्तः। यस्याः कृपार्द्रम्प्रविकाशयन्ति भजामहे० ॥ १३ ॥ यदानुरागानुगतालिचित्राश्चिरन्तनप्रेमपरिप्लुताङ्गाः। सुनिर्भयाः सन्तिः प्रमुद्य यस्याः भजामहे० ॥१४॥ हरिर्विरञ्चिर्हर इशितारः पुरोऽवतिष्ठन्ति परश्र-ताङ्गाः। यस्याः समिच्छन्ति सदानुकूल्यम्भजामहे० ॥१५॥ मनुं यदीयं हरमश्रि संस्थन्ततश्च वामश्रुतिचन्द्रशक्तम्। जपन्ति ये स्युस्सुरवन्दितास्ते भजामहे० ॥१६॥ प्रसीदतु प्रेमरसार्द्रचित्ता सदा हि सा श्री भुवनेश्वरी मे। कृपाकटाक्षेण कुबेरकल्पा भवन्ति यस्याः पदभक्तिभाजः ॥१७॥ मुदा सुपाठ्यं भुवनेश्वरीयं सदा सतां स्तोत्रमिदं सुसेव्यम्। सुखप्रदं स्यात्कलिकल्मषघ्नं सुश्रृण्वतां सम्पठतां प्रशस्यम् ॥१८॥ एतत्तु हृदयस्तोत्रं पठेद्यस्तु समाहितः। भवेत्तस्येष्टदा देवी प्रसन्ना भुवनेश्वरी ॥१६॥ ददाति धनमायुष्यं पुण्यं पुण्यमतिं तथा। नैष्टिकीं देवभक्तिञ्च गुरुभक्तिम्विशेषत।२१ पूर्ण्णिमायाञ्चतुर्द्दश्याङ्कुजवारे विशेषतः। पठनीयमिदं स्तोत्रं देवसद्मनि यत्नतः ॥२१॥ यत्र कुत्राऽपि पाठेन स्तोत्रस्याऽस्य फलम्भवेत्। सर्व्वस्थानेषु देवेश्याः पूतदेह-स्सदा पठेत् ॥२२॥

॥ इति श्रीनीलसरस्वतीतन्त्रे भुवनेश्वरीपटले श्रीदेवीश्वरसम्वादे श्रीभुवनेश्वरीहृदयस्तोत्रं समाप्तम् ॥

---

## अथ श्रीभुवनेश्शरीशतनामस्तोत्रम्

कैलासशिखरे रम्ये नानारत्नोपशोभिते। नरनारीहितार्थाय शिवम्पप्रच्छ पार्वती ॥ १ ॥ देव्युवाच। भुवनेश्वरी महाविद्या नाम्नामष्टोत्तरं शतम्। कथ-यस्व महादेव ! यद्यहन्तव वल्लभा ॥ २ ॥ ईश्वर उवाच। शृणु देवि ! महाभागे ! स्तवराजमिदं शुभम्। सहस्रनाम्नामधिकं सिद्धिदं मोक्षहेतुकम् ॥ ३ ॥ शुचिभिः

प्रातरुत्थाय पठितव्यं समाहितैः। त्रिकालं श्रद्धया युक्तैः सर्वकामफलप्रदम् ॥ ४ ॥

ॐ अस्य श्रीभुवनेश्वर्यष्टोत्तरशतनामस्तोत्रस्य शक्तिऋषिर्गायत्रीच्छन्दो भुवनेश्वरी देवता चतुर्वर्गसाधने जपे विनियोगः।

महामाया महाविद्या महायोगा महोत्कटा। माहेश्वरी कुमारी च ब्रह्माणी ब्रह्मरूपिणी ॥ ५ ॥ वागीश्वरी योगरूपा योगिनी कोटिसेविता। जया च विजया चैव कौमारी सर्वमङ्गला ॥ ६ ॥ हिङ्गुला च लासी (?) च ज्वालिनी ज्वालरूपिणी। ईश्वरी क्रूरसंहारी कुलमार्गप्रदायिनी ॥ ७ ॥ वैष्णवी सुभगाकारी सुकुल्या कुलपूजिता। वामाङ्गा वामचारा च वामदेवप्रिया तथा ॥ ८ ॥ डाकिनी योगिनीरूपा भूतेशी भूतनायिका। पद्मावती पद्मनेत्रा प्रबुद्धा च सरस्वती ॥ ९ ॥ भूचरी खेचरी माया मातङ्गी भुवनेश्वरी। कान्ता पतिव्रता साक्षी सुचक्षुः कुण्डवाहिनी ॥१०॥ उमा कुमारी लोकेशी सुकेशी पतिरागिणी। इन्द्राणी ब्रह्मचाण्डाली चण्डिका वायुवल्लभा ॥११॥ सर्वधातुमयी मूर्तिर्जलरूपा जला(लो?)दरी। आकाशी रणगा चैव नृकपालविभूषणा ॥ १२ ॥ नर्म्मदा मोक्षदा चैव कामधर्मार्थदायिनी। गायत्री चाऽथ सावित्री त्रिसन्ध्या तीर्थगामिनी ॥ १३ ॥ अष्टमी नवमी चैव दशम्येकादशी तथा। पौर्णमासी कुहूरूपा तिथिमूर्त्तिस्वरूपिणी ॥ १४ ॥ सुरारिनाशकारी च उग्ररूपा च वत्सला। अनला अर्द्धमात्रा च अरुणा पीतलोचना ॥१५॥ लज्जा सरस्वती विद्या भवानी पापनाशिनी। नागपाशधरा मूर्त्तिरगाधा धृतकुण्डला ॥ १६ ॥ क्षत्ररूपी क्षयकरी तेजस्विनी शुचिस्मिता। अव्यक्ता व्यक्तलोका च शम्भुरूपा मनस्विनी ॥ १७ ॥ मातङ्गी मत्तमातङ्गी महादेवप्रिया सदा। दैत्यहा चैव वाराही सर्व्वशास्त्रमयी शुभा ॥१८॥ य इदम्पठते भक्त्या शृणुयाद्वा समाहितः। अपुत्रो लभते पुत्रं निर्द्धनो धनवान्भवेत् ॥१९॥ मूर्खोऽपि लभते शास्त्रं चौरोऽपि लभते गतिम्। वेदानाम्पाठको विप्रः क्षत्रियो विजयी भवेत् ॥२०॥ वैश्यस्तु धनवान्भूयाच्छूद्रस्तु सुखमेधते। अष्टम्याञ्च चतुर्दश्यां नवम्याञ्चैकचेतसः ॥२१॥ ये पठन्ति सदा भक्त्या न ते वै दुःखभागिनः। एककालं द्विकालं वा

त्रिकालं वा चतुर्थकम् ॥२२॥ ये पठन्ति सदा भक्त्या स्वर्गलोके च पूजिताः। रुद्रं दृष्ट्वा यथा देवाः पन्नगा गरुडं यथा ॥२३॥ शत्रवः प्रपलायन्ते तस्य वक्त्रविलोकनात् ॥२४॥

॥ इति श्रीरुद्रयामले देवीशङ्करसम्वादे भुवनेश्वर्यष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

---

## अथ श्रीछिन्नमस्तास्तोत्राणि

प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्त्तृकां दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीम्मुदा। नागाबद्धशिरोमणिं त्रिनयनां हृद्युत्पलालङ्कृतां रत्यासक्तमनोभवोपरिदृढां ध्यायेज्जवासन्निभाम् ॥ दक्षे चातिसिता विमुक्तचिकुरा कर्त्री तथा खर्प्परं हस्ताभ्यान्दधती रजोगुणभवा नाम्नाऽपि सा वर्णिनी देव्याश्छिन्नकबन्धतः पतदसृग्धारां पिबन्ती मुदा। नागाबद्धशिरोमणिर्मनुविदा ध्येया सदा सा सुरैः॥ प्रत्यालीढपदा कबन्धविगलद्रक्तम्पिबन्ती मुदा सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी। शक्तिः साऽपि परात्परा भगवती नाम्ना परा डाकिनी ध्येया ध्यानपरैः सदा सविनयं भक्तेष्टभूतिप्रदा ॥

---

## अथ स्तोत्रम्

ईश्वर उवाच। स्तवराजमहं वन्दे वैरोचन्याः शुभप्रदम्। नाभौ शुभ्रारविन्दन्तदुपरिविलसन्मण्डलञ्चण्डरश्मेः संसारस्यैकसारां त्रिभुवनजननीं धर्मकामार्थदात्रीम्। तस्मिन्मध्ये त्रिभागे त्रितयतनुधरां च्छिन्नमस्ताम्प्रशस्तां ताम्वन्दे छिन्नमस्तां शमनभयहरां योगिनीं योगमुद्राम् ॥ १ ॥ नाभौ शुद्धसरोजवक्त्रविलसद्बन्धूकपुष्पारुणम्भास्वद्भास्करमण्डलं तदुदरे तद्योनिचक्रं महत्। तन्मध्ये विपरीतमैथुनरत-

प्रद्युम्नमत्कामिनी पृष्ठस्था तरुणार्ककोटिविलसत्तेजःस्वरूपाम्भजे ॥ २ ॥ वामे-च्छिन्नशिरोधरान्तदितरे पाणौ महत्कर्तृका प्रत्यालीढपदा दिगन्तवसनामुन्मुक्त-केशव्रजाम् । छिन्नात्मीयशिरस्समुच्छलदसृग्धाराम्पिवन्तीम्परा बालादित्यसम-प्रकाशविलसन्नेत्रत्रयोद्भासिनीम् ॥ ३ ॥ वामादन्यत्र नालम्बहुगहनगलद्रक्तधारा-भिरुच्चैर्गायन्तीमस्थिभूषा करकमललसत्कर्तृकामुग्ररूपाम् । रक्तामारक्तकेशीम-पगतवसनां वर्णिनीमात्मशक्तिं प्रत्यालीढोरुपादामरुणितनयना योगिनीं योग-निद्राम् ॥ ४ ॥ दिग्वस्त्रा मुक्तकेशीम्प्रलयघनघटाघोररूपाम्प्रचण्डां दंष्ट्रादुष्प्रेक्ष्य-वक्त्रोदरविवरलसल्लोलजिह्वाग्रभासाम् । विद्युल्लोलाक्षियुग्मा हृदयतटलसद्भोगिनी-म्भीममूर्त्तिं सद्यश्छिन्नात्मकण्ठप्रगलितरुधिरैर्डाकिनीम्वर्द्धयन्तीम् ॥ ५ ॥ ब्रह्मेशा-नाच्युताद्यैः शिरसि विनिहिता मन्दपादारविन्दैराप्तैर्योगीन्द्रमुख्यैः प्रतिपदमनिशा-श्चिन्तिताश्चिन्त्यरूपाम् । संसारे सारभूतां त्रिभुवनजननीं छिन्नमस्ता प्रशस्तामि-ष्टान्तामिष्टदात्रीं कलिकलुषहराञ्चेतसा चिन्तयामि ॥ ६ ॥ उत्पत्तिस्थितिसंहृती-र्घटयितुन्धत्ते त्रिरूपान्तनु त्रैगुण्याज्जगतो यदीयविकृतिर्ब्रह्माऽच्युतः शूलभृत् । तामाद्याम्प्रकृतिं स्मरामि मनसा सर्वार्थसंसिद्धये यस्याः स्मेरपदारविन्दयुगले लाभ-म्भजन्ते नराः ॥ ७ ॥ अभिलषितपरस्त्रीयोगपूजापरोऽहं बहुविधजनभावारम्भ-सम्भावितोऽहम् । पशुजनविरतोऽहम्भैरवीसंस्थितोऽहं गुरुचरणपरोऽहम्भैरवोऽहं शिवोऽहम् ॥ ८ ॥ इदं स्तोत्रं महापुण्यम्ब्रह्मणा भाषितम्पुरा । सर्वसिद्धिप्रदं साक्षा-न्महापातकनाशनम् ॥ ९ ॥ यः पठेत्प्रातरुत्थाय देव्याः सन्निहितोऽपि वा । तस्य सिद्धिर्भवेद्देवि । वाञ्छितार्थप्रदायिनी ॥१०॥ धनधान्यं सुतं जाया हयं हस्तिन-मेव च । वसुन्धरां महाविद्यामष्टसिद्धिर्लभेद्ध्रुवम् ॥११॥ वैयाघ्राजिनरञ्जितस्वज-घनेऽरण्ये प्रलम्बोदरे खर्व्वेऽनिर्वचनीयपर्वसुभगे मुण्डावलीमण्डिते । कर्त्रीं कुन्द-रुचिं विचित्रवनिता ज्ञाने दधाने पदे मातर्भक्तजनानुकम्पिनि । महामायेऽस्तु तुभ्यन्नमः ॥१२॥

॥ इति श्रीछिन्नमस्तास्तोत्रं समाप्तम् ॥

# अथ कवचम्

श्री देव्युवाच । कथिताश्छिन्नमस्ताया या या विद्याः सुगोपिताः । त्वया नाथेन जीवेश ! श्रुताश्चाऽधिगता मया ॥ १ ॥ इदानीं श्रोतुमिच्छामि कवचम्पूर्वसूचितम् । त्रैलोक्यविजयन्नाम कवचङ्कथ्यताम्प्रभो ! ॥ २ ॥ भैरव उवाच । शृणु वक्ष्यामि देवेशि ! सर्वदेवनमस्कृते ! । त्रैलोक्यविजयन्नाम कवचं सर्वमोहनम् ॥ ३ ॥ सर्व-विद्यामयं साक्षात् सुरासुरजयप्रदम् । धारणात्पठनादीशस्त्रैलोक्यविजयी विभुः ।४। ब्रह्मा नारायणो रुद्रो धारणात्पठनाद्यतः । कर्त्ता पाता च संहर्त्ता भुवनानां सुरे-श्वरि ! ॥ ५ ॥ न देयम्परशिष्येभ्य अभक्तेभ्यो विशेषतः । देयं शिष्याय भक्ताय प्राणेभ्योऽप्यधिकाय च ॥ ६ ॥ देव्याश्चच्छिन्नमस्तायाः कवचस्य च भैरवः । ऋषिर्विराट् च छन्दश्च देवता छिन्नमस्तका ॥ ७ ॥ त्रैलोक्यविजये मुक्तौ विनि-योगः प्रकीर्त्तितः । ओ३म् हूंकारो मे शिरः पातु छिन्नमस्ता बलप्रदा ॥ ८ ॥ ह्रीं ह्रीं ऐं त्र्यक्षरी पातु भालवक्त्रदिगम्बरी । श्रीं ह्रीं हूं ऐं दृशौ पातु मुण्डं कर्तृधराऽपि सा ॥ ९ ॥ सा विद्या प्रणवाद्यन्ता श्रुतियुग्मं सदाऽवतु । वज्रवैरोचनीये हूं फट् स्वाहा च भ्रुवादिकम् ॥१०॥ घ्राणम्पातु छिन्नमस्ता मुण्डकर्तृविधारिणी । श्री-मायाकूर्चवाग्बीजैर्वज्रवैरोचनीये हूं ॥११॥ हूं फट् स्वाहा महाविद्या षोडशी ब्रह्मरूपिणी । स्वपार्श्वे वालिका चासृग्धाराम्पाययती मुदा ॥१२॥ वदनं सर्वदा पातु च्छिन्नमस्ता स्वशक्तिका । मुण्डकर्तृधरा रक्ता साधकाभीष्टदायिनी ॥१३॥ वर्णिनी डाकिनी युक्ता साऽपि मामभितोऽवतु । रामाद्या पातु जिह्वाञ्च लज्जाद्या पातु कण्ठकम् ॥१४॥ कूर्चाद्या हृदयम्पातु वागाद्यास्तनयुग्मकम् । रमया पुटिता विद्या पार्श्वे पातु सुरेश्वरी ॥१५॥ मायया पुटिता विद्या नाभिदेशं दिगम्बरी । कूर्चेन पुटिता देवी पृष्ठदेशं सदाऽवतु ॥१६॥ वाग्बीजपुटिता तेषाम्मध्यम्पातु सशक्तिका । ईश्वरी कूर्चवाग्बीजे वज्रवैरोचनीये हूं ॥१७॥ हूं फट् स्वाहा महाविद्या सूर्यकोटिसमप्रभा । छिन्नमस्ता सदा पायादूरुयुग्मं सशक्तिका ॥ १८ ॥ ह्रीं

वर्णिनी जानू श्रीं ह्रं ह्रीं ह्रू च डाकिनी पदम्। सर्वविद्या स्थिता नित्या सर्वाङ्गम्मे सदाऽवतु ॥१९॥ प्राच्याम्पायादेकलिङ्गा योगिनी पावकेऽवतु। डाकिनी दक्षिणे पातु श्रीमहाभैरवी च माम् ॥२०॥ नैर्ऋत्यां सततम्पातु भैरवी पश्चिमेऽवतु। इन्द्राणी पातु वायव्येऽसिताङ्गी पातु चोत्तरे ॥२१॥ संहारिणी सदा पातु शिवकोणे सकर्तृका। इत्यष्टशक्तयः पान्तु दिग्विदिक्षु सकर्तृकाः ॥२२॥ क्रीं क्रीं क्रीं सा पातु पूर्वे हुं हुं माम्पातु पावके। ह्रीं ह्रीं मान्दक्षिणे पातु दक्षिणे कालिकाऽवतु ॥२३॥ क्रीं क्रीं क्रीं चैव नैर्ऋत्यां ह्रीं ह्रीं माम्पश्चिमेऽवतु। ह्रीं ह्रीं पातु मरुत्कोणे स्वाहा पातु सदोत्तरे ॥२४॥ महाकाली खड्गहस्ता शिवकोणे सदाऽवतु। तारा मायावधूः कूर्चं फट्कारो मां महामनुः ॥२५॥ खड्गकर्तृधरा तारा चोर्द्ध्वदेशं सदाऽवतु। ह्रीं स्त्रीं हुं फट् च पाताले माम्पातु चैकजटा सती ॥२६॥ तारा तु सहिता खेऽव्यान्महानीलसरस्वती। इति ते कथितन्देव्याः कवचम्मन्त्रविग्रहम् ॥२७॥ यद्धृत्वा पठनाद्भीमः क्रोधाख्यो भैरवः प्रभुः। सुरासुरमुनीन्द्राणां कर्त्ता-हर्त्ता भवेत्स्वयम् ॥२८॥ यस्याऽऽज्ञया मधुमती याति सा साधकालयम्। भूतिन्याद्याश्च योगिन्यो यक्षिण्याद्याश्च खेचराः ॥२९॥ आज्ञां गृह्णन्ति तास्तस्य कवचस्य प्रसादतः। एतदेव परम्ब्रह्म कवचम्मन्मुखोदितम् ॥३०॥ देवीमभ्यर्च्य गन्धाद्यैर्मूलेनैव पठेत्सकृत्। सम्वत्सरकृतायाश्च पूजायाः फलमाप्नुयात् ॥३१॥ भूर्ज्जे विलिखितञ्चैव गुटिकां काञ्चनीस्थिताम्। धारयेद्दक्षिणे बाहौ कण्ठे वा यदि वाऽन्यतः ॥३२॥ सर्वैश्वर्ययुतो भूत्वा त्रैलोक्यं वशमानयेत्। तस्य गेहे वसेल्लक्ष्मी-र्वाणी च वदनाम्बुजे ॥३३॥ ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रे यान्ति सौम्यताम्। इदङ्कवचमज्ञात्वा यो भजेच्छिन्नमस्तकाम्। सोऽपि शस्त्रप्रहारेण मृत्युमाप्नोति सत्वरम् ॥ ३४ ॥

॥ इति श्रीभैरवतन्त्रे भैरवीभैरवसम्वादे त्रैलोक्यविजयन्नाम श्रीच्छिन्नमस्ता-कवचं समाप्तम् ॥

---

# अथ हृदयम्

श्रीपार्वत्युवाच। श्रुतम्पूजादिकं सम्यग्भवद्वक्त्राञ्जनिःसृतम्। हृदयं छिन्नमस्तायाः श्रोतुमिच्छामि साम्प्रतम्। श्रीमहादेव उवाच। नाऽद्यावधि मया प्रोक्तं कस्याऽपि प्राणवल्लभे!। यत्त्वया परिपृष्टोऽहं वक्ष्ये प्रीत्यै तव प्रिये!॥ ओ३मस्य छिन्नमस्ताहृदयस्तोत्रमन्त्रस्य भैरवऋषिः सम्राट्छन्दश्छिन्नमस्ता देवता हूं बीजं ॐ शक्तिः ह्रीं कीलकम् शत्रुक्षयकरणार्थे पाठे विनियोगः।

ओ३म् हृदयायनमः ॐ हूं शिरसे स्वाहा ॐ ह्रीं शिखायैवषट् ॐ क्लीं नेत्रत्रयाय वौषट् ॐ ऐं कवचाय हुम् ॐ हूं अस्त्राय फट्।

एवङ्करन्यासः। अथ ध्यानम्। रक्ताभां रक्तकेशीं करकमललसत्कर्तृकां कालकान्तिं विच्छिन्नात्मीयमुण्डासृगरुणवहुलादग्रधाराम्पिबन्तीम्। विघ्नाभ्रौघप्रचण्डश्वसनसमनिभां सेवितां सिद्धसङ्घैः पद्माक्षीं छिन्नमस्तां छलकरदितिजच्छेदिनीं संस्मरामि ॥ १ ॥ वन्देऽहं छिन्नमस्तान्तां छिन्नमुण्डधराम्पराम्। छिन्नग्रीवोच्छटाच्छन्नां क्षौमवस्त्रपरिच्छदाम् ॥ २ ॥ सर्वदा सुरसङ्घेन सेविताङ्घ्रिसरोरुहाम्। सेवे सकलसम्पत्त्यै छिन्नमस्तां शुभप्रदाम् ॥ ३ ॥ यज्ञानां योगयज्ञाय या तु जाता युगे युगे। दानवान्तकरी देवी छिन्नमस्ताम्भजामि ताम् ॥ ४ ॥ वैरोचनीम्वरारोहां वामदेवविवर्द्धिताम्। कोटिसूर्य्यप्रभाम्वन्दे विद्युद्वर्णाक्षिमण्डिताम् ॥ ५ ॥ निजकण्ठोच्छलद्रक्तधारया या मुहुर्मुहुः। योगिनीस्तर्पयन्त्युग्रा तस्याश्चरणमाश्रये ॥ ६ ॥ हूमित्येकाक्षरं मन्त्रं यदीयं युक्तमानसः। यो जपेत्तस्य विद्वेषी भस्मतां याति तामले ॥ ७ ॥ हूं स्वाहेति मनुं सम्यग्यः स्मरत्यार्त्तिमान्नरः। छिनत्ति च्छिन्नमस्ता या तस्य बाधां नमामि ताम् ॥८॥ यस्याः कटाक्षमात्रेण क्रूरभूतादयो द्रुतम्। दूरतः सम्पलायन्ते छिन्नमस्ताम्भजामि ताम् ॥९॥ क्षितितलपरिरक्षा क्षान्तरोपा सुदक्षा छलयुतखलकक्षा(?)च्छेदने क्षान्तिलक्ष्या। क्षितिदितिजसुपक्षा क्षोणिपाक्ष्य्यशिक्षा जयतु जयतु चाक्षा छिन्नमस्ताऽरिभक्षा ॥१०॥

कलिकलुषकलाना कर्त्तने कर्त्तृहस्ता सुरकुवलयकाशा मन्दभानुप्रकाशा। असुरकुलकलापत्रासिका कालमूर्त्तिर्जयतु जयतु काली छिन्नमस्ता कराली ॥११॥ भुवनभरणभूरिभ्राजमानानुभावा भवभवविभवाना भारणोद्भातभूति। द्विजकुलकमलाना भामिनी भानुमूर्त्तिर्भवतु भवतु वाणी छिन्नमस्ता भवानी ॥१२॥ ममरिपुगणमाशुच्छेत्तुमुग्रं कृपाणं सपदि जननि तीक्ष्णञ्छिन्नमुण्डं गृहाण। भवतु तव यशोऽलं छिन्धि शत्रूनखलान्मे मम च परिदिशेष्टं छिन्नमस्ते। क्षमस्व ॥१३॥ छिन्नग्रीवा छिन्नमस्ता छिन्नमुण्डधरा क्षता। क्षोदक्षेमकरी स्वक्षा क्षोणीशाच्छादनक्षमा ॥१४॥ वैरोचनी वरारोहा बलिदानप्रहर्षिता। बलिपूजितपादाब्जा वासुदेवप्रपूजिता ॥१५॥ इति द्वादशनामानि छिन्नमस्ताप्रियाणि यः। स्मरेत्प्रातः समुत्थाय तस्य नश्यन्ति शत्रवः ॥१६॥ यां स्मृत्वा सन्ति सद्यः सकलसुरगणाः सर्वदा सम्पदाढ्याः शत्रूणा सङ्घमाहत्यविशदवदनाः स्वस्थचित्ताः श्रयन्ति। तस्याः सङ्कल्पवन्तः सरसिजचरणं सन्ततं संश्रयन्ति साऽऽद्या श्रीशादिसेव्या सुफलतु सुतरां छिन्नमस्ता प्रशस्ता ॥१७॥ हृदयमिदमज्ञात्वा हन्तुमिच्छति यो द्विषम्। कथं तस्याऽचिरं शत्रुर्नाशमेष्यति पार्व्वति। ॥१८॥ यदीच्छेन्नाशनं शत्रोः शीघ्रमेतत्पठेन्नरः। छिन्नमस्ता प्रसन्नाऽपि ददाति फलमीप्सितम् ॥१९॥ शत्रुप्रशमनं पुण्यं समीप्सितफलप्रदम्। आयुरारोग्यदञ्चैव पठताम्पुण्यसाधनम् ॥२०॥

॥ इति श्रीनन्द्यावर्त्ते महादेवपार्व्वतीसम्वादे श्रीछिन्नमस्ताहृदयस्तोत्रं सम्पूर्णम् ॥

---

# अथाष्टोत्तरशतनामस्तोत्रम्

श्रीपार्व्वत्युवाच। नाम्नां सहस्रं परमं छिन्नमस्ताप्रियं शुभम्। कथितम्भवता शम्भो! सद्यः शत्रुनिकृन्तनम्॥ १॥ पुनः पृच्छाम्यहन्देव! कृपाङ्कुरु ममोपरि। सहस्रनामपाठे च अशक्तो यः पुमान्भवेत्॥ २॥ तेन किम्पठ्यते नाथ! तन्मे ब्रूहि कृपामयं!। श्रीसदाशिव उवाच। अष्टोत्तरशतं नाम्नाम्पठ्यते तेन सर्वदा॥३॥ सहस्रनामपाठस्य फलम्प्राप्नोति निश्चितम्।

ॐ अस्य श्रीछिन्नमस्ताऽष्टोत्तरशतनामस्तोत्रस्य सदाशिवऋृषिरनुष्टुप्छन्दः। श्रीछिन्नमस्ता देवता मम सकलसिद्धिप्राप्तये जपे विनियोगः।

ॐ छिन्नमस्ता महाविद्या महाभीमा महोदरी। चण्डेश्वरी चण्डमाता चण्डमुण्डप्रभञ्जिनी॥ ४॥ महाचण्डा चण्डरूपा चण्डिका चण्डखण्डिनी। क्रोधिनी क्रोधजननी क्रोधरूपा कुहूःकला॥ ५॥ कोपातुरा कोपयुता कोपसंहारकारिणी। वज्रवैरोचनी वज्रा वज्रकल्पा च डाकिनी॥ ६॥ डाकिनीकर्म्मनिरता डाकिनीकर्म्मपूजिता। डाकिनीसङ्गनिरता डाकिनीप्रेमपूरिता॥ ७॥ खट्वाङ्गधारिणी खर्वा खड्गखर्प्परधारिणी। प्रेताशना प्रेतयुता प्रेतसङ्गविहारिणी॥ ८॥ छिन्नमुण्डधरा छिन्नचण्डविद्या च चित्रिणी। घोररूपा घोरदृष्टिर्घोररावा घनोदरी॥९॥ योगिनी योगनिरता जपयज्ञपरायणा। योनिचक्रमयी योनिर्योनिचक्रप्रवर्त्तिनी॥१०॥ योनिमुद्रा योनिगम्या योनियन्त्रनिवासिनी। यन्त्ररूपा यन्त्रमयी यन्त्रेशी यन्त्रपूजिता॥११॥ कीर्त्या कपर्द्दिनी काली कङ्काली कलविकारिणी। आरक्ता रक्तनयना रक्तपानपरायणा॥१२॥ भवानी भूतिदा भूतिर्भूतिदात्री च भैरवी। भैरवाचारनिरता भूतभैरवसेविता॥१३॥ भीमा भीमेश्वरी देवी भीमनादपरायणा। भवाराध्या भवनुता भवसागरतारिणी॥१४॥ भद्रकाली भद्रतनुर्भद्ररूपा च भद्रिका। भद्ररूपा महाभद्रा सुभद्रा भद्रपालिनी॥१५॥ सुभव्या भव्यवदना

सुमुखी सिद्धसेविता । सिद्धिदा सिद्धिनिवहा सिद्धा सिद्धनिषेविता ॥१६॥ शुभदा शुभगा शुद्धा शुद्धसत्त्वा शुभावहा । श्रेष्ठा दृष्टिमयी देवी दृष्टिसंहारकारिणी ॥१७॥ शर्वाणी सर्वगा सर्वा सर्वमङ्गलकारिणी । शिवा शान्ता शान्तिरूपा मृडानी मदनातुरा ॥१८॥ इति ते कथितन्देवि ! स्तोत्रम्परमदुर्लभम् । गुह्याद्गुह्यतरं गोप्यं गोपनीयम्प्रयत्नतः ॥ १९ ॥ किमत्र बहुनोक्तेन त्वदग्रे प्राणवल्लभे ! । मारणम्मोहनं देवि ! ह्युच्चाटनमतः परम् ॥२०॥ स्तम्भनादिककर्म्माणि ऋद्धयः सिद्धयोऽपि च । त्रिकालपठनादस्य सर्व्वे सिद्धयन्त्यसंशयः ॥२१॥ महोत्तमं स्तोत्रमिदं वरानने ! मयेरितन्नित्यमनन्यबुद्धयः । पठन्ति ये भक्तियुता नरोत्तमा भवेन्न तेषां रिपुभिः पराजयः ॥२२॥

॥ इति श्रीछिन्नमस्ताष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

---

# अथ श्रीत्रिपुरभैरवीस्तोत्राणि

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् । हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं देवीं बद्धहिमांशुरत्नमुकुटाम्वन्दे समन्दस्मिताम् ॥

श्रीभैरव उवाच । ब्रह्मादयः स्तुतिशतैरपि सूक्ष्मरूपाञ्जानन्ति नैव जगदादिमनादिमूर्त्तिम् । तस्माद्वयं कुचनतान्नवकुङ्कुमाभां स्थूलां स्तुमः सकलवाङ्मयमातृभूताम् ॥ १ ॥ सद्यः समुद्यतसहस्रदिवाकराभां विद्याक्षसूत्रवरदाभयचिह्नहस्ताम् । नेत्रोत्पलैस्त्रिभिरलङ्कृतवक्त्रपद्मां त्वां हारभाररुचिरान्त्रिपुरे ! भजामः ॥ २ ॥ सिन्दूरपूररुचिरङ्कुचभारनम्रं जन्मान्तरेषु कृतपुण्यफलैकगम्यम् । अन्योन्यभेदकलहाकुलमानभेदैर्जानन्ति किम्जडधियस्तवरूपमम्ब ! ॥ ३ ॥ स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति सूक्ष्मां वदन्ति वचसामधिवासमन्ये । त्वाम्मूलमाहुरपरे

जगताम्भवानि ! मन्यामहे वयमपारकृपाम्बुराशिम् ॥ ४ ॥ चन्द्रावतंसकलितां शरदिन्दुशुभ्रां पञ्चाशदक्षरमयीं हृदि भावयन्ति । त्वाम्पुस्तकजपवटीमभृताम्भकुम्भां व्याख्याञ्च हस्तकमलैर्दधतीं त्रिनेत्राम् ॥ ५ ॥ शम्भुस्त्वमद्रितनयाकलितार्द्धभागो विष्णुस्त्वमम्ब ! कमलापरिणद्धदेहः । पद्मोद्भवस्त्वमसि वागधिवासभूमिर्येषां क्रियाश्च जगति त्रिपुरे ! त्वमेव ॥ ६ ॥ आश्रित्य वाग्भवभवांश्चतुरः परादीन्भावान् पदास्तु विहितान्समुदीरयन्तीम् । कालादिभिश्च करणैः परदेवतान्त्वां संविन्मयीं हृदि कदापि न विस्मरामि ॥ ७ ॥ आकुञ्च्य वायुमभिजित्य च वैरिषट्कमालोक्य निश्चलधिया निजनासिकाग्रम् । ध्यायन्त मूर्ध्नि कलितेन्दुकलावतंसं त्वद्रूपमम्ब ! कृतिनस्तरुणार्कमित्रम् ॥८॥ त्वम्प्राप्य मन्मथरिपोर्वपुरर्द्धभागं सृष्टिं करोषि जगतामिति वेदवादः । सत्यन्तदद्रितनये ! जगदेकमातर्नोचेदशेषजगतः स्थितिरेव न स्यात् ॥९॥ पूजाम्विधाय कुसुमैः सुरपादपानां पीठे तवाम्ब ! कनकाचलकन्दरेषु । गायन्ति सिद्धवनिताः सह किन्नरीभिरास्वादितामृतरसारुणपद्मनेत्राः ॥१०॥ विद्युद्विलासवपुषः श्रियमावहन्तीं यान्तीं स्ववासभवनाच्छिवराजधानीम् । सौषुम्नमार्गकमलानि विकासयन्तीन्देवीम्भजेत परमामृतसिक्तगात्राम् ॥११॥ आनन्दजन्मभवनं भवनं श्रुतीनां चैतन्यमात्रतनुमम्ब ! तवाऽऽश्रयामि । ब्रह्मेशविष्णुभिरुपासितपादपद्मां सौभाग्यजन्मवसतिं त्रिपुरे ! यथावत् ॥१२॥ सर्व्वार्थभाविभुवनं सृजतीन्दुरूपा या तद्बिभर्त्ति पुनरर्कतनुः सशक्त्या । ब्रह्मात्मिका हरति तं सकलं युगान्ते तां शारदां मनसि जातु न विस्मरामि ॥१३॥ नारायणीति नरकार्णवतारिणीति गौरीति खेदशमनीति सरस्वतीति । ज्ञानप्रदेति नयनत्रयभूषितेति त्वामद्रिराजतनये ! विबुधा वदन्ति ॥१४॥ ये स्तुवन्ति जगन्मातः ! श्लोकैर्द्वादशभिः क्रमात् । त्वामनुप्राप्य वाक्सिद्धिं प्राप्नुयुस्ते परां श्रियम् ॥१५॥ इति ते कथितन्देवि ! पञ्चाङ्गम्भैरवीमयम् । गुह्यं गोप्यतमं गोप्यं गोपनीयं स्वयोनिवत् ॥१६॥

॥ इति श्रीरुद्रयामले उमामहेश्वरसम्वादे पञ्चाङ्गखण्डनिरूपणे श्रीभैरवीस्तोत्रं सम्पूर्णम् ॥

# अथ भैरवीकवचम्

श्रीपार्वत्युवाच । देवदेव ! महादेव ! सर्वशास्त्रविशारद । कृपाङ्कुरु जगन्नाथ धर्मज्ञोऽस्मि महामते ! ॥१॥ भैरवी या पुरा प्रोक्ता विद्या त्रिपुरपूर्विका । तस्या कवचन्दिव्यं मह्यं कथय तत्त्वतः ॥ २ ॥ तस्यास्तु वचनं श्रुत्वा जगाद जगदीश्वरः । अद्भुतं कवचन्देव्या भैरव्या दिव्यरूपि वै ॥ ३ ॥ ईश्वर उवाच । कथयामि महाविद्याकवचं सर्वदुर्लभम् । शृणुष्व त्वञ्च विधिना श्रुत्वा गोप्यं तवाऽपि तत् ॥४॥ यस्या प्रसादात्सकलं बिभर्म्मि भुवनत्रयम् । यस्याः सर्वं समुत्पन्नं यस्यामद्याऽपि तिष्ठति ॥ ५ ॥ माता पिता जगद्धन्या जगद्ब्रह्मस्वरूपिणी । सिद्धिदात्री च सिद्धा स्यादसिद्धा दुष्टजन्तुषु ॥ ६ ॥ सर्वभूतहितकरी सर्वभूतस्वरूपिणी । ककारी पातु मान्देवी कामिनी कामदायिनी ॥७॥ एकारी पातु मान्देवी मूलाधारस्वरूपिणी । ईकारी पातु मान्देवी भूरि सर्व्वसुखप्रदा ॥ ८ ॥ लकारी पातु मान्देवी इन्द्राणी वरवल्लभा । ह्रींकारी पातु मान्देवी सर्वदा शम्भुसुन्दरी ॥ ९ ॥ एतैर्व्वर्णैर्महामाया शाम्भवी पातु मस्तकम् । ककारे पातु मान्देवी शर्व्वाणी हरगेहिनी ॥१०॥ मकारे पातु मान्देवी सर्व्वपापप्रणाशिनी । ककारे पातु मान्देवी कामरूपधरा सदा ॥११॥ ककारे पातु मान्देवी शम्बरारिप्रिया सदा । पकारी पातु मान्देवी धरा धरणिरूपधृक् ॥१२॥ ह्रींकारी पातु मान्देवी आकारार्द्धशरीरिणी । एतैर्वर्णैर्महामाया कामराहुप्रियाऽवतु ॥१३॥ मकारः पातु मान्देवी सावित्री सर्व्वदायिनी । ककारः पातु सर्वत्र कलाम्बरस्वरूपिणी ॥१४॥ लकारः पातु मान्देवी लक्ष्मीः सर्वसुलक्षणा । ह्रीं पातु मान्तु सर्वत्र देवी त्रिभुवनेश्वरी ॥१५॥ एतैर्वर्णैर्महामाया पातु शक्तिस्वरूपिणी । वाग्भवं मस्तकम्पातु वदनङ्कामराजिका ॥ १६ ॥ शक्तिस्वरूपिणी पातु हृदयं यन्त्रसिद्धिदा । सुन्दरी सर्वदा पातु सुन्दरी परिरक्षति ॥१७॥ रक्तवर्णा सदा पातु सुन्दरी सर्वदायिनी । नानालङ्कारसंयुक्ता सुन्दरी पातु सर्वदा ॥१८॥ सर्वाङ्ग-

सुन्दरी पातु सर्वत्र शिवदायिनी। जगदाह्लादजननी शम्भुरूपा च मां सदा ॥१६॥ सर्वमन्त्रमयी पातु सर्वसौभाग्यदायिनी। सर्वलक्ष्मीमयी देवी परमानन्ददायिनी ॥२०॥ पातु मां सर्वदा देवी नानाशङ्खनिधिः शिवा। पातु पद्मनिधिर्देवी सर्वदा शिवदायिनी ॥२१॥ दक्षिणामूर्त्तिर्माम्पातु ऋषिः सर्वत्र मस्तके। पङ्क्तिश्छन्दःस्वरूपा तु मुखे पातु सुरेश्वरी ॥२२॥ गन्धाष्टकात्मिका पातु हृदयं शङ्करी सदा। सर्वसम्मोहिनी पातु पातु सङ्क्षोभिणी सदा ॥२३॥ सर्वसिद्धिप्रदा पातु सर्वाकर्षणकारिणी। क्षोभिणी सर्वदा पातु वशिनी सर्वदाऽवतु ॥२४॥ आकर्षिणी सदा पातु सम्मोहिनी सदाऽवतु। रतिर्देवी सदा पातु भगाङ्गा सर्वदाऽवतु ॥२५॥ महेश्वरी सदा पातु कौमारी सर्वदाऽवतु। सर्वाह्लादनकारी माम्पातु सर्ववशङ्करी ॥२६॥ क्षेमङ्करी सदा पातु सर्वाङ्गसुन्दरी तथा। सर्वाङ्गयुवतिः सर्वं सर्वसौभाग्यदायिनी ॥२७॥ वाग्देवी सर्वदा पातु वाणिनी सर्वदाऽवतु। वशिनी सर्वदा पातु महासिद्धिप्रदा सदा ॥२८॥ सर्वविद्राविणी पातु गणनाथः सदाऽवतु। दुर्गा देवी सदा पातु वटुकः सर्वदाऽवतु ॥२६॥ क्षेत्रपालः सदा पातु पातु चावरिशान्तिका। अनन्तः सर्वदा पातु वराहः सर्वदाऽवतु ॥३०॥ पृथिवी सर्वदा पातु स्वर्णसिंहासनन्तथा। रक्तामृतञ्च सततं पातु मां सर्वकालतः ॥३१॥ सुरार्णवः सदा पातु कल्पवृक्षः सदाऽवतु। श्वेतच्छत्रं सदा पातु रक्तदीपः सदाऽवतु ॥३२॥ नन्दनोद्यानं सततम्पातु मां सर्वसिद्धये। दिक्पालाः सर्वदा पान्तु द्वन्द्वौघाः सकलास्तथा ॥३३॥ वाहनानि सदा पान्तु अस्त्राणि पान्तु सर्वदा। शस्त्राणि सर्वदा पान्तु योगिन्यः पान्तु सर्वदा ॥३४॥ सिद्धाः पान्तु सदा देवी सर्वसिद्धिप्रदाऽवतु। सर्वाङ्गसुन्दरी देवी सर्वदाऽवतु मान्तथा ॥३५॥ आनन्दरूपिणी देवी चित्स्वरूपा चिदात्मिका। सर्वदा सुन्दरी पातु सुन्दरी भवसुन्दरी ॥३६॥ पृथग्देवालये घोरे सङ्कटे दुर्गमे गिरौ। अरण्ये प्रान्तरे वाऽपि पातु मां सुन्दरी सदा ॥३७॥ इदङ्कवचमित्युक्तं मन्त्रोद्धारश्च पार्वति!। यः पठेत्प्रयतो भूत्वा त्रिसन्ध्यन्नियतः शुचिः ॥३७॥ तस्य सर्वार्थसिद्धिः स्याद्यद्यन्मनसि वर्त्तते। गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा ॥३६॥

स्वयम्भूकुसुमे शुक्लैर्भूमिपुत्रे शनौ सुरे। श्मशाने प्रान्तरे वाऽपि शून्यागारे शिवालये ॥४०॥ स्वशक्त्या गुरुणा यन्त्रम्पूजयित्वा कुमारिकाः। तन्मनुम्पूजयित्वा च गुरुपङ्क्तिन्तथैव च ॥४१॥ देव्यै बलिन्निवेद्याऽथ नरमार्ज्जारशूकरैः। नकुलैर्महिषैर्मेषैः पूजयित्वा विधानतः ॥४२॥ धृत्वा सुवर्णमध्यस्थं कण्ठे वा दक्षिणे भुजे। सुतिथौ शुभनक्षत्रे सूर्यस्योदयने तथा ॥४३॥ धारयित्वा च कवचं सर्वसिद्धिं लभेन्नरः। कवचस्य च माहात्म्यं नाऽहं वर्षशतैरपि ॥४४॥ शक्नोमि तु महेशानि ! वक्तुन्तस्य फलन्तु यत्। न दुर्भिक्षफलन्तत्र न चाऽपि पीडनं तथा ॥४५॥ सर्वविघ्नप्रशमनं सर्वव्याधिविनाशनम् ॥४६॥ सर्वरक्षाकरञ्जन्तोश्चतुर्वर्गफलप्रदम्। यत्रकुत्र न वक्तव्यं न दातव्यं कदाचन ॥४७॥ मन्त्रम्प्राप्य विधानेन पूजयेत्सततं सुधीः। तत्राऽपि दुर्लभं मन्ये कवचन्देवरूपिणम् ॥४८॥ गुरोः प्रसादमासाद्य विद्याम्प्राप्य सुगोपिताम्। तत्राऽपि कवचन्दिव्यं दुर्लभं भुवनत्रये ॥४९॥ श्लोकं वा स्तवमेकं वा यः पठेत्प्रयतः शुचिः। तस्य सर्वार्थसिद्धिः स्याच्छङ्करेण प्रभाषितम् ॥५०॥ गुरुर्देवो हरः साक्षात्पत्नी तस्य च पार्वती। अभेदेन यजेद्यस्तु तस्य सिद्धिरदूरतः ॥ ५१ ॥

॥ इति श्रीरुद्रयामले भैरवभैरवीसम्वादे श्रीभैरवीकवचं सम्पूर्णम् ॥

---

## त्रिपुरभैरवीहृदयम्

मेरौ गिरिवरेशानी शिवन्ध्यानपरायणम्। पार्वती परिपप्रच्छ परानुग्रहवाञ्छया ॥ १ ॥ श्रीपार्वत्युवाच। भगवंस्त्वन्मुखाम्भोजाच्छ्रुता धर्मा अनेकशः। पुनः श्रोतु मिच्छामि भैरवीस्तोत्रमुत्तमम् ॥ २ ॥ श्रीशङ्कर उवाच। शृणु देवि! प्रवक्ष्यामि भैरवीहृदयाह्वयम्। स्तोत्रन्तु परमं पुण्यं सर्वकल्याणकारणम् ॥ ३ ॥ यस्य श्रवणमात्रेण मङ्गलम्भवति ध्रुवम्। विना ध्यानादिना वाऽपि भैरवी परितुष्यति॥४॥

ओंऽस्य श्रीभैरवीहृदयमन्त्रस्य दक्षिणामूर्त्तिर्ऋषिः पङ्क्तिश्छन्दो भयविध्वंसिनी भैरवी देवता हकारो बीजं रीं शक्तिः रैः कीलकं सर्व्वभयविध्वंसनार्थे पाठे

विनियोगः। अथाऽङ्गन्यासः। ॐ ह्रीं हृदयाय नमः ॐ श्रीं शिरसे स्वाहा। ॐ ऐं शिखायै वषट् ॐ ह्रीं कवचाय हुम् ॐ श्रीं नेत्रत्रयाय वौषट् ॐ ऐं अस्त्राय फट्। एवं करन्यासः। अथ ध्यानम्। देवैर्ध्येयां त्रिनेत्रामसुरदलघनारण्यरोरा(दावा?)ग्निरूपां रौद्रीं रक्ताम्बराढ्यां रतिघटिघटितोरोजयुग्मोग्ररूपाम्। चन्द्रार्द्धभ्राजिभव्याभरणकरलसद्बालबिम्बाम्भवानीं सिन्दूरापूरिताङ्गीं त्रिभुवनजननीम्भैरवीम्भावयामि ॥ १॥ भवभ्रमत्समस्तभूतवेदमार्गदायिनीं दुरन्तदुःखदारिणीं विदारिणीं सुरद्रुहाम्। भवप्रदां भवान्धकारभेदनप्रभाकरामितप्रभाम्भवच्छिदां भजामि भैरवीं सदा ॥ १॥ उरुप्रलम्बिता हि माल्यचन्द्रभालभूषणां नवाम्बुदप्रभां सरोज चारुलोचनत्रयाम्। सुपर्व्ववृन्दवन्दितां सुरापदन्तकारिकां भवानुभावभाविनीम्भजामि भैरवीं सदा ॥ २॥ अखण्डभूमिमण्डलैकभारधीरधारिणीं सुभक्तिभावितात्मनां विभूतिभव्यदायिनीम्। भवप्रपञ्चकारिणीं विहारिणीम्भवाम्बुधौ भवस्य हृद्यभावि(मि)नीं भजामि भैरवीं सदा ॥३॥ शरच्चमत्कृतार्च्यचन्द्रचन्द्रिकाविरोधिकप्रभावतीमुखाब्जमञ्जुमाधुरीमिलद्गिराम्। भुजङ्गमालया नृमुण्डमालया च मण्डितां सुभक्तिमुक्तिभुक्तिदां भजामि भैरवीं सदा ॥ ४॥ सुधांशुसूर्यवह्निलोचनत्रयान्विताननां नरान्तकान्तकप्रभूतिपर्वदत्तदक्षिणाम्। समुण्डचण्डखण्डनप्रचण्डचन्द्रहासिनीन्तमोमतिप्रकाशिनीम्भजामि भैरवीं सदा ॥ ५॥ त्रिशूलिनीं त्रिपुण्ड्रिनीं त्रिखण्डिनीं त्रिदण्डिनीं गुणत्रयातिरिक्तमत्यचिन्त्यचित्स्वरूपिणीम्। सवासवादितेयवैरिवृन्दवंशभेदिनीं भवप्रभावभाविनीम्भजामि भैरवीं सदा ॥ ६॥ सुदीप्तकोटिबालभानुमण्डलप्रभाङ्गभादिगन्तदारितान्धकारभूरिपुञ्जपद्धतिम्। द्विजन्मनित्यधर्मनीतिवृद्धिलग्नमानसां सरोजरोचिराननाम्भजामि भैरवीं सदा ॥ ७॥ चलत्सुवर्णकुण्डलप्रभोल्लसत्कलत्रसमाकुलाननाम्बुजस्थशुभ्रकीरनासिकाम्। सचन्द्रभालभैरवस्य दर्शनस्पृहच्चकोरनीलकञ्जदर्शनाम्भजामि भैरवीं सदा ॥ ८॥ इमं हृदाख्यसङ्गतस्तवम्पठन्ति येऽनिशम्पतन्ति ते कदापि नाऽन्धकूपरूपवद्भवे। भवन्ति च प्रभूतिभक्तिमुक्तिमन्तउज्ज्वलास्ततः प्रसीदति प्रमोदमानसा च

भैरवी ॥ ९ ॥ यशो जगत्यजस्रमुज्ज्वलञ्जयत्यलं समे न तस्य जायते पराजयाऽक्षमा जगत्त्रये। सदा स्तुतिं शुभामिमां पठन्त्यनन्यमानसो भवन्ति तस्य सम्पदोऽपि सन्ततं सुखप्रदा ॥१०॥ जपपूजादिकाः सर्वा स्तोत्रपाठादिकाश्च याः। भैरवीहृदयस्याऽस्य कला नार्हन्ति षोडशीम् ॥११॥ किमत्र बहुनोक्तेन शृणु देवि! महेश्वरि! नाऽतः परतरं किञ्चित्पुण्यमस्ति जगत्त्रये ॥१२॥

॥ इति श्रीभैरवकुलसर्वस्वे श्रीभैरवीहृदयस्तोत्रं समाप्तम् ॥

---

## अथ श्रीभैरवीशतनामस्तोत्रम्

श्रीदेव्युवाच। कैलासवासिन्भगवन्प्राणेश्वर! कृपानिधे!। भक्तवत्सल! भैरव्या नाम्नामष्टोत्तरं शतम् ॥१॥ न श्रुतं देवदेवेश! वद मां दीनवत्सल!। श्रीशिव उवाच। शृणु प्रिये! महागोप्यं नाम्नामष्टोत्तरं शतम् ॥ २ ॥ भैरव्याः शुभदं सेव्यं सर्वसम्पत्प्रदायकम्। यस्याऽनुष्ठानमात्रेण किन्न सिद्ध्यति भूतले ॥३॥ ॐ भैरवी भैरवाराध्या भूतिदा भूतभावना। आर्य्या ब्राह्मी कामधेनुः सर्वसम्पत्प्रदायिनी ॥४॥ त्रैलोक्यवन्दिता देवी महिषासुरमर्दिनी। मोहघ्नी मालती माला महापातकनाशिनी ॥५॥ क्रोधिनी क्रोधनिलया क्रोधरक्तेक्षणा कुहूः। त्रिपुरा त्रिपुराधारा त्रिनेत्रा भीमभैरवी ॥ ६ ॥ देवकी देवमाता च देवदुष्टविनाशिनी। दामोदरप्रिया दीर्घा दुर्गा दुर्गतिनाशिनी ॥ ७ ॥ लम्बोदरी लम्बकर्णा प्रलम्बितपयोधरा। प्रत्यङ्गिरा प्रतिपदा प्रणतक्लेशनाशिनी ॥ ८ ॥ प्रभावती गुणवती गणमाता गुहेश्वरी। क्षीराब्धितनया क्षेम्या जगत्त्राणविधायिनी ॥ ९ ॥ महामारी महामोहा महाक्रोधा महानदी। महापातकसंहन्त्री महामोहप्रदायिनी ॥ १० ॥ विकराला महाकाला कालरूपा कलावती। कपालखट्वाङ्गधरा खड्गखर्परधारिणी ॥१०॥ कुमारी कुङ्कुमप्रीता कुङ्कुमारुणरञ्जिता। कौमोदकी कुमुदिनी कीर्त्या कीर्त्तिप्रदायिनी ॥१२॥ नवीना नीरदा नित्या नन्दिकेश्वरपालिनी। घर्घरा घर्घरारावा घोरा घोरस्वरू-

पिणी॥१३॥ कलिघ्नी कलिधर्मघ्नी कलिकौतुकनाशिनी। किशोरी केशवप्रीता क्लेशसङ्घ-निवारिणी ॥१४॥ महोन्मत्ता महामत्ता महाविद्या महीमयी। महायज्ञा महावाणी महामन्दरधारिणी ॥१५॥ मोक्षदा मोहदा मोहा भुक्तिमुक्तिप्रदायिनी। अट्टाट्टहास-निरता क्वणन्नूपुरधारिणी ॥१६॥ दीर्घदंष्ट्रा दीर्घमुखी दीर्घघोणा च दीर्घिका। दनुजान्तकरी दुष्टा दुःखदारिद्र्यभञ्जिनी ॥१७॥ दुराचारा च दोषघ्नी दमपत्नी दयापरा। मनोभवा मनुमयी मनुवंशप्रवर्द्धिनी ॥१८॥ श्यामा श्यामतनुः शोभा सौम्या शम्भुविलासिनी। इति ते कथितं दिव्यं नाम्नामष्टोत्तरं शतम् ॥१९॥ भैरव्या देवदेवेश्या स्तवप्रीत्यै सुरेश्वरि!। अप्रकाश्यमिदं गोप्यं पठनीयम्प्रयत्नतः ॥२०॥ देवीन्ध्यात्वा सुराम्पीत्वा मकारपञ्चकैः प्रिये!। पूजयेत्सततं भक्त्या पठेत्स्तोत्रमिदं शुभम् ॥२१॥ षण्मासाभ्यन्तरे सोऽपि गणनाथसमो भवेत्। किमत्र बहुनोक्तेन त्वदग्रे प्राणवल्लभे! ॥२२॥ सर्वं जानासि सर्वज्ञे! पुनर्माम्परिपृच्छसि। न देयं परशि-ष्येभ्यो निन्दकेभ्यो विशेषतः ॥२३॥

॥ इति श्रीभैरव्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीधूमावतीस्तोत्राणि

ध्यानम्। विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा। विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा ॥ काकध्वजरथारूढा विलम्बितपयोधरा। शूर्पहस्तातिरूक्षाक्षा धूत-हस्तावरान्विता ॥ प्रवृद्धघोणा तु भृशङ्कुटिला कुटिलेक्षणा। क्षुत्पिपासार्दिता नित्य-म्भयदा कलहास्पदा ॥

प्रातर्या स्यात्कुमारी कुसुमकलिकया जापमाला जपन्ती मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा निशायाम्। सन्ध्यायां वृद्धरूपा गलितकुचयुगा मुण्डमालां वहन्ती सा देवी देवदेवी त्रिभुवनजननी कालिका पातु युष्मान् ॥ १ ॥ बद्ध्वा खट्वाङ्गकोटौ कपिलवरजटामण्डलं पद्मयोनेः कृत्वा दैत्योत्तमाङ्गैः स्रजमुरसि शिरः

शैगरल्माक्ष्र्यपक्षे । पूर्णं रक्तैः सुराणां यममहिषमहाशृङ्गमादाय पाणौ पायाद्वो वन्द्यमानप्रलयमुदितया भैरवः कालरात्र्याम् ॥ २ ॥ चर्वन्तीमस्थिखण्डम्प्रकटकटकटा शब्दसङ्घातमुग्रङ्कुर्वाणा प्रेतमध्ये कहहकहकहाहास्यमुग्रं कृशाङ्गी। नित्यं नित्यप्रसक्ता डमरुडिमडिमा स्फारयन्ती मुखाब्जं पायान्नश्चण्डिकेयं झझमझमझमा जल्पमाना भ्रमन्ती ॥ ३ ॥ टण्टण्टण्टण्टण्टण्टाप्रकरटमटमानाटघण्टां वहन्ती स्फें स्फें स्फें स्फारकाराटकटकितहसानादसङ्घट्टभीमा । लोलम्मुण्डाग्रमाला ललहलहलहा लोललोलाग्रवाचञ्चर्वन्ती चण्डमुण्डं मटमटमटिते चर्वयन्ती पुनातु ॥ ४ ॥ वामे कर्णे मृगाङ्कप्रलयपरिगतं दक्षिणे सूर्यबिम्बं कण्ठे नक्षत्रहारं वरविकटजटाजूटके मुण्डमालाम् । स्कन्धे कृत्वोरगेन्द्रध्वजनिकरयुतम्ब्रह्मकङ्कालभारं संहारे धारयन्ती मम हरतु भयम्भद्रदा भद्रकाली ॥ ५ ॥ तैलाभ्यक्तैकवेणी त्रपुमयविलसत्कर्णिकाक्रान्तकर्णा लोहेनैकेन कृत्वा चरणनलिनकामात्मनः पादशोभाम् । दिग्वासा रासभेन ग्रसति जगदिदं या यवाकर्णपूरा वर्षिण्यातिप्रबद्धा ध्वजविततभुजा साऽसि देवि! त्वमेव ॥ ६ ॥ सङ्ग्रामे हेतिकृत्वैः सरुधिरदशनैर्यद्भटानां शिरोभिर्मालामाबध्य मूर्ध्नि ध्वजविततभुजा त्वं श्मशाने प्रविष्टा । दृष्टा भूतप्रभूतैः पृथुतरजघना बद्धनागेन्द्रकाञ्ची शूलाग्रव्यग्रहस्ता मधुरुधिरसदाताम्रनेत्रा निशायाम् ॥ ७ ॥ दंष्ट्रा रौद्रेमुखेऽस्मिंस्तव विशति जगद्देवि! सर्वं क्षणार्द्धात्संसारस्यान्तकाले नररुधिरवशासम्प्लवे भूमधूम्रे ।। काली कापालिकी सा शवशयनतरा योगिनी योगमुद्रा रक्तारुद्धिः समाप्या मरणभयहरा त्वं शिवा चण्डघण्टा ॥ ८ ॥ धूमावत्यष्टकं पुण्यं सर्वापद्विनिवारकम् । यः पठेत्साधको भक्त्या सिद्धिं विन्दति वाञ्छिताम् ॥ ९ ॥ महापदि महाघोरे महारोगे महारणे । शत्रूच्चाटे मारणादौ जन्तूनाम्मोहने तथा ॥ १० ॥ पठेत्स्तोत्रमिदं देवि! सर्वत्र सिद्धिभाग्भवेत्। देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।११। सिंहव्याघ्रादिकाः सर्वे स्तोत्रस्मरणमात्रतः । दूराद्दूरतरं यान्ति किम्पुनर्मानुषादयः ।१२। स्तोत्रेणाऽनेन देवेशि! किन्न सिद्ध्यति भूतले। सर्वशान्तिर्भवेद्देवि! ह्यन्ते निर्वाणतां व्रजेत् ॥१३॥ इत्यूर्द्ध्वाम्नाये श्रीधूमावतीस्तोत्रं समाप्तम् ॥

## अथ कवचम्

श्री पार्वत्युवाच। धूमावत्यर्चनं शम्भो! श्रुतं विस्तरतो मया। कवचं श्रोतुमिच्छामि तस्या देव! वदस्व मे॥ १॥ श्रीभैरव उवाच। शृणु देवि! परङ्गुह्यं न प्रकाश्यं कलौ युगे। कवचं श्रीधूमावत्याः शत्रुनिग्रहकारकम्॥ ब्रह्माद्या देवि! सततं यद्वशादरिघातिनः। योगिनोऽभवञ्छत्रुघ्ना यस्या ध्यानप्रभावतः॥

ओ३मस्य श्रीधूमावतीकवचस्य पिप्पलादऋृषिरनुष्टुप्छन्दः श्रीधूमावती देवता धूँ वीजं स्वाहा शक्तिः धूमावतीकीलकं शत्रुहनने पाठे विनियोगः।

ॐ धूँ वीजम्मे शिरः पातु धूं ललाटं सदाऽवतु। धूमा नेत्रयुगम्पातु वती कर्णौ सदाऽवतु॥ दीर्घा तूदरमध्ये तु नाभिम्मे मलिनाम्वरा। शूर्पहस्ता पातु गुह्यं रक्षा रक्षतु जानुनी॥ मुखम्मे पातु भीमाख्या स्वाहा रक्षतु नासिकाम्। सर्वा विद्याऽवतु कण्ठं विवर्णा वाहुयुग्मकम्॥ चञ्चला हृदयम्पातु दुष्टा पार्श्वं सदाऽवतु। धूमहस्ता सदा पातु पादौ पातु भयावहा॥ प्रवृद्धरोमा तु भृशं कुटिला कुटिलेक्षणा। क्षुत्पिपासार्दिता देवी भयदा कलहप्रिया॥ सर्वाङ्गं पातु मे देवी सर्वशत्रुविनाशिनी। इति ते कवचं पुण्यं कथितम्भुवि दुर्ल्लभम्॥ न प्रकाश्यं न प्रकाश्यं न प्रकाश्यं कलौ युगे। पठनीयं महादेवि! त्रिसन्ध्यं ध्यानतत्परैः। दुष्टाभिचारो देवेशि! तद्गात्रं नैव संस्पृशेत्॥

॥ इति श्रीभैरवभैरवीसम्वादे धूमावतीतत्त्वे श्रीधूमावतीकवचं सम्पूर्णम्॥

## अथ हृदयम्

ओ३मस्य श्रीधूमावतीहृदयस्तोत्रमन्त्रस्य पिप्पलादऋषिरनुष्टुप्छन्दः श्रीधूमावती-देवता धूम्बीजं ह्रीं शक्तिः क्लीं कीलकं सर्वशत्रुसंहारणे विनियोगः।

अथाऽङ्गन्यासः। ॐ धां हृदयाय नम, धीं शिरसे स्वाहा, धूं शिखायै वषट्, धैं कवचाय हुम्, धौं नेत्रत्रयाय वौषट्, धः अस्त्राय फट्।

एवङ्करन्यासो यथा :—धां अङ्गुष्ठाभ्यां नमः, धीं तर्ज्जनीभ्यां स्वाहा, धूं मध्य-माभ्यां वषट्, धैं अनामिकाभ्यां हुम्, धौं कनिष्ठाभ्यां वौषट्, धः करतलकरपृष्ठाभ्यां फट्।

अथ ध्यानम्। धूम्राभां धूम्रवस्त्राम्प्रकटितदशनां मुक्तबालाम्बराढ्यां काकाङ्क-स्यन्दनस्थान्धवलकरयुगां शूर्पहस्तातिरूक्षाम्। नित्यं क्षुत्क्षान्तदेहाम्मुहुरतिकुटिलां वारिवाञ्छाविचित्तां ध्यायेद्धूमावतीं वामनयनयुगलाम्भीतिदाम्भीषणास्याम्॥१॥ कल्पादौ या कालिकाद्याऽचीकलन्मधुकैटभौ। कल्पान्ते त्रिजगत्सर्वं धूमावती-म्भजामि ताम्॥२॥ खट्वाङ्गधारिणी खर्वा खण्डिनी खलरक्षसाम्। धारिणी खेटकस्याऽपि धूमावतीम्भजामि ताम्॥३॥ गुणागारा गम्यगुणा याऽगुणा गुण-वर्द्धिनी। गीता तत्त्वार्थवेदज्ञैर्धूमावतीम्भजामि ताम्॥४॥ घूर्णघूर्णकरा घोरा घूर्णिताक्षी घनस्वना। घातिनी घातकानां या धूमावतीम्भजामि ताम्॥५॥ चर्व्वन्तीमस्थिखण्डानां चण्डमुण्डविदारिणीम्। चण्डाट्टहासिनीं देवीं भजे धूमावती-महम्॥६॥ छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्तास्वरूपिणीम्। छेदिनीन्दुष्टसङ्घानां भजे धूमावतीमहम्॥७॥ जाता या याचिता देवैरसुराणाम्विघातिनीम्। जल्पन्तीं बहुगर्ज्जन्तीं भजे तां धूम्ररूपिणीम्॥८॥ झङ्कारकारिणीं झञ्झां झञ्झमा झमवादिनीम्। झटित्याकर्षिणीन्देवीं भजे धूमावतीमहम्॥९॥ टीपटङ्कार-संयुक्तां धनुष्टङ्कारकारिणीम्। घोराघनघटाटोपां वन्दे धूमावतीमहम्॥१०॥

ठण्ठण्ठण्ठमनुप्रीतिण्ठः ठः मन्त्रस्वरूपिणीम्। ठमकाह्वगतिप्रीतां भजे धूमावतीमहम् ॥११॥ डमरुडिण्डिमारावाण्डाकिनीगणमण्डिताम्। डाकिनीभोगसन्तुष्टाम्भजे धूमावतीमहम् ॥१२॥ ढक्कानादेन सन्तुष्टाण्ढक्कावादकसिद्धिदाम्। ढक्कावादचलच्चित्ताम्भजे धूमावतीमहम् ॥ १३ ॥ तत्त्ववार्त्ताप्रियप्राणां भवपाथोधितारिणीम्। तारस्वरूपिणीं ताराम्भजे धूमावतीमहम् ॥१४॥ थां थीं थूं थें मन्त्ररूपां थैं थौं थं थः स्वरूपिणीम्। थकारवर्णसर्वस्वां भजे धूमावतीमहम् ॥१५॥ दुर्गास्वरूपिणीन्देवीं दुष्टदानवदारिणीम्। देवदैत्यकृतध्वंसां वन्दे धूमावतीमहम् ॥१६॥ ध्वान्ताकारान्धकध्वंसां मुक्तधम्मिल्लधारिणीम्। धूमधाराप्रभान्धीरां भजे धूमावतीमहम् ॥ १७ ॥ नर्त्तकीं नटनप्रीतां नाट्यकर्म्मविवर्द्धिनीम्। नारसिंहीं नराराध्यां नौमि धूमावतीमहम् ॥१८॥ पार्वतीपतिसम्पूज्यां पर्वतोपरिवासिनीम्। पद्मारूपाम्पद्मपूज्यां नौमि धूमावतीमहम् ॥१९॥ फूत्कारसहितश्वासां फट्मन्त्रफलदायिनीम्। फेत्कारिगणसंसेव्यां सेवे धूमावतीमहम् ॥ २० ॥ बलिपूज्यां बलाराध्यां बगलारूपिणीम्वराम्। ब्रह्मादिवन्दितान्दिव्यां वन्दे धूमावतीमहम् ॥२१॥ भव्यरूपां भवाराध्यां भुवनेशीस्वरूपिणीम्। भक्तभव्यप्रदान्देवीं भजे धूमावतीमहम् ॥२२॥ मायाम्मधुमतीं मान्यां मकरध्वजमानिताम्। मत्स्यमांसमदास्वादां मन्ये धूमावतीमहम् ॥२३॥ योगयज्ञप्रसन्नास्यां योगिनीपरिसेविताम्। यशोदां यज्ञफलदां भजे धूमावतीमहम् ॥ २४ ॥ रामाराध्यपदद्वन्द्वां रावणध्वंसकारिणीम्। रमेशरमणीं पूज्यामहं धूमावतीं श्रये ॥२५॥ लक्षलीलाकलालक्ष्यां लोकवन्द्यपदाम्बुजाम्। लम्बिताम्बीजकोशाढ्यां वन्दे धूमावतीमहम् ॥२६॥ बकपूज्यपदाम्भोजाम्बकध्यानपरायणाम्। बालाम्बकारिसन्ध्येयां वन्दे धूमावतीमहम् ॥२७॥ शङ्करीं शङ्करप्राणां सङ्कटध्वंसकारिणीम्। शत्रुसंहारिणीं शुद्धां श्रये धूमावतीमहम् ॥२८॥ षडाननारिसंहन्त्रीं षोडशीरूपधारिणीम्। षड्रसास्वादिनीं सौम्यां सेवे धूमावतीमहम् ॥२९॥ सुरसेवितपादाब्जां सुरसौख्यप्रदायिनीम्। सुन्दरीगणसंसेव्यां सेवे धूमावतीमहम् ॥ ३० ॥ हेरम्बजननीं योग्यां हास्यलास्यविहारिणीम्। हारिणीं

शत्रुमद्दाना सेवे धूमावतीमहम् ॥३१॥ क्षीरोदतीरसंवासा क्षीरपानप्रहर्षिताम् । क्षणदेशेज्यपादाब्जा सेवे धूमावतीमहम् ॥ ३२ ॥ चतुस्त्रिंशद्वर्णकानां प्रतिवर्णादिनामभिः । कृतन्तु हृदयस्तोत्रं धूमावत्याः सुसिद्धिदम् ॥३३॥ य इदं पठति स्तोत्रम्पवित्रं पापनाशनम् । स प्राप्नोति परां सिद्धिं धूमावत्याः प्रसादतः ॥३४॥ पठन्नेकाग्रचित्तो यो यद्यदिच्छति मानवः । तत्सर्वं समवाप्नोति सत्यं सत्यं वदाम्यहम् ॥३५॥

॥ इति श्रीधूमावतीहृदयं समाप्तम् ॥

---

## अथ श्रीधूमावतीशतनामस्तोत्रम्

ईश्वर उवाच । ॐ धूमावती धूम्रवर्णा धूम्रपानपरायणा । धूम्राक्षमथिनी धन्या धन्यस्थाननिवासिनी ॥ १ ॥ अघोराचारसन्तुष्टा अघोराचारमण्डिता । अघोरमन्त्रसम्प्रीता अघोरमन्त्रपूजिता ॥ २ ॥ अट्टाट्टहासनिरता मलिनाम्बरधारिणी । वृद्धा विरूपा विधवा विद्या च विरलद्विजा ॥ ३ ॥ प्रवृद्धघोणा कुमुखी कुटिला कुटिलेक्षणा । कराली च करालास्या कङ्काली शूर्पधारिणी ॥ ४ ॥ काकध्वजा रथारूढा केवला कठिना कुहूः । क्षुत्पिपासार्दिता नित्या ललज्जिह्वा दिगम्बरी ॥५॥ दीर्घोदरी दीर्घरवा दीर्घाङ्गी दीर्घमस्तका । विमुक्तकुन्तला कीर्त्या कैलासस्थानवासिनी ॥ ६ ॥ क्रूरा कालस्वरूपा च कालचक्रप्रवर्त्तिनी । विवर्णा चञ्चला दुष्टा दुष्टविध्वंसकारिणी ॥७॥ चण्डीचण्डस्वरूपा च चामुण्डा चण्डनिःस्वना । चण्डवेगा चण्डगतिश्चण्डमुण्डविनाशिनी ॥८॥ चाण्डालिनी चित्ररेखा चित्राङ्गी चित्ररूपिणी । कृष्णा कपर्दिनी कुल्ला कृष्णारूपा क्रियावती ॥९॥ कुम्भस्तनी महोन्मत्ता मदिरापानविह्वला । चतुर्भुजा ललज्जिह्वा शत्रुसंहारकारिणी ॥१०॥ शवारूढा शवगता श्मशानस्थानवासिनी । दुराराध्या दुराचारा दुर्जनप्रीतिदायिनी ॥११॥ निर्मांसा च

निराकारा धूतहस्ता वरान्विता। कलहा च कलिप्रीता कलिकल्मषनाशिनी ॥१२॥ महाकालस्वरूपा च महाकालप्रपूजिता। महादेवप्रिया मेधा महासङ्कटनाशिनी।१३। भक्तप्रिया भक्तगतिर्भक्तशत्रुविनाशिनी। भैरवी भुवना भीमा भारती भुवनात्मिका ॥१४॥ भरुण्डा भीमनयना त्रिनेत्रा बहुरूपिणी। त्रिलोकेशी त्रिकालज्ञा त्रिस्वरूपा त्रयीतनुः ॥१५॥ त्रिमूर्त्तिश्च तथा तन्वी त्रिशक्तिश्च त्रिशूलिनी। इति धूमामहत्स्तोत्रं नाम्नामष्टशतात्मकम् ॥१६॥ मया ते कथितन्देवि ! शत्रुसङ्घविनाशनम्। कारागारे रिपुग्रस्ते महोत्पाते महाभये ॥१७॥ इदं स्तोत्रं पठेन्मर्त्यो मुच्यते सर्वसङ्कटैः। गुह्याद्गुह्यतरं गुह्यं गोपनीयम्प्रयत्नतः। चतुष्पदार्थदं नृणां सर्वसम्पत्प्रदायकम् ॥१८॥

॥ इति श्रीधूमावत्यष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

## अथ श्रीबगलामुखीस्तोत्राणि

अस्या ध्यानमत्रैवश्लोकद्वयेद्रष्टव्यम् नमाम्यन्तेन पाठ्यम्।

ॐ अस्य श्रीबगलामुखीस्तोत्रस्य नारदऋषिः श्रीबगलामुखी देवता मम सन्निहितानां विरोधिनां वाङ्मुखपदबुद्धीनां स्तम्भनार्थे विनियोगः।

मध्ये सुधाब्धिमणिमण्डपरत्नवेदी सिंहासनोपरिगतां परिपीतवर्णाम्। पीताम्बराभरणमाल्यविभूषिताङ्गीं देवीं भजामि(नमामि)धृतमुद्गरवैरिजिह्वाम् ॥१॥ जिह्वाग्रमादाय करेण देवी वामेन शत्रून्परिपीडयन्तीम्। गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजाम्भजामि(नमामि)।२। चलत्कनककुण्डलोल्लसितचारुगण्डस्थलां लसत्कनकचम्पकद्युतिमदिन्दुबिम्बाननाम्। गदाहतविपक्षकां कलितलोलजिह्वां चलां स्मरामि बगलामुखीं विमुखवाङ्मनस्तम्भिनीम् ॥ ३ ॥ पीयूषोदधिमध्यचारुविलसद्रक्तोत्पले मण्डपे सत्सिंहासनमौलिपातितरिपुम्प्रेतासनाध्यासिनीम्। स्वर्णाभां करपीडितारिरसनाम्भ्राम्यद्गदां विभ्रमामित्थन्ध्यायति यान्ति तस्य विलयं सद्योऽथ

ॐ अस्य श्रीबगलामुखीब्रह्मास्त्रमन्त्रकवचस्य भैरवऋषिर्विराट्छन्दः श्रीबगलामुखी देवता क्लीं बीजं ऐं शक्तिः श्रीं कीलकं मम परस्य च मनोऽभिलषितेष्टकार्यसिद्धये विनियोगः।

शिरसि भैरवऋषये नमः मुखे विराट्छन्दसे नमः हृदि बगलामुखीदेवतायै नमः गुह्ये क्लीं बीजाय नमः पादयोः ऐं शक्तये नमः सर्वाङ्गे श्रीं कीलकाय नमः ॐ ह्रां अङ्गुष्ठाभ्यां नमः ॐ ह्रीं तर्जनीभ्यान्नमः ॐ ह्रूं मध्यमाभ्यान्नमः ॐ ह्रैं अनामिकाभ्यां नमः ॐ ह्रौं कनिष्ठिकाभ्यान्नमः ॐ ह्रः करतलकरपृष्ठाभ्यान्नमः। ॐ ह्रां हृदयाय नमः ॐ ह्रीं शिरसे स्वाहा ॐ ह्रूं शिखायैवषट् ॐ ह्रैं कवचाय हुम् ॐ ह्रौं नेत्रत्रयाय वौषट् ॐ ह्रः अस्त्राय फट्। अथ मन्त्रोद्धारः ॐ ह्रां ऐं श्रीं क्लीं श्रीं बगलानने मम रिपून्नाशय २ ममैश्वर्याणि देहि २ शीघ्रम्मनोवाञ्छितकार्यं साधय साधय ह्रीं स्वाहा।

शिरो मे पातु ॐ ह्रीं ऐं श्रीं क्लीं पातु ललाटकम्। सम्बोधनपदम्पातु नेत्रे श्रीबगलानने ॥ १ ॥ श्रुतौ मम रिपुम्पातु नासिकां नाशयद्वयम्। पातु गण्डौ सदा मामैश्वर्य्याण्यन्तन्तु मस्तकम् ॥ २ ॥ देहि द्वन्द्वं सदा जिह्वां पातु शीघ्रं वचो मम। कण्ठदेशं स नः पातु वाञ्छितम्बाहुमूलकम् ॥३॥ कार्य्यं साधय द्वन्द्वन्तु करौ पातु सदा मम। मायायुक्ता तथा स्वाहा हृदयम्पातु सर्वदा ॥४॥ अष्टाधिकचत्वारिंशदण्डाढ्या बगलामुखी। रक्षाङ्करोतु सर्वत्र गृहेऽरण्ये सदा मम ॥ ५ ॥ ब्रह्मास्त्राख्यो मनुः पातु सर्वाङ्गे सर्वसन्धिषु। मन्त्रराजः सदा रक्षाङ्करोतु मम सर्वदा ॥ ६ ॥ ॐ ह्रीं पातु नाभिदेशम्मे कटिम्मे बगलाऽवतु। मुखी वर्णद्वयम्पातु लिङ्गम्मे मुष्कयुग्मकम् ॥ ७ ॥ जानुनी सर्वदुष्टानां पातु मे वर्णपञ्चकम्। वाचम्मुखं तथा पादं षड्वर्णा परमेश्वरी ॥ ८ ॥ जङ्घायुग्मे सदा पातु बगला रिपुमोहिनी। स्तम्भयेति पदम्पृष्ठं पातु वर्णत्रयम्मम ॥ ९ ॥ जिह्वां वर्णद्वयम्पातु गुल्फौ मे कीलयेति च। पादोर्ध्वं सर्वदा पातु बुद्धिम्पादतले मम ॥१०॥ विनाशय पदम्पातु पादाङ्गुल्योर्नखानि मे। ह्रीं बीजं सर्वदा पातु बुद्धीन्द्रियवचांसि मे ॥११॥ सर्वाङ्गम्प्रणवः पातु

स्वाहा रोमाणि मेऽवतु । ब्राह्मी पूर्वदले पातु चाऽऽग्नेय्यां विष्णुवल्लभा ॥१२॥ माहेशी दक्षिणे पातु चामुण्डा राक्षसेऽवतु । कौमारी पश्चिमे पातु वायव्ये चाऽपराजिता ॥१३॥ वाराही चोत्तरे पातु नारसिंही शिवेऽवतु । ऊर्द्ध्वं पातु महालक्ष्मीः पाताले शारदाऽवतु ॥१४॥ इत्यष्टौ शक्तयः पान्तु सायुधाश्च सवाहनाः । राजद्वारे महादुर्गे पातु मां गणनायकः ॥१५॥ श्मशाने जलमध्ये च भैरवश्च सदाऽवतु । द्विभुजा रक्तवसनाः सर्वाभरणभूषिताः ॥१६॥ योगिन्यः सर्वदा पान्तु महारण्ये सदा मम । इति ते कथितन्देवि कवचम्परमाद्भुतम् ॥१७॥ श्रीविश्वविजयन्नामकीर्तिश्रीविजयप्रदम् । अपुत्रो लभते पुत्रं धीरं शूरं शतायुषम् ॥१८॥ निर्द्धनो धनमाप्नोति कवचस्याऽस्य पाठतः । जपित्वा मन्त्रराजन्तु ध्यात्वा श्रीबगलामुखीम् ॥१९॥ पठेदिदं हि कवचं निशायां नियमात्तु यः । यद्यत्कामयते कामं साध्यासाध्ये महीतले ॥२०॥ तत्तत्काममवाप्नोति सप्तरात्रेण शङ्करी(रि?) । गुरुन्ध्यात्वा सुराम्पीत्वा रात्रौ शक्तिसमन्वितः ॥ २१ ॥ कवचं यः पठेद्देवि ! तस्याऽसाध्यं न किञ्चन । यन्ध्यात्वा प्रजपेन्मन्त्रसहस्रं कवचम्पठेत् ॥२२॥ त्रिरात्रेण वशं याति मृत्युं तन्नाऽत्र संशयः । लिखित्वा प्रतिमां शत्रोः सतालेन हरिद्रया ॥२३॥ लिखित्वा हृदि तन्नामतन्ध्यात्वा प्रजपेन्मनुम् । एकविंशदिनं यावत्प्रत्यहञ्च सहस्रकम् ॥२४॥ जप्त्वा पठेत्तु कवचञ्चतुर्विंशतिवारकम् । संस्तम्भञ्जायते शत्रोर्नाऽत्रकार्या विचारणा ॥२५॥ विवादे विजयन्तस्य सङ्ग्रामे जयमाप्नुयात् । श्मशाने च भयन्नास्ति कवचस्य प्रसादतः ॥२६॥ नवनीतञ्चाऽभिमन्त्र्य स्त्रीणान्दद्यान्महेश्वरि ! । वन्ध्यायाञ्जायते पुत्रो विद्याबलसमन्वितः ॥२७॥ श्मशानाङ्गारमादाय भौमे रात्रौ शनावथ । पादोदकेन स्पृष्ट्वा च लिखेल्लौहशलाकया ॥२८॥ भूमौ शत्रोः स्वरूपञ्च हृदि नाम समालिखेत् । हस्तन्तद्धृदये दत्त्वा कवचन्तिथिवारकम् ॥२९॥ ध्यात्वा जपेन्मन्त्रराजं नवरात्रम्प्रयत्नतः । म्रियते ज्वरदाहेन दशमेऽह्नि न संशयः ॥३०॥ भूर्ज्जपत्रेष्विदं स्तोत्रमष्टगन्धेन संलिखेत् । धारयेद्दक्षिणे बाहौ नारीवामभुजे तथा ॥३१॥ सङ्ग्रामे जयमाप्नोति नारी पुत्रवती भवेत् । ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम् ॥३२॥

सम्पूज्य कवचन्नित्यं पूजाया· फलमालभेत्। बृहस्पतिसमो वाऽपि विभवे धनदोपम. ॥३३॥ कामतुल्यश्च नारीणां शत्रूणाञ्च यमोपमः। कविताललहरी तस्य भवेद्गङ्गाप्रवाहवत् ॥ ३४ ॥ गद्यपद्यमयी वाणी भवेद्देवीप्रसादतः। एकादशशतं यावत्पुरश्चरणमुच्यते ॥ ३५ ॥ पुरश्चर्य्याविहीनन्तु न चेदम्फलदायकम्। न देयम्परशिष्येभ्यो दुष्टेभ्यश्च विशेषतः ॥३६॥ देयं शिष्याय भक्ताय पञ्चत्वञ्चान्यथाऽऽप्नुयात्। इदङ्कवचमज्ञात्वा भजेद्यो बगलामुखीम्। शतकोटि जपित्वा तु तस्य सिद्धिर्न्नजायते ॥३७॥ दाराढ्यो मनुजोऽस्य लक्षजपतः प्राप्नोति सिद्धिम्पराम्विद्या श्रीविजयन्तथा सुनियतन्धारञ्चवीरम्वरम्। ब्रह्मास्त्राख्यमनुं विलिख्य नितरां भूर्ज्जेऽष्टगन्धेन वै धृत्वा राजपुरम्व्रजन्ति खलु ये दासोऽस्ति तेषां नृपः ॥३८॥

॥ इति श्रीविश्वसारोद्धारतन्त्रे पार्वतीश्वरसम्वादे श्रीबगलामुखीकवचं समाप्तम् ॥

---

# अथ हृदयम्

ॐ अस्य श्रीबगलामुखीहृदयमालामन्त्रस्य नारदऋषिरनुष्टुप्छन्दः श्रीबगलामुखी देवता ह्लीं बीजम् क्लीं शक्तिः ऐं कीलकम् श्रीबगलामुखीप्रसादसिद्ध्यर्थे जपे विनियोगः।

अथ न्यासः। ॐ नारदऋषये नमः शिरसि ॐ अनुष्टुप्छन्दसे नमो मुखे ॐ श्रीबगलामुख्यै देवतायै नमो हृदये ॐ ह्लीं बीजाय नमो गुह्ये ॐ क्लीं शक्तये नमः पादयोः ॐ ऐं कीलकाय नमः सर्वाङ्गे।

अथ कराङ्गन्यासौ। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः ॐ क्लीं तर्जनीभ्यां नमः ॐ ऐं मध्यमाभ्यान्नमः ॐ ह्लीं अनामिकाभ्यां नमः ॐ क्लीं कनिष्ठिकाभ्यान्नमः ॐ ऐं करतलकरपृष्ठाभ्यान्नमः। ॐ ह्लीं हृदयाय नमः ॐ क्लीं शिरसे स्वाहा ॐ ऐं शिखायै वषट् ॐ ह्लीं कवचाय हुम् ॐ क्लीं नेत्रत्रयाय वौषट् ॐ ऐं अस्त्राय फट् ॐ ह्लीं क्लीं ऐं

इतिदिग्वन्धः। पीताम्बराम्पीतमाल्यां पीताभरणवि(?)भूषिताम्। पीतकञ्जपदद्वन्द्वाम्ब-गलाञ्चिन्तयेऽनिशम्॥ इति ध्यात्वा सम्पूज्य। पीतशङ्खगदाहस्ते। पीतचन्दनचर्चिते!। वगले! मे वरन्देहि शत्रुसङ्घविदारिणी॥ इति सम्प्रार्थ्य। ॐ ह्लीं क्लीं ऐं वगलामुख्यै गदाधारिण्यै प्रेतासनाध्यासिन्यै स्वाहा। इति मन्त्रञ्जपित्वा पुनः पूर्ववदृष्यादिषडङ्गन्यासं कृत्वा स्तोत्रम्पठेत्।

तद्यथा। वन्देऽहंम्वगलान्देवीं पीतभूषणभूषिताम्। तेजोरूपमयीं देवीं पीततेजः-स्वरूपिणीम् ॥ १ ॥ गदाभ्रमणभिन्नाभ्रां भ्रुकुटीभीषणाननाम्। भीषयन्तीं भीमशत्रून्भजे भक्तस्य भव्यदाम्॥ २॥ पूर्णचन्द्रसमानास्यां पीतगन्धानुलेपनाम्। पीताम्बरपरीधानाम्पवित्रामाश्रयाम्यहम्॥ ३ ॥ पालयन्तीमनुपलम्प्रसमीक्ष्याऽव-नीतले। पीताचाररताम्भक्तान्ताम्भवानीं भजाम्यहम्॥ ४ ॥ पीतपद्मपदद्वन्द्वा-श्चम्पकारण्यरोपिणीम्। पीतावतंसाम्परमां वन्दे पद्मजवन्दिताम्॥ ५ ॥ लस-च्चारुसिञ्जत्सुमञ्जीरपादां चलत्स्वर्णकर्णावतंसां चितास्याम्। वलत्पीतचन्द्राननां चन्द्रवन्द्यां भजे पद्मजादीड्यसत्पादपद्माम् ॥ ६ ॥ सुपीताभयामालयापूतम-न्त्रम्परन्ते जपन्तो जयं संलभन्ते। रणे रागरोषाप्लुतानां रिपूणां विवादे वलाद्वैर-कृद्धातमातः॥ ७॥ रक्तपीतभास्वत्प्रभाहस्कराभाङ्गदागञ्जितामित्रगर्वां गरिष्ठाम्। गरीयोगुणागारगात्रां गुणाढ्यां गणेशादिगम्यां श्रये निर्गुणाढ्याम्॥ ८॥ जना ये जपन्त्युग्रवीजञ्जगत्सु परम्प्रत्यहन्ते स्मरन्तः स्वरूपम्। भवेद्वादिनां वाङ्मुखस्तम्भ-आद्ये जयो जायते जल्पतामाशु तेषाम्॥ ९ ॥ तव ध्याननिष्ठा प्रतिष्ठात्मप्रज्ञाव-ताम्पादपद्मार्चने प्रेमयुक्ताः। प्रसन्ना नृपाः प्राकृताः पण्डिता वा पुराणादिगा दासतुल्या भवन्ति॥१०॥ नमामस्तेमातः कनककमनीयाङ्घ्रिजलजं वलद्विद्युद्वर्णं घनति-मिरविध्वंसकरणम्। भवाब्धौ मग्नात्मोत्तरणकरणं सर्वशरणं प्रपन्नानां मातर्ज्जगति वगले! दुःखदमनम्॥११॥ ज्वलज्ज्योत्स्नारत्नाकरमणिविपक्ताङ्कभवनं स्मरार धाम स्मरहरहरीन्द्रेन्दुप्रमुखैः। अहोरात्रम्प्रातः प्रणयनवनीयं सुविशदं परम्पीताव परिचितमणिद्वीपवसनम्॥१२॥ वदामस्तेमातः! श्रुतिसुखकरं नाम ललितं ल

न्मात्रा वर्णाञ्जगति बगलेति प्रचरितम् । चलन्तस्तिष्ठन्तो वयमुपविशन्तोऽपि शयने न भेभो यच्छ्रेयो दिवि दुरवलभ्यन्दिविषदाम् ॥१३॥ पदार्चायाम्प्रीतिः प्रतिदिन-मपूर्वा प्रभवतु यथा ते प्रासन्न्यम्प्रतिपलमपेक्ष्यम्प्रणमताम् । अनल्पं तन्मातर्भवति भृतभक्त्या भवतु नो दिशातः सद्भक्तिं भुवि भगवताम्भूरि भवदाम् ॥१४॥ मम सकलरिपूणां वाङ्मुखे स्तम्भयाऽऽशु भगवति रिपुजिह्वां कीलय प्रस्थतुल्याम् । व्ययमितखलबुद्धिन्नाशयाऽऽशु प्रगल्भा मम कुरु बहुकार्यं सत्कृपेऽम्ब ! प्रसीद ॥१५॥ व्रजतु मम रिपूणां सद्मनि प्रेतसंस्था करधृतगदया तान्घातयित्वाऽऽशु रोषात् । सघनवसनधान्यं सद्म लेपाम्प्रदह्य पुनरपि बगला स्वस्थानमायातु शीघ्रम् ॥१६॥ करधृतरिपुजिह्वा पीडनव्यग्रहस्ताम्पुनरपि गदया तान्ताडयन्तीं सुतन्त्राम् । प्रणत-सुरगणानां पालिका पीतवस्त्रा बहुबलबगलान्तां पीनवस्त्रां नमामः ॥१७॥ हृदय-वचनकायैः कुर्वताम्भक्तिपुञ्जं प्रकटितकरुणार्द्रां प्रीणती जल्पतीति । धनमथ बहुधान्यं पुत्रपौत्रादिवृद्धिः सकलमपि किमेभ्यो देयमेवन्त्ववश्यम् ॥१८॥ तव चरणसरोजं सर्वदा सेव्यमानं द्रुहिणहरिहराद्यैर्देववृन्दैः शरण्यम् । मृदुमपि शरणन्ते शर्मदं सूरिसेव्यं व्ययमिह करवामो मातरेतद्विधेयम् ॥१९॥ बगलाहृदयस्तोत्रमिदम्भक्ति-समन्वितः । पठेद्यो बगला तस्य प्रसन्ना पाठतो भवेत् ॥२०॥ पीतध्यानपरो भक्तो यः शृणोत्यविकल्पतः । निष्कल्मषो भवेन्मर्त्यो मृतो मोक्षमवाप्नुयात् ॥ २१ ॥ आश्विनस्य सिते पक्षे महाष्टम्या दिवानिशम् । यस्त्विदं पठते प्रेम्णा बगलाप्रीति-मेति सः ॥२२॥ देव्यालये पठन्मर्त्यो बगलान्ध्यायतीश्वरीम् । पीतवस्त्रावृतो यस्तु तस्य नश्यन्ति शत्रवः ॥२३॥ पीताचाररतो नित्यं पीतभूषाम्विचिन्तयन् । बगलां यः पठेन्नित्यं हृदयस्तोत्रमुत्तमम् ॥२४॥ न किञ्चिद्दुर्लभं तस्य दृश्यते जगतीतले । शत्रवो ग्लानिमायान्ति तस्य दर्शनमात्रतः ॥२५॥

॥ इति सिद्धेश्वरतन्त्रे उत्तरखण्डे बगलापटले श्रीबगलाहृदयस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीबगलाशतनाम

नारद उवाच । भगवन्देवदेवेश ! सृष्टिस्थितिलयात्मक ! । शतमष्टोत्तरं नाम्ना-म्बगलाया वदाऽधुना ॥ १ ॥ श्रीभगवानुवाच । शृणु वत्स ! प्रवक्ष्यामि नाम्नामष्टो-त्तरं शतम् । पीताम्बर्या महादेव्याः स्तोत्रम्पापप्रणाशनम् ॥ २ ॥ यस्य प्रपठना-त्सद्यो वादी मूको भवेत्क्षणात् । रिपूणां स्तम्भनं याति सत्यं सत्यं वदाम्यहम् ॥ ३ ॥

ॐ अस्य श्रीपीताम्बर्य्यष्टोत्तरशतनामस्तोत्रस्य सदाशिवऋषिरनुष्टुप्छन्दः श्री पीताम्बरीदेवता श्रीपीताम्बरीप्रीतये जपे विनियोगः ।

ॐ बगला विष्णुवनिता विष्णुशङ्करभामिनी । बहुला देवमाता च महाविष्णु-प्रसूरपि ॥ १ ॥ महामत्स्या महाकूर्म्मा महावाराहरूपिणी । नरसिंहप्रिया रम्या वामना वटुरूपिणी ॥२॥ जामदग्न्यस्वरूपा च रामा रामप्रपूजिता । कृष्णा कप-र्दिनी कृत्या कलहा कलविकारिणी ॥ ३ ॥ बुद्धिरूपा बुद्धभार्य्या बौद्धपाखण्ड-खण्डिनी । कल्किरूपा कलिहरा कलिदुर्गतिनाशिनी ॥ ४ ॥ कोटिसूर्य्यप्रतीकाशा कोटिकन्दर्पमोहिनी । केवला कठिना काली कला कैवल्यदायिनी ॥ ५ ॥ केशवी केशवाराध्या किशोरी केशवस्तुता । रुद्ररूपा रुद्रमूर्त्ती रुद्राणी रुद्रदेवता ॥ ६ ॥ नक्षत्ररूपा नक्षत्रा नक्षत्रेशप्रपूजिता । नक्षत्रेशप्रिया नित्या नक्षत्रपतिवन्दिता ॥७॥ नागिनी नागजननी नागराजप्रवन्दिता । नागेश्वरी नागकन्या नागरी च नगा-त्मजा ॥ ८ ॥ नगाधिराजतनया नगराजप्रपूजिता । नवीना नीरदा पीता श्यामा सौन्दर्य्यकारिणी ॥ ९ ॥ रक्ता नीला घना शुभ्रा श्वेता सौभाग्यदायिनी । सुन्दरी सौभगा सौम्या स्वर्णभा स्वर्गतिप्रदा ॥१०॥ रिपुत्रासकरी रेखा शत्रु-संहारकारिणी । भामिनी च तथा माया स्तम्भिनी मोहिनी शुभा ॥११॥ राग-द्वेषकरी रात्रीरौरवध्वंसकारिणी । यक्षिणी सिद्धनिवहा सिद्धेशा सिद्धिरूपिणी ॥ १२ ॥ [illegible] पुवन्दिता । लङ्कानाथकुलहरा महारावण-

हारिणी ॥१३॥ देवदानवसिद्धौघपूजिता परमेश्वरी। पराणुरूपा परमा परतन्त्रविनाशिनी ॥१४॥ वरदा वरदाराध्या वरदानपरायणा। वरदेशप्रिया वीरा वीरभूषणभूषिता ॥१५॥ वसुदा बहुदा वाणी ब्रह्मरूपा वरानना। बलदा पीतवसना पीतभूषणभूषिता ॥१६॥ पीतपुष्पप्रिया पीतहारा पीतस्वरूपिणी। इति ते कथितम्विप्र। नाम्नामष्टोत्तरं शतम् ॥१७॥ यः पठेत्पाठयेद्वाऽपि शृणुयाद्वा समाहितः। तस्य शत्रुक्षयं सद्यो याति नैवाऽत्र संशयः ॥१८॥ प्रभातकाले प्रयतो मनुष्यः पठेत्सुभक्त्या परिचिन्त्य पीताम्। द्रुतम्भवेत्तस्य समस्तवृद्धिर्विनाशमायाति च तस्य शत्रुः ॥१९॥

॥ इति श्रीविष्णुयामले नारदविष्णुसम्वादे श्रीबगलाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीमातङ्गीस्तोत्राणि

ईश्वर उवाच। आराध्य मातश्चरणाम्बुजे ते ब्रह्मादयो विस्तृतकीर्त्तिमापुः। अन्ये परम्वा विभवम्मुनीन्द्राः परां श्रियं भक्तिपरेण चाऽन्ये ॥ १ ॥ नमामि देवीं नवचन्द्रमौलेर्मातङ्गिनीं चन्द्रकलावतंसाम्। आम्नायप्राप्तिप्रतिपादितार्थम्प्रबोधयन्तीम्प्रियमादरेण ॥ २ ॥ विनम्रदेवस्थिरमौलिरत्नैर्विराजितन्ते चरणारविन्दम्। अकृत्रिमाणां वचसां विशुष्कं पदाम्पदं शिक्षितनूपुराभ्याम् ॥ ३ ॥ कृतार्थयन्तीम्पदवीम्पदाभ्यामास्फालयन्तीं कलवल्लकीन्ताम्। मातङ्गिनीं सद्धृदयान्धिनोमि लीलांशुकां शुद्धनितम्बबिम्बाम् ॥ ४ ॥ तालीदलेनाऽर्पितकर्णभूषाम्माध्वीमदोद्घूर्णितनेत्रपद्माम्। घनस्तनीं शम्भुवधूं नमामि तडिल्लताकान्तिमनर्घ्यभूषाम् ॥५॥ चिरेण लक्ष्यान्नवलोमराज्या स्मरामि भक्त्या जगतामधीशे।। वलित्रयाढ्यन्तवमध्यमम्ब! नीलोत्पलांशुश्रियमावहन्तीम् ॥ ६ ॥ कान्त्या कटाक्षैः कमलाकराणां कदम्ब-

मालाञ्चितकेशपाशाम्। मातङ्गकन्यां हृदि भावयामि ध्यायेयमारक्तकपोलबिम्बम् ॥ ७ ॥ बिम्बाधरं न्यस्य ललामवश्यमालोललीलालकमायताक्षम्। मन्दस्मितन्ते वदनम्महेशि! स्तुत्याऽनया शङ्करधर्मपत्नीम् ॥ ८ ॥ मातङ्गिनीं वागधिदेवतान्तां स्तुवन्ति ये भक्तियुता मनुष्याः। परां श्रियं नित्यमुपाश्रयन्ति परत्र कैलासतले वसन्ति ॥ ९ ॥

॥ इति श्रीरुद्रयामले मातङ्गीस्तोत्रं समाप्तम् ॥

---

# अथ मातङ्गीकवचम्

श्रीदेव्युवाच। साधु साधु महादेव! कथयस्व सुरेश्वर!। मातङ्गीकवचन्दिव्यं सर्वसिद्धिकरं नृणाम् ॥ १ ॥ श्री ईश्वर उवाच। शृणु देवि! प्रवक्ष्यामि मातङ्गीकवचं शुभम्। गोपनीयं महादेवि मौनी जापं समाचरेत् ॥ २ ॥

अस्य श्रीमातङ्गीकवचस्य दक्षिणामूर्तिऋषिर्विराट्छन्दो मातङ्गी देवता चतुर्वर्गसिद्धये विनियोगः।

ॐ शिरो मातङ्गिनी पातु भुवनेशी तु चक्षुषी। तोडला कर्णयुगलन्त्रिपुरा वदनं मम ॥ ३ ॥ पातु कण्ठे महामाया हृदि माहेश्वरी तथा। त्रिपुष्पा पार्श्वयोः पातु गुदे कामेश्वरी मम ॥ ४ ॥ ऊरुद्वये तथा चण्डी जङ्घयोश्च हरिप्रिया। महामाया पादयुग्मे सर्वाङ्गेषु कुलेश्वरी ॥ ५ ॥ अङ्गं प्रत्यङ्गकञ्चैव सदा रक्षतु वैष्णवी। ब्रह्मरन्ध्रे सदा रक्षेन्मातङ्गीनाम संस्थिता ॥ ६ ॥ ललाटे रक्षयेन्नित्यं महापिशाचिनीति च। नेत्राभ्यां सुमुखी रक्षेद्देवी रक्षतु नासिकाम् ॥ ७ ॥ महापिशाचिनी पायान्मुखे रक्षतु सर्वदा। लज्जा रक्षतु मान्दन्ते चोष्ठौ सम्मार्जनीकरी ॥ ८ ॥ चिबुके कण्ठदेशे तु चकारत्रितयम्पुनः। सविसर्गम्महादेवी हृदयम्पातु सर्वदा ॥९॥ नाभिं रक्षतु मा लोला कालिकाऽवतु लोचने। उदरे पातु चामुण्डा लिङ्गे कात्यायनी

तथा ॥१०॥ उग्रतारा गुदे पातु पादौ रक्षतु चाम्बिका। भुजौ रक्षतु शर्वाणी हृदयञ्चण्डभूषणा ॥११॥ जिह्वाया मातृका रक्षेन्पूर्वे रक्षतु पुष्टिका। विजया दक्षिणे पातु मेधा रक्षतु वारुणे ॥१२॥ नैर्ऋत्यां सुदया रक्षेद्वायव्याम्पातु लक्ष्मणा। ऐशान्य रक्षयेद्देवी मातङ्गी शुभकारिणी ॥१३॥ रक्षेत्सुरेशा चाग्नेये बगला पातु चोत्तरे। ऊर्ध्वं पातु महादेवी देवाना हितकारिणी ॥१४॥ पाताले पातु मा नित्यं वशिनी विश्वरूपिणी। प्रणवञ्च ततो माया कामबीजञ्च कूर्चकम् ॥१५॥ मातङ्गिनी ङेयुतास्त्रं वह्निजायावधिर्म्मनुः। सार्द्धैकादशवर्णा सा सर्वत्र पातु मां सदा ॥१६॥ इति ते कथितन्देवि ! गुह्याद्गुह्यतरम्परम्। त्रैलोक्यमङ्गलन्नाम कवचं देवदुर्ल्लभम् ॥१७॥ य इदम्प्रपठेन्नित्यं जायते सम्पदालयम्। परमैश्वर्यमतुलं प्राप्नुयान्नाऽत्र संशयः ॥१८॥ गुरुमभ्यर्च्य विधिवत्कवचम्प्रपठेद्यदि। ऐश्वर्य्यं सुकवित्वञ्च वाक्सिद्धिंल्लभते ध्रुवम् नित्यन्तस्य तु मातङ्गी महिलामङ्गलञ्चरेत्। ब्रह्माविष्णुश्च रुद्रश्च ये देवाः सुरसत्तम ॥२०॥ ब्रह्मराक्षसवेतालाः ग्रहाद्या भूतजातयः। तन्दृष्ट्वा साधकन्देवि ! लज्जायुक्ता भवन्ति ते ॥२१॥ कवचन्धारयेद्यस्तु सर्वसिद्धिंल्लभेद्ध्रुवम्। राजानोऽपि च दासत्वं षट्कर्म्माणि च साधयेत् ॥२२॥ सिद्धो भवति सर्वत्र किमन्यैर्बहुभाषितैः। इदं कवचमज्ञात्वा मातङ्गीं यो भजेन्नरः ॥२३॥ अल्पायुर्न्निर्द्धनो मूर्खो भवत्येव न संशयः। गुरौ भक्तिः सदा कार्या कवचे च दृढा मतिः ॥२४॥ तस्मै मातङ्गिनी देवी सर्वसिद्धिम्प्रयच्छति ॥२५॥

॥ इति नन्द्यावर्त्ते उत्तरखण्डेत्वरितफलदायिनी मातङ्गीकवचं समाप्तिमगमत् ॥

---

# अथ मातङ्गीहृदयम्

एकदा कौतुकाविष्टा भैरवम्भूतसेवितम्। भैरवी परिपप्रच्छ सर्वभूतहितेरता ॥ १ ॥ श्रीभैरव्युवाच। भगवन्सर्वधर्मज्ञ! भूतवात्सल्यभावन!। अहं वेदितुमिच्छामि सर्वभूतोपकारकम् ॥ २ ॥ केन मन्त्रेण जप्तेन स्तोत्रेण पठितेन च। सर्वथा श्रेयसां प्राप्तिर्भूतानाम्भूतिमिच्छताम् ॥ ३ ॥ श्रीभैरव उवाच। शृणु देवि! तव स्नेहात्प्रायो गोप्यमपि प्रिये!। कथयिष्यामि तत्सर्वं सुखसम्पत्करं शुभम् ॥४॥ पठतां शृण्वतां नित्यं सर्वसम्पत्तिदायकम्। विद्यैश्वर्यसुखावाप्तिमङ्गलप्रदमुत्तमम् ॥ ५ ॥ मातङ्ग्या हृदयस्तोत्रं दुःखदारिद्र्यभञ्जनम्। मङ्गलं मङ्गलानाञ्च अस्ति सर्वसुखप्रदम् ॥ ६ ॥

ॐ अस्य श्रीमातङ्गीहृदयस्तोत्रमन्त्रस्य दक्षिणामूर्तिर्ऋषिर्विराट् छन्दो मातङ्गी देवता ह्रीं बीजं हूं शक्तिः क्लीं कीलकं सर्ववाञ्छितार्थसिद्धये पाठे विनियोगः।

अथाऽङ्गन्यासः। ॐ ह्रीं हृदयाय नमः, ॐ क्लीं शिरसे स्वाहा, ॐ हूं शिखायै वषट्, ॐ ह्रीं नेत्रत्रयाय वौषट्, ॐ क्लीं कवचाय हूम्, ॐ हूं अस्त्राय फट्।

एवङ्करन्यासः। अथ ध्यानम्। श्यामां शुभ्रांशुभालान्त्रिकमलनयनां रत्नसिंहासनस्थां भक्ताभीष्टप्रदात्रीं सुरनिरकरासेव्यकञ्जाङ्घ्रियुग्माम्। नीलाम्भोजांशुकान्तिं निशिचरनिकरारण्यदावाग्निरूपां पाशं खड्गञ्चतुर्भिर्वरकमलकरैः खेटकञ्चाङ्कुशञ्च। मातङ्गीमावहन्तीमभिमतफलदां मोदिनीञ्चिन्तयामि ॥ ७ ॥ नमस्ते मातङ्ग्यै मृदुमुदिततन्वै तनुमताम्परश्रेयोदायै कमलचरणध्याननमनसाम्। सदा संसेव्यायै सदसि विबुधैर्दिव्यधिषणैर्दयार्द्रायै देव्यै दुरितदलनोद्दण्डमनसे ॥८॥ परं मातस्ते यो जपति मनुमेवोग्रहृदयः। कवित्वं कल्पानां कलयति सुकल्पः प्रतिपदम्। अपि प्रायो रम्यामृतमयपदातस्य ललितानटीम्मन्यावाणी नटति रसनायाञ्च ललिता ॥ ९ ॥ तव ध्यायन्तो ये वपुरनुजपन्ति प्रवलितं सदा मन्त्रम्मातर्न्नहि भवति तेषाम्परिभवः।

कदम्बानाम्माल्यै शिर अपि च युञ्जन्ति यदि ये भवन्ति प्रायस्ते युवतिजनयूथस्ववशगाः ॥१०॥ सरोजैः साहस्रैः सरसिजपदद्वन्द्वमपि ये सहस्रन्नामोक्त्या तदपि तव देव्यन्तमनुमितम्। पृथङ्नाम्ना तेनाऽयुतकलितमर्चन्ति प्रसुते सदा देवव्रातप्रणमितपदाम्भोजयुगलाः ॥११॥ तव प्रीत्यै मातर्ददति बलिमाधाय बलिना समत्स्यं मांसं वा सुरचिरमितं राजरुचितम्। सुपुण्या ये स्वान्तस्तवचरणप्रेमैकरसिका अहो भाग्यन्तेषा त्रिभुवनमलं वश्यमखिलम् ॥१२॥ लसल्लोलश्रोत्राभरणकिरणक्रान्तिकलितं सितस्मित्यापन्नप्रतिभिनममन्नं विकरितम्। मुखाम्भोजम्मातस्तव परिलुठद्भ्रूमधुकरं रमा ये ध्यायन्ति त्यजति न हि तेषा सुभवनम् ॥१३॥ परः श्रीमातङ्ग्या जपति हृदयाख्यः सुमनसामयं सेव्यः सद्योऽभिमतफलदश्चाऽतिललितः। नरा ये शृण्वन्ति स्तवमपि पठन्तीममनिशं न तेषा दुष्प्राप्यं जगति यदलभ्यं दिविषदाम् ॥१४॥ धनार्थी धनमाप्नोति दारार्थी सुन्दरीम्प्रियाम्। सुतार्थी लभते पुत्रं स्तवस्याऽस्य प्रकीर्त्तनात् ॥१५॥ विद्यार्थी लभते विद्या विविधां विभवप्रदाम्। जयार्थी पठनादस्य जयम्प्राप्नोति निश्चितम् ॥१६॥ नष्टराज्यो लभेद्राज्यं सर्वसम्पत्समाश्रितम्। कुबेरसमसम्पत्तिः स भवेद्धृदयम्पठन् ॥१७॥ किमत्र बहुनोक्तेन यद्यदिच्छति मानवः। मातङ्गीहृदयस्तोत्रपाठात्तत्सर्वमाप्नुयात् ॥१८॥

॥ इति श्रीदक्षिणामूर्त्तिसंहितायां श्रीमातङ्गीहृदयस्तोत्रं सम्पूर्णम् ॥

---

## अथ मातङ्गीशतनामस्तोत्रम्

श्रीभैरव्युवाच। भगवञ्छ्रोतुमिच्छामि मातङ्ग्याः शतनामकम्। यद्गुह्यं सर्वतन्त्रेषु केनाऽपि न प्रकाशितम् ॥ १ ॥ श्रीभैरव उवाच। शृणु देवि! प्रवक्ष्यामि रहस्यातिरहस्यकम्। नाऽऽख्येयं यत्र कुत्राऽपि पठनीयम्परात्परम्। यस्यैकवारपठनात्सर्वे विघ्ना उपद्रवाः। नश्यन्ति तत्क्षणाद्देवि! वह्निना तूलराशिवत् ॥३॥ प्रसन्ना

जायते देवी मातङ्गी चाऽस्य पाठतः। सहस्रनामपठने यत्फलम्परिकीर्त्तितम्।
कोटिगुणितन्देवीनामाष्टकशतकं शुभम्।

ॐ अस्य श्रीमातङ्गीशतनाम्नां भगवान्मतङ्गऋषिरनुष्टुप्छन्दो मातङ्गी देवता
ातङ्गीप्रीतये जपे विनियोगः।

महामत्तमातङ्गिनी सिद्धिरूपा तथा योगिनी भद्रकाली रमा च। भवानी भयप्रीतिदा
ूतियुक्ता भवाराधिता भूतिसम्पत्करी च। जनाधीशमाता धनागारदृष्टिर्द्धनेशार्च्चि-
ा धीरचापी वराङ्गी। प्रकृष्टा प्रभारूपिणी कामरूपा प्रहृष्टा महाकीर्त्तिदा कर्ण्णनाली॥
ालो भगा घोररूपा भगाङ्गी भगाह्वा भगप्रीतिदा भीमरूपा। भवानी महाकौशिकी
कोशपूर्णा किशोरी किशोरप्रियानन्द ईहा। महाकारणा कारणा कर्म्मशीला कपाली
प्रसिद्धा महासिद्धखण्डा। मकारप्रिया मानरूपा महेशी महोल्लासिनी लास्यलीला-
लयाङ्गी। क्षमा क्षेमशीला क्षपाकारिणी चाक्षयप्रीतिदा भूतियुक्ता भवानी। भवारा-
धिता भूतिसत्यात्मिका च प्रभोद्भासिता भानुभास्वत्करा च। धराधीशमाता धना-
गारदृष्टिर्द्धनेशार्च्चिता धीवरा धीवराङ्गी। प्रकृष्टा प्रभारूपिणी प्राणरूपा प्रकृष्टस्वरूपा-
स्वरूपप्रिया च। चलत्कुण्डला कामिनी कान्तयुक्ता कपालाचला कालकोद्धारिणी च।
कदम्बप्रिया कोटरीकोटदेहा क्रमा कीर्त्तिदा कर्णरूपा च काक्ष्मी। क्षमाङ्गी क्षयप्रेम-
रूपा क्षपा च क्षयाक्षाक्षयाह्वाक्षयप्रान्तरा च। क्षवत्कामिनी क्षारिणीक्षीरपूषा
शिवाङ्गी च शाकम्भरी शाकदेहा। महाशाकयज्ञा फलप्राशका च शकाह्वाशकाह्वा
शकाख्या शका च। शकाक्षान्तरोषा सुरोषा सुरेखा महाशेषयज्ञोपवीतप्रिया
च॥ जयन्ती जया जाग्रती योग्यरूपा जयाङ्गा जपध्यानसन्तुष्टसञ्ज्ञा। जय-
प्राणरूपा जयस्वर्णदेहा जयज्वालिनी यामिनी याम्यरूपा॥ जगन्मातृरूपा जग-
द्रक्षणा च स्वधावौषडन्ता विलम्बाऽविलम्बा। षडङ्गामहालम्बरूपाऽसिहस्ता पदा-
हारिणी हारिणी हारिणी च। महामङ्गलामङ्गलप्रेमकीर्त्तिर्निशुम्भक्षिदाशुम्भदर्प्पत्वहा
च। तथाऽऽनन्दबीजादिमुक्तस्वरूपा तथा चण्डमुण्डा पदामुख्यचण्डा। प्रचण्डाप्रचण्डा
महाचण्डवेगा चलच्चामराचामरा चन्द्रकीर्त्तिः। सुचामीकरा चित्रभूषोज्ज्वलाङ्गी

तगीतञ्च पापादपायात् ॥ इति ते कथितन्देवि। नाम्नामष्टोत्तरं शतम् । गोप्यञ्च सर्वतन्त्रेषु गोपनीयञ्च सर्वदा ॥ एतस्य सतताभ्यासात्साक्षाद्देवो महेश्वरः। त्रिसन्ध्यञ्च महाभक्त्या पठनीयं सुखोदयम् ॥ न तस्य दुष्करं किञ्चिज्जायते स्पर्शतः क्षणात् । स्वकृतं यत्तदेवाप्तन्तस्मादावर्त्तयेत्सदा। सदैव सन्निधौ तस्य देवी वसति सादरम् । अयोगा ये (?) सर्वैवाऽग्रे सुयोगाश्च भवन्ति वै। त एव मित्रभूताश्च भवन्ति तत्प्रसादतः। विषाणिनोऽपमर्षन्ति व्याधयो न स्पृशन्ति ताम् । लूता विस्फोटकास्सर्व्वे शमं यान्ति च तत्क्षणात् । जरापलितनिर्म्मुक्तः कल्पजीवी भवेन्नरः। अपि किम्बहुनोक्तेन सान्निध्यम्फलमाप्नुयात्। यावन्मया पुरा प्रोक्तम्फलं साहस्रनामकम् तत्सर्वं लभते मर्त्यो महामायाप्रसादतः।

॥ इति श्रीरुद्रयामले मातङ्गीशतनामस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीकमलात्मिकास्तोत्राणि

अथ ध्यानम् । कान्त्या काञ्चनसन्निभा हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमाना श्रियम्। बिभ्राणा वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वला क्षौमाबद्धनितम्बबिम्बललिता वन्देऽरविन्दस्थिताम् ॥

त्रैलोक्यपूजिते देवि । कमले विष्णुवल्लभे । यथा त्वमचला कृष्णे तथा भव मयि स्थिरा ॥ १ ॥ ईश्वरी कमला लक्ष्मीश्चलाभूतिर्हरिप्रिया। पद्मा पद्मालयासम्यगुच्चैः श्रीःपद्मधारिणी ॥२॥ द्वादशैतानि नामानि लक्ष्मीं सम्पूज्य यः पठेत्। स्थिरा लक्ष्मीर्भवेत्तस्य पुत्रदारादिभिः सह ॥ ३ ॥

॥ इति श्रीकमलात्मिकास्तोत्रं समाप्तम् ॥

---

# अथ कवचम्

अथ वक्ष्ये महेशानि ! कवचं सर्वकामदम् । यस्य विज्ञानमात्रेण भवेत्साक्षात्सदाशिवः ॥ १ ॥ नार्चनन्तस्य देवेशि ! मन्त्रमात्रञ्जपेन्नर । सभवेत्पार्वतीपुत्रः सर्वशास्त्रविशारदः ॥ २ ॥ विद्यार्थिनां सदा विद्याधनदात् विशेषतः । धनार्थिभिः सदा सेव्या कमला विष्णुवल्लभा ॥३॥

अस्याश्चतुरक्षरी विष्णुवल्लभायाः कवचस्य भगवानृषिरनुष्टुप्छन्दो वाग्भवी शक्तिर्देवता वाग्भवं बीजं लज्जा रमा कीलकं कामबीजात्मकं कवचं मम सुपाण्डित्यकवित्वसर्वसिद्धिसमृद्धये विनियोगः ।

ऐंकारो मस्तके पातु वाग्भवी सर्वसिद्धिदा । ह्रीं पातु चक्षुपोर्मध्ये चक्षुर्युग्मे च शाङ्करी ॥ ४ ॥ जिह्वायाम्मुखवृत्ते च कर्णयोर्दन्तयोर्न्नसि । ओष्ठाधरे दन्तपङ्क्तौ तालुमूले हनौ पुनः ॥ ५ ॥ मा(पा)तु मां विष्णुवनिता लक्ष्मीः श्रीविष्णुरूपिणी ॥ ६ ॥ कर्ण्णयुग्मे भुजद्वन्द्वे स्तनद्वन्द्वे च पार्वती । हृदये मणिवन्धे च ग्रीवायाम्पार्श्वयोः पुनः ॥ ७ ॥ पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा । उपस्थे च नितम्बे च नाभौ जङ्घाद्वये पुनः ॥८॥ जानुचक्रे पदद्वन्द्वे घुटिकेऽङ्गुलिमूलके । स्वाधातु प्राणशक्त्यात्मसीमन्ते मस्तके पुनः ॥ ९ ॥ विजया पातु भवने जया पातु सदा मम । सर्वाङ्गे पातु कामेशी महादेवी सरस्वती ॥१०॥ तुष्टिः पातु महामाया उत्कृष्टिः सर्वदाऽवतु । ऋद्धिः पातु महादेवी सर्वत्र शम्भुवल्लभा ॥११॥ वाग्भवी सर्वदा पातु पातु मां हरगेहिनी । रमा पातु सदा देवी पातु माया स्वराट्स्वयम् ॥१२॥ सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी । शिवदूती सदा पातु सुन्दरी पातु सर्वदा ॥ १३ ॥ भैरवी पातु सर्वत्र भेरुण्डा सर्वदाऽवतु । त्वरिता पातु मान्नित्यमुग्रतारा सदाऽवतु ॥१४॥ पातु मां कालिका नित्यं कालरात्रिः सदाऽवतु । नवदुर्गा सदा पातु कामाक्षी सर्वदाऽवतु ॥१५॥ योगिन्यः सर्वदा पान्तु मुद्राः पान्तु सदा मम । मात्राः

तमीलञ्च पापाद्गायाम् ॥ इति ते कथितन्देवि ! नाम्नामष्टोत्तरं शतम् । गोप्यञ्च सर्वतन्त्रेषु गोपनीयञ्च सर्वदा ॥ एतस्य सततभ्यासात्साक्षाद्देवो महेश्वरः । त्रिसन्ध्यञ्च महाभक्त्या पठनीयं सुखोदयम् ॥ न तस्य दुष्करं किञ्चिज्जायते स्पर्शतः क्षणात् । स्वकृतं यत्तदेवाप्तन्तस्मादावर्त्तयेत्सदा । सदैव सन्निधौ तस्य देवी वसति सादरम् । अयोगा ये (?) तवैवाग्रे सुयोगाश्च भवन्ति वै । त एव मित्रभूताश्च भवन्ति तत्प्रसादतः । विषाणि नोऽपसर्पन्ति व्याधयो न स्पृशन्ति तान् । लूता विस्फोटकास्सर्वे शमं यान्ति च तत्क्षणात् । जरापलितनिर्मुक्तः कल्पजीवी भवेन्नरः । अपि किम्बहुनोक्तेन सान्निध्यम्फलमाप्नुयात् । यावन्मया पुरा प्रोक्तम्फलं साहस्रनामकम् । तत्सर्वं लभते मर्त्यो महामायाप्रसादतः ।

॥ इति श्रीरुद्रयामले मातङ्गीशतनामस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीकमलात्मिकास्तोत्राणि

अथ ध्यानम् । कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् । बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम् ॥

त्रैलोक्यपूजिते देवि ! कमले विष्णुवल्लभे । यथा त्वमचला कृष्णे तथा भव मयि स्थिरा ॥ १ ॥ ईश्वरी कमला लक्ष्मीश्चलाभूतिर्हरिप्रिया । पद्मा पद्मालयासम्पदुच्चैः श्रीःपद्मधारिणी ॥२॥ द्वादशैतानि नामानि लक्ष्मीं सम्पूज्य यः पठेत् । स्थिरा लक्ष्मीर्भवेत्तस्य पुत्रदारादिभिः सह ॥ ३ ॥

॥ इति श्रीकमलात्मिकास्तोत्रं समाप्तम् ॥

---

# अथ कवचम्

अथ वक्ष्ये महेशानि ! कवचं सर्वकामदम् । यस्य विज्ञानमात्रेण भवेत्साक्षात्सदाशिवः ॥ १ ॥ नार्चनन्तस्य देवेशि ! मन्त्रमात्रञ्जपेन्नर । सभवेत्पार्वतीपुत्रः सर्वशास्त्रविशारदः ॥ २ ॥ विद्यार्थिनां सदा विद्याधनदात् विशेषतः । धनार्थिभिः सदा सेव्या कमला विष्णुवल्लभा ॥३॥

अस्याश्चतुरक्षरी विष्णुवल्लभायाः कवचस्य भगवानृषिरनुष्टुप्छन्दो वाग्भवी शक्तिर्देवता वाग्भवं बीजं लज्जा रमा कीलकं कामबीजात्मकं कवचं मम सुपाण्डित्यकवित्वसर्वसिद्धिसमृद्धये विनियोगः ।

ऐंकारो मस्तके पातु वाग्भवी सर्वसिद्धिदा । ह्रीं पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शाङ्करी ॥ ४ ॥ जिह्वायाम्मुखवृत्ते च कर्णयोर्दन्तयोर्न्नसि । ओष्ठाधरे दन्तपङ्क्तौ तालुमूले हनौ पुनः ॥ ५ ॥ मा(पा)तु मां विष्णुवनिता लक्ष्मीः श्रीविष्णुरूपिणी ॥ ६ ॥ कर्ण्णयुग्मे भुजद्वन्द्वे स्तनद्वन्द्वे च पार्वती । हृदये मणिबन्धे च ग्रीवायाम्पार्श्वयोः पुनः ॥ ७ ॥ पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा । उपस्थे च नितम्बे च नाभौ जङ्घाद्वये पुनः ॥८॥ जानुचक्रे पदद्वन्द्वे घुटिकेऽङ्गुलिमूलके । स्वाधातु प्राणशक्त्यात्मसीमन्ते मस्तके पुनः ॥ ९ ॥ विजया पातु भवने जया पातु सदा मम । सर्वाङ्गे पातु कामेशी महादेवी सरस्वती ॥१०॥ तुष्टिः पातु महामाया उत्कृष्टिः सर्वदाऽवतु । ऋद्धिः पातु महादेवी सर्वत्र शम्भुवल्लभा ॥११॥ वाग्भवी सर्वदा पातु पातु मां हरगेहिनी । रमा पातु सदा देवी पातु माया स्वराट्स्वयम् ॥१२॥ सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी । शिवदूती सदा पातु सुन्दरी पातु सर्वदा ॥ १३ ॥ भैरवी पातु सर्वत्र भेरुण्डा सर्वदाऽवतु । त्वरिता पातु मान्नित्यमुग्रतारा सदाऽवतु ॥१४॥ पातु मां कालिका नित्यं कालरात्रिः सदाऽवतु । नवदुर्गा सदा पातु कामाक्षी सर्वदाऽवतु ॥१५॥ योगिन्यः सर्वदा पान्तु मुद्राः पान्तु सदा मम । मात्राः

पातु सदा देव्यस्त्रस्था योगिनीगणाः ॥१६॥ सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा। पातु मान्देवदेवी च लक्ष्मीः सर्वसमृद्धिदा ॥१७॥ इति ते कथितं दिव्यं कवचं सर्वसिद्धये। यत्र तत्र न वक्तव्यं यदीच्छेदात्मनो हितम् ॥१८॥ शठाय भक्तिहीनाय निन्दकाय महेश्वरी। न्यूनाङ्गे चातिरिक्ताङ्गे दर्शयेन्न कदाचन ॥१९॥ न स्तवन्दर्शयेद्दिव्यं सन्दर्श्य शिवहा भवेत्। कुलीनाय महेच्छाय दुर्गाभक्तिपराय च ॥२०॥ वैष्णवाय विशुद्धाय दद्यात्कवचमुत्तमम्। निजशिष्याय शान्ताय धनिने ज्ञानिने तथा ॥ २१ ॥ दद्यात्कवचमित्युक्तं सर्वतन्त्रसमन्वितम्। शनौ मङ्गलवारे च रक्तचन्दनकैस्तथा ॥२२॥ साधकेन लिखेन्मन्त्रं सर्वतन्त्रसमन्वितम्। विलिख्य कवचन्दिव्यं स्वयम्भुकुसुमैः शुभैः ॥२३॥ स्वशुक्रैः परशुक्रैर्वा नानागन्धसमन्वितैः। गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा ॥२४॥ सुतिथौ शुभयोगे वा श्रवणायां रवेर्दिने। अश्विन्यां कृत्तिकायां वा फाल्गुन्यां वा मघासु च ॥२५॥ पूर्वभाद्रपदायोगे स्वात्यां मङ्गलवासरे। विलिखेत्प्रपठेत्स्तोत्रं शुभयोगे सुरालये ॥२६॥ आयुष्मत्प्रीतियोगे च ब्रह्मयोगे विशेषतः। इन्द्रयोगे शुभे योगे शुक्रयोगे तथैव च ॥२७॥ कौलवे बालवे चैव वणिजे चैव सत्तम। शून्यागारे श्मशाने च विजने च विशेषतः ॥२८॥ कुमारीम्पूजयित्वाऽऽदौ यजेद्देवीं सनातनीम्। मत्स्यैर्मांसैः शाकसूपैः पूजयेत्परदेवताम् ॥२९॥ घृताद्यैः सोपकरणैः पूपसूपैर्विशेषतः। ब्राह्मणान्भोजयित्वा च पूजयेत्परमेश्वरीम् ॥३०॥ अखेटकमुपाख्यानं तत्र कुर्याद्दिनत्रयम्। सदाधरेन्महाविद्यां शङ्करेण प्रभाषिताम् ॥३१॥ मारणद्वेषणादीनि लभते नात्र संशयः। स भवेत् पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः ॥३२॥ गुरुर्देवो हरः साक्षात् पत्नी तस्य हरप्रिया। अभेदेन भजेद्यस्तु तस्य सिद्धिरदूरतः ॥३३॥ पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा जपफलमनुमेयंङ्लप्स्यते यद्विधेयम्। स भवति पदमुच्चैः सम्पदां पादनम्रक्षितिपमुकुटलक्ष्मीर्लक्षणानाञ्चिराय ॥ ३४ ॥

॥ इति श्रीविश्वसारतन्त्रे श्रीकमलात्मिकाकवचं समाप्तम् ॥

# अथ हृदयम्

ॐ अस्य आद्यादिश्रीमहालक्ष्मीहृदयमालामन्त्रस्य भार्गवऋृषिः आद्यादिश्रीमहालक्ष्मीर्देवता अनुष्टुबादि नानाछन्दांसि श्रीं बीजम् ह्रीं शक्तिः ऐं कीलकम् आद्यादि-महालक्ष्मीप्रसादसिद्ध्यर्थं जपे विनियोगः।

अथ न्यासः। ॐ भार्गवऋृषये नमः शिरसि। अनुष्टुबादिनानाछन्दोभ्यो नमः मुखे। आद्यादिश्रीमहालक्ष्म्यै देवतायै नमो हृदये। श्रीं बीजाय नमो गुह्ये। ह्रीं शक्तये नमः पादयोः। ऐं कीलकाय नमः सर्वाङ्गे।

अथ करन्यासः। ॐ श्रीं अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः। ॐ ऐं मध्यमाभ्यां नमः। ॐ श्रीं अनामिकाभ्यां नमः। ॐ ह्रीं कनिष्ठिकाभ्यां नमः। ॐ ऐं करतलकरपृष्ठाभ्यां नमः। ॐ श्रीं हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ॐ ऐं शिखायै वषट्। ॐ श्रीं कवचाय हुम्। ॐ ह्रीं नेत्रत्रयाय वौषट्। ॐ ऐं अस्त्राय फट्। ॐ श्रीं ह्रीं ऐं इति दिग्बन्धः। अथ ध्यानम्। हस्तद्वयेन कमले धारयन्तीं स्वलीलया। हारनूपुरसंयुक्तां लक्ष्मीन्देवीं विचिन्तये। इति ध्यात्वा सम्पूज्य॥

शङ्खचक्रगदाहस्ते शुभ्रवर्णे सुवासिनी। मम देहि वरं लक्ष्मि! सर्वसिद्धिप्रदायिनि!। इति सम्प्रार्थ्य "ॐ श्रीं ह्रीं ऐं महालक्ष्म्यै कमलधारिण्यै सिंहवाहिन्यै स्वाहा"। इति मन्त्रञ्जपित्वा पुनः पूर्ववद्धृदयादिषडङ्गन्यासं कृत्वा स्तोत्रम्पठेत्। तदित्थम्।

वन्दे लक्ष्मीम्परशिवमयीं शुद्धजाम्बूनदाभान्तेजोरूपाङ्कनकवसनां सर्वभूपोज्ज्वलाङ्गीम्। बीजापूरङ्कनककलशं हेमपद्मन्दधानामाद्यां शक्तिं सकलजननीं विष्णुवामाङ्कसंस्थाम्॥ १॥ श्रीमत्सौभाग्यजननीं स्तौमि लक्ष्मीं सनातनीम्। सर्वकामफलावाप्तिसाधनैकसुखावहाम्॥२॥ स्मरामि नित्यन्देवेशि! त्वया प्रेरितमानसः। त्वदाज्ञां शिरसा धृत्वा भजामि परमेश्वरीम्॥ ३॥ समस्तसम्पत्सुखदां महाश्रियं

समस्तसौभाग्यकरीं महाश्रियम् । समस्त कल्याणकरीम्महाश्रियं भजाम्यहं ज्ञान-करीम्महाश्रियम् ॥ ४ ॥ विज्ञानसम्पत्सुखदां सनातनीं विचित्रवाग्भूतिकरी-म्मनोहराम् । अनन्तसामोदसुखप्रदायिनीं नमाम्यहं भूतिकरीं हरिप्रियाम् ॥ ५ ॥ समस्तभूतान्तरसंस्थिता त्वं समस्तभोक्त्रीश्वरि विश्वरूपे । तन्नाऽस्ति यत्त्वद्व्यतिरिक्त-वस्तु त्वत्पादपद्मम्प्रणमाम्यहं श्रीः ॥ ६ ॥ दारिद्र्यदुःखौघतमोपहन्त्रि । त्वत्पादपद्म-म्मयि सन्निधत्स्व । दीनार्त्तिविच्छेदनहेतुभूतैः कृपाकटाक्षैरभिषिञ्च मा श्रीः ॥ ७ ॥ अम्ब । प्रसीद करुणासुधयाऽऽर्द्रदृष्ट्या मान्त्वत्कृपाद्रविणगेहमिमं कुरुष्व । आलोकय प्रणतहृद्गतशोकहन्त्रि । त्वत्पादपद्मयुगलम्प्रणमाम्यहं श्रीः ॥ ८ ॥ शान्त्यै नमोऽस्तु शरणागतरक्षणायै कान्त्यै नमोऽस्तु कमनीयगुणाश्रयायै । क्षान्त्यै नमोऽस्तु दुरित-क्षयकारणायै धात्र्यै नमोऽस्तु धनधान्यसमृद्धिदायै ॥ ९ ॥ शक्त्यै नमोऽस्तु शशि-शेखरसंस्तुतायै रत्यै नमोऽस्तु रजनीकरसोदरायै । भक्त्यै नमोऽस्तु भवसागरतारकायै मत्यै नमोऽस्तु मधुसूदनवल्लभायै ॥१०॥ लक्ष्म्यै नमोऽस्तु शुभलक्षणलक्षितायै सिद्ध्यै नमोऽस्तु शिवसिद्धसुपूजितायै । धृत्यै नमोऽस्त्वमितदुर्गतिभञ्जनायै गत्यै नमोऽस्तु वरसद्गतिदायकायै ॥११॥ देव्यै नमोऽस्तु दिवि देवगणार्चितायै भूत्यै नमोऽस्तु भुवनार्त्तिविनाशनायै । दात्र्यै नमोऽस्तु धरणीधरवल्लभायै पुष्ट्यै नमोऽस्तु पुरु-षोत्तमवल्लभायै ॥ १२ ॥ सुतीव्रदारिद्र्यविदुःखहन्त्र्यै नमोऽस्तु ते सर्वभयापहन्त्र्यै । श्रीविष्णुवक्षःस्थलसंस्थितायै नमोनमः सर्वविभूतिदायै ॥१३॥ जयतु जयतु लक्ष्मी-र्लक्षणालङ्कृताङ्गी जयतु जयतु पद्मा पद्मसद्माभिवन्द्या । जयतु जयतु विद्या विष्णु-वामाङ्कसंस्था जयतु जयतु सम्यक्सर्वसम्पत्करी श्रीः ॥१४॥ जयतु जयतु देवी देवसङ्घाभिपूज्या जयतु जयतु भद्रा भार्गवीभाग्यरूपा । जयतु जयतु नित्या निर्म्म-लज्ञानवेद्या जयतु जयतु सत्या सर्वभूतान्तरस्था ॥१५॥ जयतु जयतु रम्या रत्नगर्भान्तरस्था जयतु जयतु शुद्धा शुद्धजाम्बूनदाभा । जयतु जयतु कान्ता कान्ति-मद्भासिताङ्गी जयतु जयतु शान्ता शीघ्रमागच्छ सौम्ये । ॥१६॥ यस्याः कलाद्याः कमलोद्भवाद्या रुद्राश्च शक्रप्रमुखाश्च देवाः । जीवन्ति सर्वा अपि शक्तयस्ताः प्रभुत्व-

मात्ताः परमायुपस्ते ॥१७॥ लिलेख निटिले विधिर्म्मम लिपिं विसृज्याऽन्तरन्त्वया विलिखितव्यमेतदितितत्फलप्राप्तये। तदन्तरफले स्फुटङ्कमलवासिनी श्रीरिमां समर्पय समुद्रिकां सकलभाग्यसंसूचिकाम् ॥१८॥ कलया ते यथा देवि! जीवन्ति सचराचराः। तथा सम्पत्करे लक्ष्मि! सर्वदा सम्प्रसीद मे ॥१९॥ यथा विष्णुर्द्ध्रुवे नित्यं स्वकलां सन्न्यवेशयत्। तथैव स्वकलां लक्ष्मि! मयि सम्यक्समर्पय ॥२०॥ सर्वसौख्यप्रदे देवि! भक्तानामभयप्रदे!। अचलाङ्कुरु यत्नेन कलाम्मयि निवेशिताम् ॥२१॥ मुदास्ताम्मद्भाले परमपदलक्ष्मीः स्फुटकला सदा वैकुण्ठश्रीर्निवसतु कला मे नयनयोः। वसेत्सत्ये लोके मम वचसि लक्ष्मी वरकला श्रियः श्वेतद्वीपे निवसतु कला मे स्वकरयोः ॥२२॥ तावन्नित्यं ममाङ्गेषु क्षीराब्धौ श्रीकला वसेत्। सूर्य्याचन्द्रमसौ यावद्यावल्लक्ष्मीपतिः श्रिया ॥ २३ ॥ सर्व्वमङ्गलसम्पूर्णा सर्वैश्वर्यसमन्विता। आद्यादिश्रीमहालक्ष्मि! त्वत्कला मयि तिष्ठतु ॥ २४ ॥ अज्ञानतिमिरं हन्तुं शुद्धज्ञानप्रकाशिका। सर्वैश्वर्यप्रदा मेऽस्तु त्वत्कला मयि संस्थिता ॥२५॥ अलक्ष्मीं हरतु क्षिप्रन्तमः सूर्यप्रभा यथा। वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता ॥२६॥ ऐश्वर्यं मङ्गलोत्पत्तिस्त्वत्कलायान्निधीयते। मयि तस्मात्कृतार्थोऽस्मि पात्रमस्मि स्थितेस्तव ॥२७॥ भवदावेशभाग्यार्हो भाग्यवानस्मि भार्गवि!। त्वत्प्रसादात्पवित्रोऽहं लोकमातर्नमोऽस्तु ते ॥२८॥ पुनासि मां त्वं कलयैव यस्मादतः समागच्छ ममाऽग्रतस्त्वम्। परम्पदं श्रीर्भवसुप्रसन्ना मय्यच्युतेन प्रविशाऽऽदिलक्ष्मि! ॥ २९ ॥ श्रीवैकुण्ठस्थिते लक्ष्मि! समागच्छ ममाग्रतः। नारायणेन सह मां कृपादृष्ट्याऽवलोकय ॥३०॥ सत्यलोकस्थिते लक्ष्मि! त्वम्ममाऽऽगच्छसन्निधिम्। वासुदेवेन सहिता प्रसीद वरदा भव ॥३१॥ श्वेतद्वीपस्थिते लक्ष्मि! शीघ्रमागच्छ सुव्रते!। विष्णुना सहिते देवि! जगन्मातः! प्रसीद मे ॥३२॥ क्षीराम्बुधिस्थिते लक्ष्मि समागच्छ समाधवे!। त्वत्कृपादृष्टिसुधया सततम्मां विलोकय ॥३३॥ रत्नगर्भस्थिते लक्ष्मि! परिपूर्णहिरण्मयि!। समागच्छ समागच्छ स्थित्वाऽऽशु पुरतो मम ॥३४॥ स्थिरा भव महालक्ष्मि! निश्चला भव निर्म्मले!। प्रसन्ने! कमले देवि! प्रसन्नहृदया भव ॥३५॥

समस्तसौभाग्यकरीं महाश्रियम्। समस्त कल्याणकरीम्महाश्रियं भजाम्यहं ज्ञानकरीम्महाश्रियम् ॥ ४ ॥ विज्ञानसम्पत्सुखदां सनातनीं विचित्रवाग्भूतिकरीम्मनोहराम्। अनन्तसामोदसुखप्रदायिनीं नमाम्यहं भूतिकरीं हरिप्रियाम् ॥ ५ ॥ समस्तभूतान्तरसंस्थिता त्वं समस्तभोक्त्रीश्वरि विश्वरूपे। तन्नाऽस्ति यत्त्वद्व्यतिरिक्तवस्तु त्वत्पादपद्मम्प्रणमाम्यहं श्रीः ॥ ६ ॥ दारिद्र्यदुःखौघतमोपहन्त्रि। त्वत्पादपद्मम्मयि सन्निधत्स्व। दीनार्त्तिविच्छेदनहेतुभूतैः कृपाकटाक्षैरभिषिञ्च मां श्रीः ॥ ७ ॥ अम्ब! प्रसीद करुणासुधयाऽऽर्द्रदृष्ट्या मान्त्वत्कृपाद्रविणगेहमिमं कुरुष्व। आलोकय प्रणतहृद्गतशोकहन्त्रि! त्वत्पादपद्मयुगलम्प्रणमाम्यहं श्रीः ॥ ८ ॥ शान्त्यै नमोऽस्तु शरणागतरक्षणायै कान्त्यै नमोऽस्तु कमनीयगुणाश्रयायै। क्षान्त्यै नमोऽस्तु दुरितक्षयकारणायै धात्र्यै नमोऽस्तु धनधान्यसमृद्धिदायै ॥ ९ ॥ शक्त्यै नमोऽस्तु शशिशेखरसंस्तुतायै रत्यै नमोऽस्तु रजनीकरसोदरायै। भक्त्यै नमोऽस्तु भवसागरतारकायै मत्यै नमोऽस्तु मधुसूदनवल्लभायै ॥१०॥ लक्ष्म्यै नमोऽस्तु शुभलक्षणलक्षितायै सिद्ध्यै नमोऽस्तु शिवसिद्धसुपूजितायै। धृत्यै नमोऽस्त्वमितदुर्गतिभञ्जनायै गत्यै नमोऽस्तु वरसद्गतिदायकायै ॥११॥ देव्यै नमोऽस्तु दिवि देवगणार्चितायै भूत्यै नमोऽस्तु भुवनार्त्तिविनाशनायै। दात्र्यै नमोऽस्तु धरणीधरवल्लभायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ १२ ॥ सुतीव्रदारिद्र्यविदुःखहन्त्र्यै नमोऽस्तु ते सर्वभयापहन्त्र्यै। श्रीविष्णुवक्षःस्थलसंस्थितायै नमोनमः सर्वविभूतिदायै ॥१३॥ जयतु जयतु लक्ष्मीर्लक्षणालङ्कृताङ्गी जयतु जयतु पद्मा पद्मसद्माभिवन्द्या। जयतु जयतु विद्या विष्णुवामाङ्कसंस्था जयतु जयतु सम्यक्सर्वसम्पत्करी श्रीः ॥१४॥ जयतु जयतु देवी देवसङ्घाभिपूज्या जयतु जयतु भद्रा भार्गवीभाग्यरूपा। जयतु जयतु नित्या निर्मलज्ञानवेद्या जयतु जयतु सत्या सर्वभूतान्तरस्था ॥१५॥ जयतु जयतु रम्या रत्नगर्भान्तरस्था जयतु जयतु शुद्धा शुद्धजाम्बूनदाभा। जयतु जयतु कान्ता कान्तिमद्भासिताङ्गी जयतु जयतु शान्ता शीघ्रमागच्छ सौम्ये! ॥१६॥ यस्याः कलायाः कमलोद्भवाद्याः रुद्राश्च शक्रप्रमुखाश्च देवाः। जीवन्ति सर्वा अपि शक्तयस्ताः प्रभुत्व-

माप्ताः परमायुपस्ते ॥१७॥ लिलेख निटिले विधिर्म्मम लिपिं विसृज्याऽन्तरन्त्वया विलिखितव्यमेतदितितत्फलप्राप्तये। तदन्तरफले स्फुटङ्कमलवासिनी श्रीरिमां समर्पय समुद्रिकां सकलभाग्यसंसूचिकाम् ॥१८॥ कलया ते यथा देवि! जीवन्ति सचराचराः। तथा सम्पत्करे लक्ष्मि! सर्वदा सम्प्रसीद मे ॥१९॥ यथा विष्णुर्द्ध्रुवे नित्यं स्वकलां सन्न्यवेशयत्। तथैव स्वकलां लक्ष्मि! मयि सम्यक्समर्पय ॥२०॥ सर्वसौख्यप्रदे देवि! भक्तानामभयप्रदे!। अचलाङ्कुरु यत्नेन कलाम्मयि निवेशिताम् ॥२१॥ मुदास्ताम्भङ्काले परमपदलक्ष्मीः स्फुटकला सदा वैकुण्ठश्रीर्निवसतु कला मे नयनयोः। वसेत्सत्ये लोके मम वचसि लक्ष्मी वरकला श्रियः श्वेतद्वीपे निवसतु कला मे स्वकरयोः ॥२२॥ तावन्नित्यं ममाङ्गेषु क्षीराब्धौ श्रीकला वसेत्। सूर्य्याचन्द्रमसौ यावद्यावल्लक्ष्मीपतिः श्रिया ॥ २३ ॥ सर्व्वमङ्गलसम्पूर्णा सर्वैश्वर्यसमन्विता। आद्यादिश्रीमहालक्ष्मि! त्वत्कला मयि तिष्ठतु ॥ २४ ॥ अज्ञानतिमिरं हन्तुं शुद्धज्ञानप्रकाशिका। सर्वैश्वर्यप्रदा मेऽस्तु त्वत्कला मयि संस्थिता ॥२५॥ अलक्ष्मीं हरतु क्षिप्रन्तमः सूर्यप्रभा यथा। वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता ॥२६॥ ऐश्वर्यं मङ्गलोत्पत्तिस्त्वत्कलायान्निधीयते। मयि तस्मात्कृतार्थोऽस्मि पात्रमस्मि स्थितेस्तव ॥२७॥ भवदावेशभाग्यार्हो भाग्यवानस्मि भार्गवि!। त्वत्प्रसादात्पवित्रोऽहं लोकमातर्नमोऽस्तु ते ॥२८॥ पुनासि मां त्वं कलयैव यस्मादतः समागच्छ ममाऽग्रतस्त्वम्। परम्पदं श्रीर्भवसुप्रसन्ना मय्यच्युतेन प्रविशाऽऽदिलक्ष्मि! ॥ २९ ॥ श्रीवैकुण्ठस्थिते लक्ष्मि! समागच्छ ममाग्रतः। नारायणेन सह मां कृपादृष्ट्याऽवलोकय ॥३०॥ सत्यलोकस्थिते लक्ष्मि! त्वम्ममाऽऽगच्छसन्निधिम्। वासुदेवेन सहिता प्रसीद वरदा भव ॥३१॥ श्वेतद्वीपस्थिते लक्ष्मि! शीघ्रमागच्छ सुव्रते!। विष्णुना सहिते देवि! जगन्मातः! प्रसीद मे ॥३२॥ क्षीराम्बुधिस्थिते लक्ष्मि समागच्छ समाधवे!। त्वत्कृपादृष्टिसुधया सततम्मां विलोकय ॥३३॥ रत्नगर्भस्थिते लक्ष्मि! परिपूर्णहिरण्मयि!। समागच्छ समागच्छ स्थित्वाऽऽशु पुरतो मम ॥३४॥ स्थिरा भव महालक्ष्मि! निश्चला भव निर्म्मले!। प्रसन्ने! कमले देवि! प्रसन्नहृदया भव ॥३५॥

श्रीधरे श्रीमहाभूते त्वदन्तस्थं महानिधिम्। शीघ्रमुद्धृत्य पुरतः प्रदर्शय समर्पय ॥३६॥ वसुन्धरे श्रीवसुधे वसुदोग्ध्रि कृपामयि!। त्वत्कुक्षिगतसर्वस्वं शीघ्रम्मे सम्प्रदर्शय ॥३७॥ विष्णुप्रिये रत्नगर्भे समस्तफलदे शिवे। त्वद्गर्भगतहेमादीन्सम्प्रदर्शय दर्शय ॥३८॥ रसातलगते लक्ष्मि! शीघ्रमागच्छ मे पुरः। न जाने परमं रूपं मातर्म्मे सम्प्रदर्शय ॥३९॥ आविर्भव मनोवेगाच्छीघ्रमागच्छ मे पुरः। मा वत्स भैरिहेत्युक्त्वा कामङ्गौरिव रक्ष माम् ॥ ४० ॥ देवि! शीघ्रं समागच्छ धरणीगर्भसंस्थिते।। मातस्त्वद्भृत्यभृत्योऽहं मृगये त्वाङ्कुतूहलात् ॥४१॥ उत्तिष्ठ जागृहि त्वम्मे समुत्तिष्ठ सुजागृहि! अक्षयान्हेमकलशान्सुवर्णेन सुपूरितान् ॥ ४२ ॥ निक्षेपान्मे समाकृष्य समुद्धृत्य ममाऽग्रतः। समुन्नतानना भूत्वा समाधेहि धरान्तरान् ॥४३॥ मत्सन्निधिं समागच्छ मदाहितकृपारसात्। प्रसीद श्रेयसान्दोग्ध्रि! लक्ष्मि! मे नयनाग्रतः॥४४॥ अत्रोपविश लक्ष्मि! त्वं स्थिरा भव हिरण्मयि!। सुस्थिरा भव सम्प्रीत्या प्रसीद वरदा भव ॥४५॥ आनीयत्वन्तथा देवि! निधीन्मे सम्प्रदर्शय। अद्य क्षणेन सहसा दत्त्वा संरक्ष मां सदा ॥४६॥ मयि तिष्ठ तथा नित्यं यथेन्द्रादिषु तिष्ठसि। अभयङ्कुरु मे देवि! महालक्ष्मि नमोऽस्तु ते ॥४७॥ समागच्छ महालक्ष्मि! शुद्धजाम्बूनदप्रभे। प्रसीद पुरतः स्थित्वा प्रणतम्मां विलोकय ॥४८॥ लक्ष्मि! भुवङ्गता भासि यत्र यत्र हिरण्मयी। तत्र तत्र स्थिता त्वम्मे तव रूपम्प्रदर्शय ॥४९॥ क्रीडसे बहुधा भूमौ परिपूर्णहिरण्मयी। मम मूर्द्धनि ते हस्तमविलम्बितमर्पय ॥ ५० ॥ फलद्भाग्योदये लक्ष्मि! समस्तपुरवासिनि। प्रसीद मे महालक्ष्मि! परिपूर्णमनोरथे ॥५१॥ अयोध्यादिषु सर्वेषु नगरेषु समास्थिते।। वैभवैर्विविधैर्युक्ता समागच्छ बलान्विते।।॥५२॥ समागच्छ समागच्छ ममाऽग्रे भव सुस्थिरा। करुणारसनिष्यन्दनेत्रद्वयविलासिनी ॥५३॥ सन्निधत्स्व महालक्ष्मि! त्वत्पाणिम्मम मस्तके। करुणासुधया मान्त्वमभिषिञ्च स्थिरीकुरु ॥५४॥ सर्वराजगृहे लक्ष्मि! समागच्छ मुदान्विते। स्थित्वाऽऽशु पुरतो मेऽद्य प्रसादेनाऽभयङ्कुरु॥५५॥ सादरम्मस्तके हस्तम्मम त्वकृपयाऽर्पय। सर्वदा गृहे लक्ष्मि! त्वत्कला मयि तिष्ठ तु ॥५६॥ आद्यादिश्रीमहा-

लक्ष्मि ! विष्णुवामाङ्कसंस्थिते !। प्रत्यक्षङ्कुरु मे रूपं रक्ष मां शरणागतम् ॥५७॥ प्रसीद मे महालक्ष्मि ! सुप्रसीद महाशिवे !। अचला भव सम्प्रीत्या सुस्थिरा भव मद्गृहे ॥५८॥ यावत्तिष्ठन्ति वेदाश्च यावत्त्वन्नाम तिष्ठति। यावद्विष्णुश्च यावत्त्वं तावत्कुरु कृपाम्मयि ॥५९॥ चान्द्री कला यथा शुक्ले वर्द्धते सा दिने दिने। तथा दया ते मय्येव वर्द्धतामभिवर्द्धताम् ॥६०॥ यथा वैकुण्ठनगरे यथा वै क्षीरसागरे। तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥६१॥ योगिनां हृदये नित्यं यथा तिष्ठसि विष्णुना। तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥६२॥ नारायणस्य हृदये भवती यथाऽऽस्ते नारायणोऽपि तव हृत्कमले यथाऽऽस्ते। नारायणस्त्वमपि नित्य-मुभौ तथैव तौ तिष्ठतां हृदि ममाऽपि दयावति ! श्रीः ॥६३॥ विज्ञानवृद्धिं हृदये कुरु श्रीः सौभाग्यवृद्धिं कुरु मे गृहे श्रीः। दयासुवृद्धिं कुरुताम्मयि श्रीः सुवर्णवृद्धिं कुरु मे गृहे श्रीः ॥६४॥ न मां त्यजेथाः श्रितकल्पवल्लि ! सद्भक्तचिन्तामणि ! कामधेनो !। विश्वस्य मातर्भव सुप्रसन्ना गेहे कलत्रेषु च पुत्रवर्गे ॥६५॥ आद्यादिमाये ! त्वमजा-ण्डबीजन्त्वमेव साकारनिराकृतिस्त्वम। त्वया धृताश्चाऽब्जभवाण्डसङ्घाश्चित्रं चरित्रं तव देवि ! विष्णो ॥६६॥ ब्रह्मरुद्रादयो देवा वेदाश्चाऽपि न शक्नुयुः। महिमानन्तव स्तोतुं मन्दोऽहं शक्नुयां कथम् ॥६७॥ अम्ब ! त्वद्वत्सवाक्यानि सूक्तासूक्तानि यानि च। तानि स्वीकुरु सर्वज्ञे दयालुत्वेन सादरम् ॥६८॥ भवतीं शरणं गत्वा कृतार्थाः स्युः पुरातनाः। इति सञ्चिन्त्य मनसा त्वामहं शरणम्व्रजे ॥६९॥ अनन्ता नित्य-सुखिनस्त्वद्भक्तास्त्वत्परायणाः। इति वेदप्रमाणाद्धि देवि ! त्वां शरणम्व्रजे ॥७०॥ तव प्रतिज्ञा मद्भक्ता न नश्यन्तीत्यपि क्वचित्। इति सञ्चिन्त्य सञ्चिन्त्य प्राणान्स-न्धारयाम्यहम् ॥ ७१ ॥ त्वदधीनस्त्वहं मातस्त्वत्कृपा मयि विद्यते। यावत्सम्पूर्ण-कामः स्यात्तावद्देहि दयानिधे ! ॥७२॥ क्षणमात्रन्न शक्नोमि जीवितुन्त्वत्कृपाम्विना। न जीवन्तीह जलजा जलन्त्यक्ता जलग्रहाः ॥७३॥ यथा हि पुत्रवात्सल्याज्जननी प्रस्नुतस्तनी। वत्सन्त्वरितमागत्य सम्प्रीणयति वत्सला ॥७४॥ यदि स्यान्तव पुत्रोऽहं माता त्वं यदि मामकी। दयापयोधरस्तन्यसुधाभिरभिषिञ्च माम् ॥७५॥ मृग्यो

न गुणलेशोऽपि मयि दोषैकमन्दिरे । पासूना वृष्टिबिन्दूनां दोषाणाञ्च न मे मितिः ॥७६॥ पापिनामहमेवाग्र्यो दयालूनान्त्वमग्रणी । दयनीयो मदन्योऽस्ति सेवकोऽत्र जगत्त्रये ॥७७॥ विधिनाऽहन्न सृष्टश्चेन्न स्यान्नच दयालुता । आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः ॥७८॥ कृपा मदग्रजा किन्ते अहं किंवा तदग्रजः । विचार्य देहि मे वित्तन्तव देवि । दयानिधे । ॥७९॥ माता पिता त्वं गुरुसद्गतिः श्रीस्त्वमेव सञ्जीवन-हेतुभूता । अन्यन्न मन्ये जगदेकनाथे । त्वमेव सर्वं मम देवि सत्ये । ॥८०॥ आद्यादि-लक्ष्मीर्भव सुप्रसन्ना विशुद्धविज्ञानसुखैकदोग्ध्री । अज्ञानहन्त्री त्रिगुणातिरिक्ता प्रज्ञाननेत्री भव सुप्रसन्ना ॥८१॥ अशेषवाग्जाड्यमलापहन्त्री नवं नवं स्पष्टसुवाक्प्रदायिनी । ममेह जिह्वाग्रसुरङ्गनर्त्तकी भव प्रसन्नावदने च मे श्रीः ॥८२॥ समस्तसम्पत्सु विराजमाना समस्ततेजश्चयभासमाना । विष्णुप्रिये ! त्वं भवदीप्यमाना वाग्देवता मे नयने प्रसन्ना ॥८३॥ सर्वप्रदर्शे । सकलार्थदे । त्वं प्रभासुलावण्यदयाप्रदोग्ध्री । सुवर्णदे ! त्वं सुमुखी भवश्रीर्हिरण्मयी मे नयने प्रसन्ना ॥८४॥ सर्वार्थदा सर्वजगत्प्रसूतिः सर्वेश्वरी सर्वभयापहन्त्री । सर्वोन्नता त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ॥ ८५ ॥ समस्तविघ्नौघविनाशकारिणी समस्तभक्तोद्धरणे विचक्षणा । अनन्तसौभाग्यसुखप्रदायिनी हिरण्मयी मे नयने प्रसन्ना ॥८६॥ देवि ! प्रसीद दयनीयतमाय मह्यं देवाधिनाथभवदेवगणाभिवन्द्ये ! । मातस्तथैव भव सन्निहिता दृशोर्मे पत्या समं मम मुखे भव सुप्रसन्ना ॥८७॥ मा वत्सभैरभयदानकरोऽर्पितस्ते मौलौ ममेति मम दीनदयानुकम्पे ! । मातः समर्पयमुदा करुणाकटाक्षमाङ्गल्यबीजमिह नः सृजजन्मभासः ॥८८॥ कटाक्ष इह कामधुक्तवमनस्तुचिन्तामणिः करः सुरतरुः सदा नवनिधिस्त्वमेवेन्दिरे । । भवेत्तव दयारसो मम रसायनञ्चान्वहं सुखन्नवकलानिधिर्विविधवाञ्छितार्थप्रदम् ॥ ८९ ॥ यथा रसस्पर्शनतोऽयसोऽपि सुवर्णता स्यात्कमले तथा ते । कटाक्षसंस्पर्शनतो जनानाममङ्गलानामपि मङ्गलत्वम् ॥९०॥ देहीहि नास्तीति वचः प्रवेशाद्भीतो रमे ! त्वां शरणम्प्रपद्ये । अतः मदाऽस्मिन्नभयप्रदा त्वं सहैव पत्या मयि सन्निधेहि ॥९१॥ कल्प-

द्रुमेण मणिना सहिता सुरम्या श्रीस्ते कलामयि ! रसेन रसायनेन। आस्तां यतो मम च दृक् शिरपाणिपालस्पृष्टाः सुवर्णवपुषः स्थिरजङ्गमाः स्युः ॥ ६२ ॥ आद्यादिविष्णोः स्थिरधर्मपत्नी त्वमेव पत्या मयि सन्निधेहि। आद्यादिलक्ष्मि ! त्वदनुग्रहेण पदे पदे मे निधिदर्शनं स्यात् ॥ ६३ ॥ आद्यादिलक्ष्मीहृदयम्पठेद्यः स राज्यलक्ष्मीमचलान्तनोति। महादरिद्रोऽपि भवेद्धनाढ्यस्तदन्वये श्री. स्थिरताम्प्रयाति ॥६४॥ यस्य स्मरणमात्रेण तुष्टा स्याद्विष्णुवल्लभा। तस्याऽभीष्टन्ददात्याशु तम्पालयति पुत्रवत् ॥६५॥ इदं रहस्यं हृदयं सर्वकामफलप्रदम्। जपः पञ्चसहस्रन्तु पुरश्चरणमुच्यते ॥६६॥ त्रिकालमेककालं वा नरो भक्तिसमन्वतः। यः पठेच्छृणुयाद्वाऽपि स याति परमां श्रियम् ॥६७॥ महालक्ष्मीं समुद्दिश्य निशि भार्गववासरे। इदं श्रीहृदयञ्जप्त्वा पञ्चवारं धनी भवेत् ॥६८॥ अनेन हृदयेनान्नं गर्भिण्या अभिमन्त्रितम्। ददाति तत्कुले पुत्रो जायते श्रीपतिः स्वयम् ॥६९॥ नरेण वाऽथवा नार्या लक्ष्मीहृदयमन्त्रिते। जले पीते च तद्वंशे मन्दभाग्यो न जायते ॥१००॥ य आश्विने मासि च शुक्लपक्षे रमोत्सवे सन्निहितैकभक्त्या। पठेत्तथैकोत्तरवारवृद्ध्या लभेत्ससौवर्णमयीं सुवृष्टिम् ॥१०१॥ य एक भक्तोऽन्वहमेकवर्षं विशुद्धधीः सप्ततिवारजापी। स मन्दभाग्योऽपि रमाकटाक्षाद्भवेत्सहस्राक्षशताधिकश्रीः ॥१०२॥ श्रीशाङ्घ्रिभक्तिं हरिदासदास्यं प्रसन्नमन्त्रार्थदृढैकनिष्ठाम्। गुरोः स्मृतिं निर्मलबोधबुद्धिं प्रदेहि मातः परमं पदं श्रीः ॥१०३॥ पृथ्वीपतित्वं पुरुषोत्तमत्वं विभूतिवासं विविधार्थसिद्धिम्। सम्पूर्णकीर्त्तिं बहुवर्षभोगं प्रदेहि मे लक्ष्मि ! पुनः पुनस्त्वम् ॥१०४॥ वादार्थसिद्धिं बहुलोकवश्यं वयःस्थिरत्वं ललनासु भोगम्। पौत्रादिलब्धिं सकलार्थसिद्धिं प्रदेहि मे भार्गवि ! जन्मजन्मनि ॥१०५॥ सुवर्णवृद्धिं कुरु मे गृहे श्रीर्विभूतिवृद्धिं कुरु मे गृहे श्रीः ॥१०६॥ अथ शिरोबीजम् ॥ ओ३म् यं हं कं लं पं श्री ध्याये लक्ष्मीम्प्रहसितमुखीङ्कोटिबालार्कभासां विद्युद्वर्णाम्बरवरधराम्भूषणाढ्यां सुशोभाम्। बीजापूरं सरसिजयुगं बिभ्रतीं स्वर्णपात्रम्भर्त्रा युक्तां मुहुरभयदां मह्यमप्यच्युतश्रीः ॥१०७॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देवि ! त्वत्प्रसादान्मयि स्थिता ॥१०८॥ इति श्रीअथर्वणरहस्ये श्रीलक्ष्मीहृदयस्तोत्रं सम्पूर्णम् ॥

# अथोपनिषत्

अथ लोकान्पर्यटन् सनत्कुमारो वेदेहः पुण्यचिताल्लोकानतीत्य वैष्णवन्धाम-दिव्यगणोपेतं विद्रुमवेदिकामणिमुक्तागणाञ्चितम्प्राप। तत्रापश्यन्महामायाम्परार्ध्य-वस्त्राभरणोत्तरीया पर्यङ्कस्था पादे चरन्तीमादिदेवम्भगवन्तम्परमेश्वरन्दृष्ट्वा चला गद्गद्वाक्प्रफुल्लरोमा स्तोतुमुपचक्रमे। वाचम्मेदिशतु श्रीर्देवी मनो मे दिशतु वैष्णवी। ओजस्तेजो बलन्दाक्ष्यं बुद्धेर्वैभवमस्तु मे। त्वत्प्रसादाद्भगवति! प्रज्ञानम्मे ध्रुवम्भवेत्। शन्नो दिशतु श्रीर्देवी महामाया वैष्णवी शक्तिराद्या यामासाद्य स्वयमादिदेवो भग-वान् परावरज्ञस्त्रिधासम्भिन्नो लोकास्त्रीन्सृजत्यवत्यत्ति च। यद्भ्रूविक्षेपबलमापन्नो ह्यब्जयोनिस्तदितरे चामरामुख्याः सृष्टिचक्रप्रणेतारः सम्बभूवुः या वै वरदा स्तोपाया सुप्रसन्ना सुखयति सहस्रपुरुषान् ये लोकाः सन्ततमामनन्ति शिरसा हृदये-न च तामेकाल्लोकपूज्यान्नते दुर्गतिं यान्ति भूताः अथ महत्या समृद्ध्या साम्राज्येन पुत्रैः पौत्रैरन्वितो भूमिपृष्ठे शतं समास्त इज्याभिरिष्ट्वा देवान् पितॄन् मनुष्यानथ भूरिदक्षिणाभिस्त्वत्प्रसादान्महान्तो गच्छन्ति वैष्णवं लोकमपुनर्भवाय ये राजर्षयो ब्रह्मर्षयस्तेऽपि चाऽसकृत्त्वाम्प्रागमन्त एव सुखमामनन्ति नान्यः पन्था विद्यतेऽय-नाय किम्पुनरिहाऽऽदिदेवो भगवान्नारायणस्त्वामधिदेवोऽखिलङ्करोति किं वर्णये त्वा सहस्रकृत्वो नमस्ते य इमा ऋचः पठन्ति प्रातरुत्थाय भूरिदानं तेषां किञ्चिदिह यावशिष्टंय्यदैश्वर्यन्दुर्लभम्प्राणिनां हि।

॥ इति कमलात्मिकोपनिषत्समाप्ता ॥

---

# श्रीसूक्तम्

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीञ्जातवेदो ममाऽऽवह ॥ १ ॥ ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमो(बो)धिनीम्। श्रियन्देवीमुपह्वये श्रीर्म्मा देवी जुषताम् ॥३॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। ताम्पद्मनेमिं शरणमहम्प्रपद्ये अलक्ष्मीर्मे नश्यतान्त्वां वृणोमि ॥५॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव-वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥ उपैतु मान्देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिम्वृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठां अलक्ष्मीन्नाशयाम्यहम्। अभूतिमसमृद्धिञ्च सर्वान्निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्यमशी-महि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥ कर्दमेन प्रजा भूता मयि सम्भ्रमकर्दम। श्रियं वासय मे कुले मातरम्पद्ममालिनीम् ॥११॥ आपः सृजन्तु-स्निग्धानि चिक्लीत वस मे गृहे। निच देवीम्मातरं श्रियं वासय मे कुले ॥१२॥ आर्द्राम्पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽ-वह ॥१३॥ आर्द्रां यः करणीं यष्टिं पिङ्गलां पद्ममालिनीं। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥१४॥ ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। श्रियः पञ्चदशर्चञ्च श्रीकामः सततम्भजेत (जपेत्) ॥१६॥ ॐ महालक्ष्मीञ्च विद्महे विष्णुपत्नीञ्च धीमहि तन्नो लक्ष्मीः प्रचोदयात्।

॥ इति श्रीसूक्तम् सम्पूर्णम् ॥

# अथाष्टोत्तरशतनामस्तोत्रम्

श्रीशिव उवाच। शतमष्टोत्तरं नाम्ना कमलाया वरानने। प्रवक्ष्याम्यतिगुह्यं हि न कदाऽपि प्रकाशयेत्॥ १॥ महामाया महालक्ष्मीर्महावाणी महेश्वरी। महादेवी महारात्रिर्महिषासुरमर्दिनी ॥२॥ कालरात्रि कुहूः पूर्णा नन्दाद्या भद्रिका निशा। जया रिक्ता महाशक्तिर्देवमाता कृशोदरी ॥ ३॥ शचीन्द्राणी शक्रनुता शङ्करप्रियवल्लभा। महावाराहजननी मदनोन्मथिनी मही॥ ४॥ वैकुण्ठनाथरमणी विष्णुवक्षःस्थलस्थिता। विश्वेश्वरी विश्वमाता वरदाऽभयदा शिवा॥ ५॥ शूलिनी चक्रिणी या च पाशिनी शङ्खधारिणी। गदिनी मुण्डमाला च कमला करुणालया ॥ ६॥ पद्माक्षधारिणी ह्यम्बा महाविष्णुप्रियङ्करी। गोलोकनाथरमणी गोलोकेश्वरपूजिता॥ ७॥ गया गङ्गा च यमुना गोमती गरुडासना। गण्डकी सरयूतापी रेवा चैव पयस्विनी॥ ८॥ नर्मदा चैव कावेरी केदारस्थलवासिनी। किशोरी केशवनुता महेन्द्रपरिवन्दिता॥ ९॥ ब्रह्मादिदेवनिर्माणकारिणी वेदपूजिता। कोटिब्रह्माण्डमध्यस्था कोटिब्रह्माण्डकारिणी ॥१०॥ श्रुतिरूपा श्रुतिकरी श्रुतिस्मृतिपरायणा। इन्दिरा सिन्धुतनया मातङ्गी लोकमातृका॥ ११॥ त्रिलोकजननी तन्त्रा तन्त्रमन्त्रस्वरूपिणी। तरुणी च तमोहन्त्री मङ्गलामङ्गलायना ॥१२॥ मधुकैटभमथनी शुम्भासुरविनाशिनी। निशुम्भादिहरा माता हरिशङ्करपूजिता ॥१३॥ सर्वदेवमयी सर्वा शरणागतपालिनी। शरण्या शम्भुवनिता सिन्धुतीरनिवासिनी॥ १४॥ गन्धर्वगायरसिका गीतागोविन्दवल्लभा। त्रैलोक्यपालिनी तत्त्वरूपतारुण्यपूरिता॥ १५॥ चन्द्रावली चन्द्रमुखी चन्द्रिका चन्द्रपूजिता। चन्द्रा शशाङ्कभगिनी गीतवाद्यपरायणा ॥१६॥ सृष्टिरूपा सृष्टिकरी सृष्टिसंहारकारिणी। इति ते कथितन्देवि। रमानामशताष्टकम् ॥१७॥ त्रिसन्ध्यम्प्रयतो भूत्वा पठेदेतत्समाहितः। यं यं कामयते कामन्तं तं प्राप्नोत्यसंशयः ॥१८॥ इदं स्तवं

.: पठतीह मर्त्यो वैकुण्ठपत्न्याः परमादरेण। धनाधिपाद्यैः परिवन्दितः स्यात्प्र-
यास्यति श्रीपदमन्तकाले ॥१६॥

॥ इति कमलाया अष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीकुमारीस्तोत्राणि

## अथ कुमारीतर्पणस्तोत्रम्

शृणु नाथ! प्रवक्ष्यामि कुमारीतर्प्पणादिकम्। यस्यान्तर्पणमात्रेण कुलसिद्धि-
र्भवेद्ध्रुवम् ॥ १ ॥ कुलबालाम्मूलपद्मस्थितां कामविहारिणीम्। शतधा मूलमन्त्रेण
तर्पयामि तव प्रिये ॥ २ ॥ मूलपङ्कजयोगाङ्गीं कुमारीं श्रीसरस्वतीम्। तर्पयामि
कुलद्रव्यैस्तवसन्तोषहेतुना ॥ ३ ॥ चारुमूलाधारपद्मे षड्दलान्तः प्रकाशिनीम्।
श्रीबीजेन तर्पयामि भोगमोक्षाय केवलम ॥ ४ ॥ स्वाधिष्ठानकलोल्लासचिष्णुसङ्केत-
गामिनीम। कालिकां निजबीजेन तर्पयामि कुलामृतैः ॥ ५ ॥ स्वाधिष्ठानाख्य-
पद्मस्थां महातेजोमयीं शिवाम्। सूर्याणां शीर्षमधुना तर्पयामि कुलेश्वरीम् ॥ ६ ॥
मणिपूराजमध्येषु मनोहरकलेवराम्। उमां देवीन्तर्पयामि मायाबीजेन पार्वतीम्
॥ ७ ॥ मणिपूराम्भोजमध्ये त्रैलोक्यपरपूजिताम्। मालिनीम्मलचित्तस्य सद्बुद्धिं
तर्पयाम्यहम् ॥ ८ ॥ मणिपूरस्थितां रौद्रीं परमानन्दवर्द्धिनीम्। आकाशगामिनी-
न्देवीं कुब्जिकां तर्पयाम्यहम् ॥ ९ ॥ तर्पयामि महादेवीस्मन्त्रसाधनतत्पराम्।
योगिनीं कालसन्दर्भान्तर्पयामि कुलाननाम् ॥१०॥ शक्तिमन्त्रप्रदां रौद्रीं लोल-
जिह्वासमाकुलाम्। अपराजितां महादेवीं तर्पयामि कुलेश्वरीम् ॥११॥ महाकौल-

प्रिया सिद्धा रुद्रलोकसुखप्रदाम्। रुद्राणीं रुद्रकिरणां तर्पयामि मधुप्रियाम् ॥१२॥ षोडशस्वरसंसिद्धिं महारौरवनाशिनीम्। महामद्यपानचित्तां भैरवीन्तर्पयाम्यहम् ॥१३॥ त्रैलोक्यवरदान्देवीं श्रीबीजमालयावृताम्। महालक्ष्मीम्भवैश्वर्या तर्पयाम्यहमम्बिके। ॥१४॥ लोकानां हितकर्त्रीञ्च हिताहितजनप्रियाम्। तर्पयामि रमाबीजपीठाद्याम्पीठनायिकाम् ॥१५॥ जपन्तीं वेदवेदाङ्गमातरं सूर्यमातरम्। तर्पयामि सुधाभिश्च क्षेत्रज्ञाम्माययावृताम् ॥१६॥ तर्पयामि कुलानन्दपारगां परमाननाम्। तर्पयाम्यम्बिकान्देवीं मायालक्ष्मीं हृदि स्थिताम् ॥१७॥ सर्वासाञ्चरणद्वयाम्बुजतलश्चैतन्यविद्यावना मौल्यार्थं शुभषोडशस्वरयुतां श्रीषोडशीं मङ्गलाम्। आनन्दार्णवपद्मरागरचिते सिंहासने शोभिते त्वां नित्यम्परितर्पयामि सकलं श्वेताब्जमध्यासने ॥१८॥ ये नित्यं सुप्रतिष्ठितञ्चसकलस्तोत्राङ्गसन्तर्पणं विद्यादाननिदानमोक्षपरमम्मायामयं यान्ति ते। नो सन्ति क्षितिमण्डलेष्वरिगणाः सर्वे विपत्कारका राजानं वशयन्ति योगसकलं नित्या भवन्ति क्षणात् ॥१९॥ तर्पणात्मकमोक्षाख्यं पठते यदि मानुष। अष्टैश्वर्ययुतो भूत्वा वत्सरान्मामप्रपश्यति ॥२०॥ महायोगी भवेन्नाथ। मासादभ्यासतः प्रभो।। त्रैलोक्यं क्षोभयेत्क्षिप्रं वाञ्छाफलमवाप्नुयात् ॥२१॥ यः पठेदेकभावेन स तर्पणफलं लभेत्। पूजाफलमवाप्नोति कुमारीस्तोत्रपाठतः ॥२२॥ यो न कुर्यात्कुमार्यर्चाः स्तोत्रञ्च नित्यमङ्गलम्। स भवेत्पाशवः कल्पो मृत्युस्तस्य पदे पदे ॥२३॥

॥ इति श्रीरुद्रयामले उत्तरखण्डे महातन्त्रोद्दीपने कुमार्युपचर्योपविन्यासे सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णयभैरवीसम्वादे कुमारीतर्पणात्मकस्तोत्रं समाप्तम् ॥

# अथ कुमारीस्तोत्रम्

भैरव उवाच । देवेन्द्रोदयइन्दुकोटिकिरणां वाराणसीवासिनीं विद्यां वाग्भव-कामिनीं त्रिनयनां सूक्ष्मक्रियागामिनीम् । चण्डोद्वेगनिकृन्तनीं त्रिजगतां धात्रीं कुमारीं वरां मूलाम्भोरुहवासिनीं शशिमुखीं सम्पूजयन्ति श्रिये ॥ १ ॥ भाव्यां देवगणैः शिवेन्द्रयतिभिर्मोक्षार्थिभिर्वालिकां सन्ध्यां नित्यगुणोदयां द्विजगणश्रेष्ठो-दयां शासताम् । शुक्लाभां परमेश्वरीं शुभकरीं भद्रां विशालाननां गायत्रीं गणमातरं दिनपतिं कृष्णाञ्च वृद्धाम्भजे ॥ २ ॥ बालाम्बालकपूजितां गुणयुतां विद्यावता-म्मोक्षदां धात्रीं शुक्लसरस्वतीं नरवरां वाग्वादिनीं चण्डिकाम् । स्वाधिष्ठानहरप्रियां प्रियकरीं वेदान्तविद्याप्रदां नित्यं मोक्षहिताय योगवपुषा चैतन्यरूपाम्भजे ॥ ३ ॥ नानारत्नसमूहनिर्म्मितगृहे पूज्यां सुरैर्बालिकां वन्दे नन्दनकानने मनसि सिद्धान्तैक-बीजानने । अर्थं देहि निरर्थकाय वपुषे हित्वा कुमारीं कलां मह्यं मातु कुमारिके च त्रिविधा मूर्त्या च तेजोमयी ॥ ४ ॥ हालाहालकरालिकां कुलपथोल्लासैः करा-ब्जोद्वहां नासामोदकरालिनीं हि भजतां कामातिरिक्तप्रदाम् । बालोऽहम्वटुकेश्वरस्य चरणाम्भोजाश्रितोऽहं सदा हित्वा बालकुमारिके शिरसि शुक्लाम्भोरुहे सम्भजे ॥५॥ सूर्याह्लादवलाकिनीं कलिमहापापार्दितां पापहां तेजोगां भुवि सूर्यगां भयहरान्तेजो-मयीं कालिकाम् । वन्दे हृत्कमले सदा रविदले बालेन्द्रविद्यां सतीं साक्षात्सिद्धिकरीं कुमारिविमले ! त्वामाद्यरूपेश्वरीम् ॥ ६ ॥ नित्यं श्रीकुलकामिनीं कुलवतीं कौलामु-मामम्बिकां नानायोगविलासिनीं सुरमणीं नित्यान्तपस्यान्विताम् । वेदान्तार्थ-विशेषदेशवसनाभाषाविशेषस्थितां वन्दे पर्वतराजराजतनयां कालप्रिये ! त्वामहम् ॥ ७ ॥ कौमारीं कुलमालिनीं रिपुगणक्षोभाग्निसन्दायिनीं रक्ताभानयनां शुभां परममार्गां मुक्तिसञ्ज्ञाप्रदाम् । भार्याम्भोगवतीं पतिन्त्रिभुवनेच्छामोदपञ्चाननां पञ्चास्यप्रियकामिनीं भयहरां सर्पादिहाराम्भजे ॥ ८ ॥ चन्द्रास्याञ्चरणद्वया-

भुजमहाशोभाविनोदां नदीम्मोहादिक्षयकारिणीं वरकरां श्रीकुब्जिकां सुन्दरीम्। ये नित्यं परिपूजयन्ति महसा राजेन्द्रचूडामणिं सम्पत्तिन्धनमायुपन्त्रिजगतां व्यापेश्वरत्वञ्जगु ॥ ९ ॥ योगीशं भुवनेश्वरं प्रियकरं श्रीकालसन्दर्भया शोभासागरगामिनं सुरनरुं वाञ्छाफलोद्दीपनम्। लोकानामघनाशनाय शिवया श्रीसञ्ज्ञयाविद्यया धर्मप्राणसदैव तत्प्रणमतां कल्पद्रुमम्भावये ॥१०॥ विद्यान्तामपराजितां मदनगामामोदमत्ताननां हृत्पद्मस्थितपादुकां कुलकलां कात्यायनीं भैरवीम्। ये ये पुण्यधियो भजन्ति परमानन्दाब्धिमध्ये मुदा सर्वाच्छादिततेजसां भयकरीम्मोक्षाय सत्कीर्त्तये ॥११॥ रुद्राणीं प्रणमामि पद्मवदनां कोट्यर्कतेजोमयीं नानालङ्कृतभूषणां कुलभुजामानन्दसन्दायिनीम्। श्रीमायाकमलान्वितां हृदिगतां सन्तानबीजक्रियाम्वन्दे वाग्भवरूपिणीं कुलवधूं हुंकारबीजोद्भवाम् ॥१२॥ नमामि वरभैरवीं क्षितितलाघकालाननां मृणाब्जकुसुमारुणां भुवनदोषसंशोधिनीम्। जगद्भयहराम्परां स्वरति या च योगेश्वरी ममापदसहस्रकं सकलभोगदान्तामहम् ॥१३॥ साम्राज्यं प्रददाति या भगवती विद्यामहालक्षणा साक्षादष्टसमृद्धिदा भुवि महालक्ष्मीः कुलक्षोभहा। स्वाधिष्ठानसुपङ्कजे विवसितां विष्णोरनन्तश्रिये वन्दे राजपदप्रदां शुभकरीं कौलेश्वरीं सर्वदा ॥१४॥ पीठानामधिपाधिपामसुरहां विद्यां शुभां नायिकां सर्वालङ्करणान्वितां त्रिजगतां क्षोभापहां वारुणीम्। वन्दे पीठगनायिकां त्रिभुवनच्छायाभिराच्छादितां सर्वेषां हितकारिणीं जयवतामानन्दरूपेश्वरीम् ॥१५॥ क्षेत्रज्ञां मदविह्वलां कुलवतीं सिद्धप्रियाम्प्रेयसीं शम्भोः श्रीवटुकेश्वरस्य महतामानन्दसञ्चारिणीम्। साक्षादात्मपरोद्गमान्निजमनः क्षोभापहां शाकिनीं वाक्यार्थप्रकटामहं रजतमां वन्दे महाभैरवीम् ॥ १६ ॥ सुपूर्णविधुवन्मुखीं कमलमध्यमम्भाविनीं शिरोदशशते दलेऽमृतमहाब्धिधाराधराम्। प्रणामफलदायिनीं सकलराज्यवश्यां गुणां नमामि परमाम्बिकां विषयपाशसंहारिणीम् ॥ १७ ॥ साक्षादहं त्रिभुवनेऽमृतपूर्णदेहां सन्ध्यादिदेवि! कुलकुलपण्डितेन्द्राम्। तन्नो भजे सुरवरेश्वरकालिके त्वां सिद्धानले प्रतिदिनम्प्रणमामि भक्त्या भक्तिन्धनञ्जयपदं यदि देहि दास्यन्तस्मिन्महा-

मधुमतीलघुगेहभार्याम् ॥ १८ ॥ एतत्स्तोत्रप्रसादेन कवितावाक्पतिर्भवेत् । महासिद्धीश्वरो दिव्यो वीरभावपरायणः ॥१६॥ सर्वत्र जयमाप्नोति स हि स्याद्धरवल्लभः । वाचामीशो भवेत्क्षिप्रं कामरूपी भवेन्नरः ॥२०॥ पशुरेव महावीरो दिव्यो भवति निश्चितम् । क्रमशोऽप्यष्टसिद्धिः स्याद्वाग्मी भवति निश्चितम् ॥२१॥ सर्वविद्याः प्रसीदन्ति तुष्टाः सर्वदिगीश्वराः । वह्निः शीतलतां याति जलस्तम्भं स कारयेत् ॥२२॥ धनवान्पुत्रवान् राजा इहलोके भवेन्नरः । परिचरति वैकुण्ठे कैलासे शिवसन्निधौ ॥२३॥ मुक्त एव महादेव यो नित्यं सर्वदा पठेत् । महाविद्यापदाम्भोजं स हि पश्यति निश्चितम् ॥२४॥

॥ इति श्रीकुमारीस्तोत्रं समाप्तम्

---

# अथ कुमारीकवचम्

अथातः सम्प्रवक्ष्यामि कुमारीकवचं शुभम् । त्रैलोक्यमङ्गलन्नाम महापातकनाशनम् ॥ १ ॥ पठनाद्धारणाल्लोका महासिद्धाः प्रभाकराः । शक्रो देवाधिपः श्रीमान्देवगुरुर्बृहस्पतिः ॥ २ ॥ सम्यक्तेजोवयोवह्निर्धर्मराजो भयानकः । वरुणो देवपूज्यो हि जलानामधिपः स्वयम् ॥ ३ ॥ सर्वहर्त्ता महावायुः कुमारः कुञ्जरेश्वरः । धनाधिपः प्रियः शम्भोस्सर्वे देवा दिगीश्वराः ॥ ४ ॥ त्वमेकः प्रभुरेकात्मा सर्वेशो निर्मलोदयः । एतत्कवचपाठेन सर्वे भूपा धनाधिपाः ॥ ५ ॥ प्रणवो मे शिरः पातु माया सन्ध्यात्मिका सती । ललाटोर्ध्वं महामाया पातु मे श्रीसरस्वती ॥ ६ ॥ कामाख्या वटुकेशानी त्रिमूर्तिर्भाल मेऽवतु । चामुण्डा वीजरूपा च वदनं कालिका मम ॥ ७ ॥ पातु मां सूर्य्यगा नित्यन्तथा नेत्रद्वयम्मम । कर्णयुग्मं कामवीजस्वरूपा मा तपस्विनी ॥ ८ ॥ रसनाग्रन्तथा पातु वाग्देवी मालिनी मम ।

तामवस्था कामरूपादन्नाग्रं कुब्जिका मम ॥ ९ ॥ देवी प्रणवरूपा मा पातु नित्यं शिरो मम । ओष्ठाधरं शक्तिबीजात्मिका स्वाहास्वरूपिणी ॥१०॥ गलदेशम्महारौद्री पातु मे चाऽपराजिता । क्ष्रौं बीजम्मे सदा कण्ठं रुद्राणी स्वाहयाऽन्विता ॥११॥ हृदयं षोडशी विद्या पातु षोडशसुस्वरा । ह्रौं बाहू पातु सर्वत्र महालक्ष्मीः प्रधानिका ॥ १२ ॥ सर्वमन्त्रस्वरूपा मे चोदरम्पीठनायिका । पार्श्वयुग्मन्तथा पातु हृद्देवी वाग्भवात्मिका ॥ १३ ॥ कैशोरी कटिदेशम्मे मायाबीजस्वरूपिणी । जङ्घायुग्मं जयन्ती मे योगिनीकुलघुका धुना ॥ १४ ॥ सर्वाङ्गमम्बिका देवी पातु मन्त्रार्थगामिनी । केशाग्रं कमला देवी नासाग्रं नरमोहिनी ॥१५॥ चिबुकञ्चण्डिका देवी कुमारी पातु मे सदा । हृदयं ललिता देवी पृष्ठम्पर्वतवासिनी ॥१६॥ त्रिशक्तिः षोडशी देवी लिङ्गं गुह्यं सदाऽवतु । श्मशाने चाम्बिका देवी गङ्गा गर्भे च भैरवी ॥ १७ ॥ शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी । चतुष्पथे सदा पातु मामेव वज्रधारिणी ॥ १८ ॥ शवासनगता चण्डा मुण्डमालाविभूषिता । पातु मामेव लिङ्गे च ईश्वरी शक्तिरूपिणी ॥१९॥ वने पातु महाबाला महारण्ये रणप्रिया । महाजले तडागे च शत्रुमध्ये सरस्वती ॥२०॥ महाकाशपथे पृथ्वी पातु मा शीतला सदा । रणमध्ये राजलक्ष्मी कुमारी कुलकामिनी ॥२१॥ अर्द्धनारीश्वरी पातु मम पादतलं मही । नवलक्षमहाविद्या कुमारीरूपधारिणी ॥ २२ ॥ कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसुशीतला । पातु माम्वरदा वाणी बटुकेश्वरकामिनी ॥२३॥ इति ते कथितन्नाथ । कवचम्परमाद्भुतम् । कुमार्याः कुलदायिन्याः पञ्चतत्त्वार्थ पारगम् ॥२४॥ यो जपेत्पञ्चतत्त्वेन स्तोत्रेण कवचेन च । आकाशगामिनी सिद्धिर्भवेत्तस्य न संशयः ॥२५॥ वज्रदेही भवेत्क्षिप्रं कवचस्य प्रसादतः । सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत् ॥२६॥ विवादे व्यवहारे च सङ्ग्रामे कुलमण्डले महापथे श्मशाने च योगसिद्ध्युद्भवेन च ॥२७॥ पठित्वा फलमाप्नोति सत्यं सत्य कुलेश्वर ।। वशीकरणकवचं सर्वत्र जयदं शुभम् ॥२८॥ पुण्यव्रती पठेन्नित्यं यति श्रीमान्भवेद्ध्रुवम् । सिद्धविद्याकुमारी च ददाति सिद्धिमुत्तमाम् ॥ २९ ॥ पठेद्य.

शृणुयाद्वाऽपि स भवेत्कल्पपादपः। भुक्ति(क्ति)मुक्ति(क्ती) तुष्टि(ष्टि)पुष्टि(ष्टी) राजलक्ष्मीं सुसम्पदाम् ॥३०॥ प्राप्नोति साधकश्रेष्ठो धारयित्वा भवेज्जयी। असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम् ॥३१॥ कुलीनानां महासौख्यं धर्मार्थकाममोक्षदम्। योगिनान्दिवसे नित्यं कुमारीम्पूजयेन्निशि ॥३२॥ उपचारविशेषेण त्रैलोक्यं वशमानयेत्। पललेनाशने वाऽपि मत्स्येनमुद्रया सह ॥३३॥ नानाभक्ष्येण भोज्येन गन्धद्रव्येण साधकः। माल्येन स्वर्णरजतालङ्कारेण सुचैलकैः ॥३४॥ पूजयित्वा जपित्वा च तर्पयित्वा वराननाम्। यज्ञदानतपस्याभिः प्रयोगेण महेश्वर! ॥३५॥ स्तुत्वा-कुमारी कवचं यः पठेदेकभावतः। तस्य सिद्धिर्भवेन्निश्चितं राजराजेश्वरो भवेत् ॥३६॥ वाञ्छाफलमवाप्नोति यद्यन्मनसि वर्त्तते। भूर्ज्जपत्रे लिखित्वा यः कवचन्धारयेद्यदि ॥३७॥ शनिमङ्गलवारे च नवम्यामष्टमीदिने। चतुर्दश्याम्पौर्णमास्याङ्कृष्णपक्षे विशेषतः ॥३८॥ लिखित्वा धारयेद्विद्वानुत्तराभिमुखो भवेत्। महापातकयुक्तोऽपि मुक्तः स्यात्सर्वपातकैः ॥३९॥ योषिद्वामभुजे धृत्वा सर्वकल्याणमालभेत्। बहुपुत्रान्विता कान्ता सर्वसम्पत्तिसंयुता ॥४०॥ तथा श्रीपुरुषः श्रेष्ठो दक्षिणे धारयेद्भुजे। ऐहिकेदिव्यदेहः स्यात्पञ्चाननसमप्रभः ॥४१॥ शिवलोके परे याति वायुवेगी निरामयः। सूर्यमण्डलमाभेद्य परम्मोक्षमवाप्नुयात् ॥४२॥ लोकानामतिसौख्यदं भयहरं श्रीपादभक्तिप्रदं मोक्षार्थं कवचं शुभम्प्रपठतामानन्दसिन्धूद्भवम्। पन्थानं कलिकालघोरकलुषध्वंसैकहेतुश्च यं ये लोकाः प्रपठन्ति धर्म्ममतुलम्मोक्षम्व्रजन्ति क्षणात् ॥४३॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्युपचर्याविन्यासे कुमारीकवचोल्लासे सिद्धमन्त्रप्रकरणे भावनिर्णयकुमारीकवचं समाप्तम् ॥

---

# अथ कुमारीस्तोत्रम्

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणी। पूजाङ्गृहाण कौमारि! जगन्मातर्नमोऽस्तु ते ॥ १ ॥ त्रिपुरान्त्रिपुराधारा त्रिवर्षा ज्ञानरूपिणीम्। त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम् ॥२॥ कालात्मिकां कलातीतां कारुण्यहृदया शिवाम्। कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम ॥ ३ ॥ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्। अनन्तशक्तिकाह्लक्ष्मीं रोहिणीम्पूजयाम्यहम ॥ ४ ॥ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां कालिकाम्पूजयाम्यहम् ॥ ५ ॥ चण्डवीराश्चण्डमाया चण्डमुण्डप्रभञ्जनीम्। पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ॥ ६ ॥ सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शाम्भवीम्पूजयाम्यहम् ॥ ७ ॥ दुर्गमे दुस्तरे कार्ये भवदुःखनिवासिनीम्। पूजयामि सदा भक्त्या दुर्गां दुर्गार्त्तिनाशिनीम् ॥ ८ ॥ सुन्दरीं सर्ववर्णाभां सुखसौभाग्यदायिनीम्। सुभद्राजननीन्देवीं सुभद्राम्पूजयाम्यहम् ॥ ९ ॥

॥ इति श्रीकुमारीस्तोत्रं सम्पूर्णम् ॥

---

# नीलसरस्वतीस्तोत्रम्

श्रीगणेशाय नमः। घोररूपे महारावे सर्वशत्रुभयङ्करि। भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥ १ ॥ ॐ सुरासुरार्चिते देवि सिद्धगन्धर्वसेविते। जाड्यपापहरे देवि त्राहि० ॥ २ ॥ जटाजूटसमायुक्ते लोलजिह्वान्तकारिणि। द्रुतबुद्धिकरे देवि त्राहि० ॥ ३ ॥ सौम्यक्रोधधरे रूपे चण्डरूपे नमोऽस्तु ते। सृष्टिरूपे नमस्तुभ्यं त्राहि० ॥ ४ ॥ जडानां जडतां हन्ति भक्तानां भक्तवत्सला। मूढतां हर मे देवि

त्राहि० ॥५॥ हूं हूंकारमये देवि बलिहोमप्रिये! नमः। उग्रतारे नमो नित्यं त्राहि० ॥६॥ बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे। मूढत्वं च हरे देवि त्राहि० ॥७॥ इन्द्रादिविलसद्द्वन्द्ववन्दिते करुणामयि। तारे ताराधिनाथास्ये त्राहि० ॥८॥ अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः। षण्मासैः सिद्धिमाप्नोति नाऽत्र कार्या विचारणा ॥ ९ ॥ मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम्। विद्यार्थी लभते विद्यां तर्क-व्याकरणादिकम् ॥१०॥ इदं स्तोत्रं पठेद्यस्तु सततं श्रद्धयाऽन्वितः। तस्य शत्रुः क्षयं याति महाप्रज्ञा प्रजायते ॥११॥ पीडायाम्वाऽपि सङ्ग्रामे जाड्ये दाने तथा भये। य इदं पठति स्तोत्रं शुभं तस्य न संशयः। इति प्रणम्य स्तुत्वा च योनिमुद्रां प्रदर्शयेत् ॥१२॥

॥ इति श्रीनीलसरस्वतीस्तोत्रं सम्पूर्णम् ॥

---

# श्रीगायत्रीस्तोत्रम्

श्रीः। यस्मिन् दृष्टे नैव दृश्येत विश्वं यस्मिंल्लब्धे नैव लब्धव्यशेषः। यस्मिन् ज्ञाते नैव वेद्यान्तराशा गायत्र्यर्थं पञ्चवक्त्रं प्रपद्ये ॥ १ ॥ या गायत्री नामधेयं महार्थं सार्थं कर्तुं सम्प्रविष्टोपनाय। मार्गे मन्त्रान् सर्वतो दर्शयित्वा तारे लीना सर्ववेदार्थदीपे ॥ २ ॥ श्रोतव्यं मे वाक्यमेतत्समस्तैर्वर्णैर्भाव्यं स्वाश्रमप्राप्तचिह्नैः। तेभ्यस्तुष्येच्छङ्करः श्रीहरिर्वा प्रष्टव्यो वा श्रीगुरुः स्वैर्विनीतैः ॥३॥ गायत्री चेत्सम्यगाप्ता क्रमेण सा सञ्जप्ता कर्मशुद्ध्या द्विजेन। सा विज्ञाता गोपिता सम्प्रदायात्किं नो दद्याद्वेदमाता मता चेत् ॥ ४ ॥ बुद्धावीशारोहणं कर्म तस्याः सा चेत्त्यक्ता ईशो द्विजेन। यस्या सर्वा देवताः सम्प्रविष्टाः सर्वात्मानं मन्त्रराजं प्रपद्ये ॥ ५ ॥ विष्णुः शम्भुर्भास्करो विघ्नराजो या वा का वा देवतास्या विभूतिः। सैकोपास्या वेदमार्गैकनिष्ठैः क्षीराब्धौ किं दुग्धभिक्षाप्रयासः ॥ ६ ॥ नेयं लभ्या मानुषाणां कृपाणां

गङ्गाशब्दो मानुषत्वैकहेतुः । यस्या लब्ध्यं वेदिकाग्रेमराणां वंशे वेदैः संस्कृते जन्महेतुः ॥७॥ मन्त्रैः किं नो हि प्रतीक्ष्येत देवा गायत्र्यं वा सम्प्रवेष्टुं द्विजेषु । देवैः किं तैरभिना पुष्टिमद्भिस्तस्माद्भस्मोद्भूपिते सा निषेव्या ॥ ८ ॥ दत्तं भस्मं श्रीत्रिपादास्वयैतत्त्यद्भ्रयेरस्ये शेषरुद्रं स्वरूपम् । तस्माद्भस्म प्रोच्यते भासनाच्च धूतिर्गायत्र्यस्वयैस्यात्रिपुण्ड्रम् ॥ ९ ॥ शैवोऽन्यो वा या विना किं द्विजः स्याच्छैवोऽन्येषु दीक्षया वेदमातुः । तस्माच्छैवो वैष्णवोऽन्येषु गण्यो गायत्र्याश्च ब्रह्मता वेदमान्या ॥१०॥ वेदोपाङ्गव्याप्तिं सा बिभर्ति ध्यानैर्भिन्नैर्ध्याननिष्ठैकवेद्यम् । तस्मान्नामान्यत्र संयान्ति सर्वाण्यस्या निष्ठा शाम्भवी वैष्णवी च ॥११॥ लोकस्थास्ते विष्णुरुद्रादिदेवाः केश्चित्कामैः कैश्चिदेवाधिकारैः । गायत्र्यास्ते भूतयः सेवनीया गायत्र्यां ते सेविताः सम्भ्रमेण ॥१२॥ ब्रह्मत्वं चेदाप्तुकामोऽस्युपास्यं गायत्री चेल्लोककामोऽन्यदेवम् । कामो ज्ञातः स्वीयपादप्रवृत्त्या वादः को वा हृमिहीने प्रवृत्तिः ॥१३॥ बुद्धेः साक्षी बुद्धिगम्यो जपादौ गायत्र्यर्थः सोऽनघो वेदसारः । तद्ब्रह्मैव ब्रह्मतोपासकस्याऽप्येवं मन्त्रः कोऽस्ति तन्त्रे पुराणे ॥१४॥ जात्यश्च किं जातिमाप्तुं सकामो गत्यभ्यासात्स्वपरतामेति जातिः । ब्रह्मत्वाप्तौ कः प्रयासो द्विजाना यद्गायत्र्याऽप्यजते चाष्टमेऽब्दे ॥१५॥ ब्रह्मत्वस्य स्थापनार्थं प्रविष्टा गायत्रीयं तावताऽस्य द्विजत्वम् । कर्णद्वारा ब्रह्मजन्मप्रदानादुक्तो वेदे ब्रह्मणो ब्रह्मनिष्ठः ॥१६॥ एषा निष्ठा दुर्लभा मर्त्यबुद्धौ तस्माल्लोके वैष्णवाः शाम्भवाश्च । भिन्नं भिन्नं मार्गमास्थाय वेदं क्षामं कुर्वन्त्यास्तिकच्छद्मनेमे ॥ १७ ॥ पक्षिद्वन्द्वं विद्यते स्वस्वदेहे भोक्तारं सा ध्यानमात्रेण एतत् । यावत्क्षीणा भोक्तृता स्यात्ततस्तु ज्ञात्वा ब्रूयाद्ब्रह्मता स्वस्य विद्वान् ॥१८॥ गायत्र्यर्थं नो विजानाति कश्चित्तस्मादन्यं देवमाह द्विजोऽपि । विज्ञातश्चेन्मर्वथादस्य शान्तिर्मुक्तिर्हस्ते गायमानस्य मन्त्रम् ॥१९॥ भस्मान्तं चेद्विश्वमेतत्समस्तं भस्मोद्भूतं भस्म सम्भासते च । तस्माद्ब्रह्म प्राहुरार्यैर्वचोभिर्वेदान्तस्माद्भस्मलिङ्गं द्विजानाम् ॥२०॥ इति श्रीशङ्कराचार्याभिप्रायः कृष्णभिक्षुणा । वर्णितस्तेन गायत्री विभूत्या सह नन्दतु ॥२१॥

॥ इति श्रीकृष्णानन्दसरस्वतीविरचितं गायत्रीस्तोत्रं सम्पूर्णम् ॥

# अथ श्रीतुलसीस्तोत्रम्

जगद्धात्रि! नमस्तुभ्यं विष्णोश्च प्रियवल्लभे!। यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्त-कारिणः ॥१॥ नमस्तुलसि कल्याणि नमो विष्णुप्रिये! शुभे!। नमो मोक्षप्रदे देवि नमः सम्पत्प्रदायिके ॥ २ ॥ तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा। कीर्तिताऽपि स्मृता वाऽपि पवित्रयति मानवम् ॥३॥ नमामि शिरसा देवीं तुलसीं विलसत्तनुम्। यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते तत्र किल्विषात् ॥ ४ ॥ तुलस्या रक्षितं सर्वं जगदेतच्चराचरम्। या विनिर्हन्ति पापानि दृष्ट्वा वा पापिभिर्नरैः ॥ ५ ॥ नमस्तुलस्यतितरां यस्यै बध्वा बलिं कलौ। कलयन्ति सुखं सर्वं स्त्रियो वैश्यास्तथाऽपरे ॥ ६ ॥ तुलस्या नापरं किञ्चिद्दैवतं जगतीतले। यथा पवित्रितो लोको विष्णुसङ्गेन वैष्णवः ॥ ७ ॥ तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ। आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥ ८ ॥ तुलस्यां सकला देवा वसन्ति सततं यतः। अतस्तामर्चयंल्लोके सर्वान्देवान्समर्चयन् ॥ ९ ॥ नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे!। पाहि मां सर्वपापेभ्यः सर्वसम्पत्प्रदायिके! ॥१०॥ इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता। विष्णुमर्चयता नित्यं शोभितैस्तुलसीदलैः ॥११॥ तुलसी श्रीमहालक्ष्मी-र्विद्याविद्यायशस्विनी। धर्म्याधर्म्यानना देवी देवदेवमनः प्रिया ॥१२॥ लक्ष्मीः प्रियसखी देवी द्यौर्भूमिरचला चला। षोडशैतानि नामानि तुलस्याः कीर्तयेन्नरः ॥१३॥ लभते सुतरां भक्तिमन्ते विष्णुपदं तथा। तुलसीभूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥१४॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे। नमस्ते नारदनुते नारायणमनःप्रिये! ॥ १५ ॥

॥ इति श्रीपुण्डरीककृतं तुलसीस्तोत्रं सम्पूर्णम् ॥

---

# अथ राधाकवचम्

पार्वत्युवाच । कैलासवासिन भगवन भक्तानुग्रहकारक ।। राधिकाकवचं पुण्यं कथयस्व मम प्रभो । ॥१॥ यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात् । त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥२॥ शिव उवाच । शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसूचितम् । सर्वरक्षाकरं पुण्यं सर्वहत्याहरं परम् ॥ ३ ॥ हरिभक्तिप्रदं साक्षाद् भुक्तिमुक्तिप्रसाधनम् । त्रैलोक्यकर्षणं देवि ! हरिसान्निध्यकारकम् ॥ ४ ॥ सर्वत्र जयदं देवि सर्वशत्रुभयावहम् । सर्वेषां चैव भूतानां मनोवृत्तिहरं परम् ॥ ५ ॥ चतुर्धा मुक्तिजनकं सदानन्दकरं परम् । राजसूयाश्वमेधानां यज्ञानां फलदायकम् ॥६॥ इदं कवचमज्ञात्वा राधामन्त्रं च यो जपेत् । स नाऽऽप्नोति फलं तस्य विघ्नास्तस्य पदे पदे ॥७॥ ऋषिरस्य महादेवोऽनुष्टुप्छन्दश्च कीर्तितम् । राधाऽस्य देवता प्रोक्ता रा बीजं कीलकं स्मृतम् ॥८॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः । श्रीराधा मे शिरः पातु ललाटं राधिका तथा ॥९॥ श्रीमती नेत्रयुगलं कर्णौ गोपेन्द्रनन्दिनी । हरिप्रिया नासिका वै भ्रूयुगं शशिशोभना ॥१०॥ ओष्ठं पातु कृपादेवी अधरं गोपिका तथा । वृषभानुसुता दन्तांश्चिबुकं गोपनन्दिनी ॥११॥ चन्द्रावली पातु गण्डं हृदयं कृष्णप्रिया तथा । कण्ठम्पातु हरिप्राणा हृदयम्विजया तथा ॥१२॥ बाहू द्वौ चन्द्रवदना उदरं सुबलस्वसा । कोटियोगान्विता पातु पादौ सौभद्रिका तथा ॥१३॥ नखांश्चन्द्रमुखी पातु गुल्फौ गोपालवल्लभा । नखान् विधुमुखी देवी गोपी पादतलं तथा ॥१४॥ शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकान्तवल्लभा । जानुदेशं जया पातु हरिणी पातु सर्वतः ॥१५॥ वाक्यं वाणी सदा पातु धनागारं धनेश्वरी । पूर्वां दिशं कृष्णरता कृष्णप्राणा च पश्चिमम् ॥१६॥ उत्तरां हरिता पातु दक्षिणां वृषभानुजा । चन्द्रावली नैशमेव दिवा क्ष्वेडितमेखला ॥१७॥ सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी । रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये ॥१८॥ शुभदा सङ्गवे पातु केतुमाला दिनार्धके । शेषाऽपराह्णसमये शमिता सर्वसन्धिषु ॥१९॥ योगिनी योगसमये रतौ रतिप्रदा

सदा । कामेशी कौतुके नित्यं योगरत्नावली मम ॥२०॥ सर्वदा सर्वकार्येषु राधिका कृष्णमानसा । इत्येतत्कथितं देवि कवचं परमाद्भुतम् ॥२१॥ सर्वरक्षाकरं नाम महारक्षाकरं परम् । प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥२२॥ सर्वार्थसिद्धिस्तस्य स्याद्यद्यन्मनसि वर्त्तते । राजद्वारे सभायां च सङ्ग्रामे शत्रुसङ्कटे ॥ २३ ॥ प्राणार्थनाशसमये यः पठेत्प्रयतो नरः । तस्य सिद्धिर्भवेद् देवि न भयं विद्यते क्वचित् ॥२४॥ आराधिता राधिका च तेन सत्यं न संशयः । गङ्गास्नानाद्धरेर्नामग्रहणाद्यत्फलं भवेत् ॥२५॥ तत्फलं तस्य भवति यः पठेत्प्रयतः शुचिः । हरिद्रारोचनाचन्द्रमण्डितं हरिचन्दनम् ॥२६॥ कृत्वा लिखित्वा भूर्ज्जे च धारयेन्मस्तके भुजे । कण्ठे वा देवदेवेशि ! स हरिर्नाऽत्रसंशयः ॥ २७ ॥ कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः । संहारं नियतं चाऽहं करोमि कुरुते तथा ॥२८॥ वैष्णवाय विशुद्धाय विरागगुणशालिने । दद्यात्कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥२९॥

॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे राधाकवचं समाप्तम् ॥

# अथ परापूजा

उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि। अयि कृपार्द्रकटाक्षविलोकनैर्जगदिदं जगदम्ब। सुखीकुरु ॥ १ ॥ कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम्। मणिमयमण्डपमध्यमेहि मातर्मम कृपया हि समर्चनं ग्रहीतुम् ॥२॥ कनककलशशोभमानशीर्षं जलधरचुम्बि समुल्लसत्पताकम्। भगवति तव सन्निधानहेतोर्मणिमयमन्दिरमेतदर्पयामि ॥ ३ ॥ तपनीयमयी सुतूलिका कमनीया दुकूलोत्तरच्छदा। नवरत्नविभूषिता मया शिबिकेयं जगदम्ब तेऽर्पिता ॥ ४ ॥ कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे। भगवति रमणीये रत्नसिंहासनेऽस्मिन्नुपविश पदयुग्मं हेमपीठे निधेहि ॥ ५ ॥ मणिमौक्तिकनिर्मितं महार्घं कनकस्तम्भचतुष्टयेन युक्तम्। कमनीयतमं भवानि। तुभ्यं नवमुल्लोचमहं समर्पयामि ॥ ६ ॥ दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम्। पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः। ॥७॥ गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतयुक्तम्। हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ॥ ८ ॥ जलजद्युतिनारिकेलजातीफलकङ्कोललवङ्गगन्धयुक्तैः। अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं विधीयतां हे ॥ ९ ॥ निहितं कनकस्य सम्पुटे पिहितं रत्नपिधानकेन यत्। तदिदं भवनीकरेऽर्पितं मधुपर्कं जननि। प्रगृह्यताम् ॥१०॥ एतच्चम्पकतैलमम्ब विविधैः पुष्पैर्मुहुर्वासितं न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम्। सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं तन्मया केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चाऽऽलिप्यते॥११॥ मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं भक्त्या हं कलयामि हेमरजसा सम्मिश्रितं केशरैः। केशानामलकैर्विशोध्य विशदं कस्तूरिकाद्यन्वितैः स्नानं ते नवरत्नकुम्भसहितैः सम्वासितोष्णोदकैः॥१२॥ दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः। स्नपयामि तवाऽहमग्रतो (तवाऽहमादृतो) जननि! त्वां पुनरुष्णवारिभिः

॥ १३ ॥ एलोशीरसुवासितैः सुकुसुमैर्गङ्गादितीर्थोदकैर्माणिक्यद्रवमौक्तिकामृतयुतैः स्वच्छैः (रसैः, सुवर्णोदकैः । मन्त्रान्वैदिकतान्त्रिकान्परिपठन्सानन्दमत्यादरात् स्नानीयं परिकल्पयामि जननि! स्नानं त्वमङ्गीकुरु ॥१४॥ बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्द्धि-सर्वोत्तमं मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् । मुक्ताभिर्ग्रथितं च कञ्चुकमिदं स्वीकृत्य पीतप्रभं तप्तं स्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥ १५ ॥ नवरत्नयुते मयाऽर्पिते कमनीये तपनीयपादुके । सविलासमिदं पदद्वयं कृपया देवि! तयोर्विधीयताम् ॥१६॥ बहुभिरगुरुधूपैः सादरं धूपयित्वा भगवति! तव केशान्कङ्कतो मार्जयित्वा । सुरभिभिररविन्दैश्चम्पकैश्चार्चयित्वा झटिति कनकसूत्रैर्जूटकं वेष्टयामि ॥१७॥ सौवीराञ्जनमिदमम्ब ! चक्षुषोस्ते विन्यस्तं कनकशलाकया मया यत् । तन्नूनं मलिनमपि त्वदक्षिसङ्गाद्ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥१८॥ मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ मुक्ताहारमुरोजयोरनुपमं नक्षत्रमालां गले । केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात्ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥१९॥ धम्मिल्ले तव देवि! हेमकुसुमान्याधाय भालस्थले मुक्तासङ्गविराजि हेमतिलकं नासापुटे मौक्तिकम् । मातर्मौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥२०॥ मातः ! फालतले तवाऽतिविमले काश्मीरकस्तूरिकाकर्पूरागुरुभिः करोमि तिलकं देहेऽङ्गरागं ततः । वक्षोभ्राजिषु यक्षकर्दमरसैः सिक्त्वाऽऽर्द्रपुष्पद्रवैः पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ॥ २१ ॥ रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः । अखण्डितैर्देवि! यवादिभिर्वा काश्मीरपङ्काङ्किततन्दुलैर्वा ॥२२॥ जननि! चम्पकतैलमिदं पुरा मृगमदोऽयमयं पटवासकः । सुरभिगन्धमिदं च चतुष्टयं सपदि सर्वमिदं परिगृह्यताम् ॥२३॥ सीमन्ते ते भगवति मया सादरं न्यस्तमेतत्सिन्दूरं मे हृदयकमले देवि! हर्षं तनोतु । बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिरन्तर्ध्वान्तं हरतु जगतश्चेतसा चिन्तयाऽपि ॥२४॥ मन्दारकुन्दकरवीरलवङ्गपुष्पैस्त्वां देवि! सन्ततमहं परिपूजयामि । जातीजपावकुलचम्पककेतकादिनानाविधानि कुसुमानि

च तेऽर्पयामि ॥२५॥ मालतीवकुलहेमपुष्पिकाकाञ्चनादिकरवीरकेतकैः । कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः ॥२६॥ पारिजातशतपत्रपाटलामल्लिकावकुलचम्पकादिभिः । अम्बुजैश्च कुमुदैश्च सादरं पूजयामि जगदम्ब ते वपुः ॥२७॥ लाक्षासम्मिलितैः सिताभ्रसहितैः श्रीवाससम्मिश्रितैः कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषालोडितैः । श्रीखण्डागुरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभिर्धूपं ते परिकल्पयामि जननि धूपं त्वमङ्गीकुरु ॥२८॥ रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितैर्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः । आताम्रज्वलदुज्ज्वलज्वलनवद्रत्नप्रदीपैस्तथा मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥२९॥ महति कनकपात्रे स्थापयित्वा विशालाण्डमरुसदृशरूपानुच्चगोधूमदीपान् । बहु घृतमथ तेषु न्यस्तदीपानुकम्पान्भुवनजननि ! कुर्वे नित्यमारार्तिकं ते ॥३०॥ सविनयमथ दत्त्वा जानुयुग्मं धरित्र्यां सपदि शिरसि धृत्वा पात्रमारार्तिकस्य । मुखकमलसमीपे तेन सार्धं त्रिवारं भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ॥३१॥ मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तानकान् सूपापूपसिताघृतैः सुवटकैः सद्राक्षरम्भाफलैः । एलाजीरकहिङ्गुनागरनिशाकौस्तुम्बरैः संस्कृतैः शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्पयन् ॥ ३२ ॥ सापूपसूपदधिदुग्धसिताघृतानि सुस्वादुभक्तपरमान्नपुरस्सराणि । शाकोल्लसन्मरिचजीरकबाह्लिकानि भक्ष्याणि भक्ष जगदम्ब मयाऽर्पितानि ॥ ३३ ॥ क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु । मातरेतदमृतोपमं पयः सम्भ्रमेण परिपीयतां मुहुः ॥३४॥ उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे । कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ॥ ३५ ॥ अतिशीतमुशीरवासितं तव पानाय मया निवेदितम् । पटपूतमिदं जितामृतं शुचि गङ्गामृतमम्ब ! पीयताम् ॥३६॥ ताम्राम्लरम्भाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि । सनारिकेलानि सदाडिमानि फलानि ते देवि ! समर्पयामि ॥३७॥ कूष्माण्डकोशातकसंयुतानि जम्बीरनारिङ्गसमन्वितानि । सबीजपूराणि सबादराणि फलानि ते देवि ! समर्पयामि ॥३८॥ कर्पूरेण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः सुस्वादुक्रमुकैः सगौ-

खदिरैः सुस्निग्धजातीफलैः। मातः केतकपत्रपाण्डुरुचिभिस्ताम्बूलवल्लीदलैः सानन्दं मुखवासनार्थमतुलं ताम्बूलमङ्गीकुरु ॥३९॥ एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरविमिश्रितानि। ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि! समर्पयामि ॥ ४० ॥ ताम्बूलवल्लिदलनिर्जितहेमवर्णं स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम्। रत्नस्थलिस्थितमिदं खदिरेण सार्धं ताम्बूलमम्ब! वदने कुरु हे गृहाण ॥४१॥ अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वावकीर्य त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः। मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां जननि कनकवृष्टिं दक्षिणां ते ददामि ॥४२॥ मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं नानारत्नविशोभि हेमकलशं लोकत्रयाह्लादकम्। भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं छत्रं ते करिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम् ॥४३॥ शरदिन्दुमरीचिगौरवर्णैर्मणिमुक्ताखचितैः सुवर्णदण्डैः। जगदम्ब! विचित्रचामरैस्त्वामहमानन्दभरेण वीजयामि ॥४४॥ मार्तण्डमण्डलनिभो जगदम्ब योऽयं भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते। पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीयमस्मान्विलोकय विलोलविलोचने! त्वम् ॥४५॥ इन्द्रादयोऽप्यतितरैर्मुकुटप्रदीपैर्नीराजयन्ति सततं तव पादपीठम्। तस्मादहं तव शरीरमशेषमेतन्नीराजयामि जगदम्ब सहस्रदीपैः ॥४६॥ प्रियरतिरतितुङ्गो रत्नपर्यङ्कयुक्तः कनकमयविभूषः स्निग्धगम्भीरघोषः। भगवति कलितोऽयं वाहनार्थं मया ते तुरगशतसमेतो वायुवेगस्तुरङ्गः ॥ ४७ ॥ मधुकरवृतकुम्भन्यस्तसिन्दूररेणुः कनककलितघण्टाकिङ्किणीशोभिकण्ठः। श्रवणयुगलचञ्चच्चामरो मेघतुल्यो जननि! तव मुदे स्यान्मत्तमातङ्ग एषः ॥ ४८ ॥ द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम्। कनकमयमहं वितानवन्तं भगवति पुण्य(ति हि)रथं समर्पयामि ॥४९॥ हयगजरथपङ्क्तिशोभमानं दिशि दिशि दुन्दुभिमेघनादयुक्तम्। सति बहुचतुरङ्गसैन्यमेतद्भगवति! भक्तिभरेण तेऽर्पयामि ॥ ५० ॥ परिधिकृतसप्तसागरं बहुसम्पत्सहितं मयाऽम्ब ते। विपुलधरणिमत्ताभिपक्षपातं प्रबलं दुर्गमिदं समर्पयामि ॥ ५१ ॥ शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः। भ्रमरीमुखरीकृतैरनन्तैर्व्यजनैस्त्वामहमम्ब वीजयामि

॥५२॥ क्षितिविलुलितलोलकुन्तलालिविगलितमाल्यविकीर्णरङ्गभूमिः। इयमतिरुचिरा नटी नटन्ती तव हृदये मुदमातनोतु मातः! ॥५३॥ मुखकमल(नयन)विलासलोलवेणी विलसितजितलोलभृङ्गमालाः। इयमभिनयदर्शनप्रवीणा सुखयतु सुन्दरि! मानसं त्वदीयम् ॥५४॥ भ्रमदलिकुलतुल्या लोलधम्मिल्लभारा स्मितमुखकमलोद्यद्दिव्यलावण्यपूरा। अनुपमनववेशा वारयोषा नटन्ती परभृतसमकण्ठी देवि हर्षं तनोतु ॥ ५५ ॥ रुचिरकुचतटीनां नाट्यकाले नटीनां प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासम्। धिमिकिति धिगिधिन्धिन्धिन्धिधीतिधि धिम् धिगितधिगितधींगी तत्तथा धीति शब्दः ॥५६॥ डमरुडिण्डिमभर्भरझर्झरीमृदुरवा मुहुताः पटहादयः। झटिति झङ्कृतिभिर्जगदम्बिके! बहुतरं हृदयं सुखयन्तु ते ॥५७॥ विपञ्चीसु सप्तस्वरान्वादयन्त्यस्तव द्वारि गायन्ति गन्धर्वकन्याः। क्षणं सावधानेन चित्तेन मातः समाकर्ण्यतां भो मया प्रार्थिताऽसि ॥५८॥ अभिनवकमनीयैर्नर्तनैर्नर्तकीनां क्षणमपि रमयित्वा चेत एवं त्वदीयम्। स्वयमहमथ चित्रैर्नृत्यवादित्रगीतैर्भगवति! भवदीयं मानसं रञ्जयामि ॥५९॥ तव देवि! गुणानुवर्णने चतुरा नो चतुराननादयः। तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः ॥६०॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधस्य फलं ददाति। तां सर्वपापक्षयहेतुभूतां प्रदक्षिणान्ते परितः करोमि ॥६१॥ रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाङ्कुशचिह्निताभ्याम्। अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥६२॥ चरणकमलयुग्मं पङ्कजैः पूजयित्वा कनककमलमालाः कण्ठदेशेऽर्पयित्वा। शिरसि विनिहितोऽयं रक्तपुष्पाञ्जलिस्ते हृदयकमलमध्ये देवि! हर्षं तनोतु ॥६३॥ अथ मणिमयमञ्चकाभिरामे शुचिमति पुष्पवितानराजमाने। प्रसरदगुरुधूपधूपितेऽस्मिन्भगवति वासगृहेऽस्तु ते निवासः ॥६४॥ एतस्मिन्मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदे निधाय पादौ। विस्तीर्णे मृदुलतरोत्तरच्छदेऽस्मिन्पर्यङ्के कनकमये निषीद मातः! ॥६५॥ तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः। अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥६६॥ अथ मातरुशीरवासितं निजताम्बूलरसेन रञ्जितम्। तपनीयमये सुभाजने मुखगण्डूषजलं विधीयताम् ॥६७॥ क्षणमथ

जगदम्ब! मञ्चकेऽस्मिन्मृदुतलतूलिकया विराजमाने। अतिरहसि मुदा शिवेन सार्धं सुखशयनं कुरु मां हृदि स्मरन्ती ॥६८॥ मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्तामक्षस्रक्कुण्डचिह्नामभयवरकरां चन्द्रचूडां त्रिनेत्राम्। नानालङ्कारयुक्तां स्फुटमुकुटमणिद्योतितस्वर्णपीठां सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥६९॥ एपा भक्त्या तव विरचिता या मया देवि पूजा स्वीकृत्यैनां सपदि सकलान्मेऽपराधान्क्षमस्व। नूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥ पूजामिमां पठेत्प्राज्ञः पूजां कर्त्तुमनीश्वरः। पूजाफलमवाप्नोति वाञ्छितार्थांश्च विन्दति ॥७१॥ प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत्। वाग्वादिन्याः प्रसादेन वत्सरात्स विभुर्भवेत् ॥७२॥

॥ इति श्रीशङ्कराचार्यविरचिता परामानसिकापूजा समाप्ता ॥

---

# त्रिपुरसुन्दरीस्तोत्रम्

कदम्बवनचारिणीं मुनिकदम्बकादम्बिनीं नितम्बजितभूधरां सुरनितम्बिनीसेविताम्। नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ १ ॥ कदम्बवनवासिनीं कनकवल्लकीधारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम्। दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ २ ॥ कदम्बवनशालया कुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया। मदारुणकपोलया मधुरगीतवाचालया कयाऽपि घननीलया कवचिता वयं लीलया ॥ ३ ॥ कदम्बवनमध्यगां कनकमण्डलोपस्थितां षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम्। विडम्बितजपारुचिं विकचचन्द्रचूडामणिं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ४ ॥ कुचाञ्चितविपञ्चिकां कुटिलकुन्तलालङ्कृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम्। मदारुणविलोचनां

मनसिजारिसम्मोहिनीं मतङ्गमुनिकन्यका मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दुनीलाम्बरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्राञ्चलाम् । घनस्तनभरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६ ॥ सकुङ्कुमविलेपनामलकचुम्बिकस्तूरिकां समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम् । अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥ ७ ॥ पुरन्दरपुरन्ध्रिकाचिकुरबन्धसैरन्ध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुन्दरमणीं मणीलसदलङ्क्रियाकारिणीं भजामि भुवनाम्बिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचितं त्रिपुरसुन्दरीस्तोत्रं सम्पूर्णम् ॥

---

# अथ वाराहीनिग्रहाष्टकम्

देवि ! क्रोडमुखि त्वदङ्घ्रिकमलद्वन्द्वानुरक्तात्मने मह्यं द्रुह्यति यो महेशि ! मनसा कायेन वाचा नरः । तस्याऽऽशु त्वदयोमनिष्ठुरहलाघातप्रभूतव्यथा पर्यस्यन् मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवि ! त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशंसभावमलिना वृत्तिं विधत्ते मयि । यो देही भुवने तदीयहृदयान्निर्गतैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वाञ्छाफलैर्मामपि ॥ २ ॥ चण्डोत्तुण्डविदीर्णदुष्टहृदयप्रोद्भिन्नरक्तच्छटाहालापानमदाट्टहासनिनदाटोपप्रतापोत्कटम् । मातर्मत्परिपन्थिनामपहृतैः प्राणैस्त्वदङ्घ्रिद्वयं ध्यानोद्दामरवैभवोदयवशात्सन्तर्पयामि क्षणात् ॥ ३ ॥ श्यामां तामरसाननाङ्घ्रिनयनां सोमार्धचूडां जगत्त्राणव्यग्रहलायुधाग्रमुसलां सन्त्रासमुद्रावतीम् । ये त्वां रक्तकपालिनीं हरवरारोहे वराहानना

भावैः सन्दधते कथं क्षणमपि प्राणन्ति तेषां द्विपः ॥ ४ ॥ विश्वाधीश्वरवल्लभे विजयसे या त्वं नियन्त्र्यात्मिका भूतान्ता पुरुषायुषावधिकरी पाकप्रदा कर्मणाम्। त्वां याचे भवतीं किमप्यवितथं यो मद्विरोधी जनस्तस्यायुर्मम वाञ्छितावधि भवेन्मातस्तवैवाऽऽज्ञया ॥५॥ मातः सम्यगुपासितुं जडमतिस्त्वां नैव शक्नोम्यहं यद्यप्यन्वितदेशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे। जन्तुः कश्चन चिन्तयत्यकुशलं यस्तस्य तद्वैशसं भूयाद्देवि! विरोधिनो मम च ते श्रेयः पदासङ्गिनः ॥६॥ वाराहि! व्यथमानमानसगलत्सौख्यं तदाशावलिं सीदन्तं यमपाकृताध्यवसितं प्राप्ताखिलोत्पादितम्। क्रन्दद्बन्धुजनैः कलङ्कितकुलं कण्ठव्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशु पतितं भ्रान्तं लुठन्तं मुहुः ॥ ७ ॥ वाराहि! त्वमशेषजन्तुषु पुनः प्राणात्मिका स्पन्दसे शक्तिव्याप्तचराचरा खलु यतस्त्वामेतदभ्यर्थये। त्वत्पादाम्बुजसङ्गिनो मम सकृत्पापं चिकीर्षन्ति ये तेषां मा कुरु शङ्करप्रियतमे देहान्तरावस्थितिम् ॥ ॥ ॥

॥ इति श्रीवाराहीनिग्रहाष्टकं सम्पूर्णम् ॥

---

# अथ वाराह्यनुग्रहाष्टकम्

ईश्वर उवाच। मातर्जगद्रचननाटकसूत्रधारस्त्वद्रूपमाकलयितुं परमार्थतोऽयम्। ईशोऽप्यनीश्वरपदं समुपैति तादृक्कोऽन्यस्तवं किमिव तावकमादधातु ॥ १ ॥ नामानि किं तु गृणतस्तव लोकतुण्डे नाडम्बरं स्पृशति दण्डधरस्य दण्डः। यल्लेशलम्बितभवाम्बुनिधिर्यतो यत्त्वन्नामसंस्मृतिरियं ननु न स्तुतिस्ते ॥ २ ॥ त्वच्चिन्तनादरसमुल्लसदप्रमेयानन्दोद्भवात्समुदितः स्फुटरोमहर्षः। मातर्नमामि सुदिनानि सदेत्यमुं त्वामभ्यर्थयेऽर्थमिति पूरयताद्दयालो ॥ ३ ॥ इन्द्रेन्दुमौलिविधिकेशवमौलिरत्नरोचिश्चयोज्ज्वलितपादसरोजयुग्मे। चेतो मतौ मम सदा प्रतिबिम्बिता त्वं भूय भयानि विदधातु सदोरुदारे ॥ ४ ॥ लीलोद्धृतक्षितितलस्य वराहमूर्तेर्वाराहमूर्ति-

रखिलार्थकरी त्वमेव। प्रालेयरश्मिसुकलोल्लसितावतंसा त्वं देवि वामतनुभागहरा हरस्य ॥ ५ ॥ त्वामम्ब तप्तकनकोज्ज्वलकान्तिमन्तर्ये चिन्तयन्ति युवतीतनुमागलान्ताम्। चक्रायुधत्रिनयनाम्बरपोतृवक्त्रा तेषां पदाम्बुजयुगं प्रणमन्ति देवाः॥६॥ त्वत्सेवनस्खलितपापचयस्य मानमोक्षोऽपि यत्र न सतां गणनामुपैति। देवासुरोरगनृपालनमस्य पादस्तत्र श्रियः पटुगिरः कियदेवमस्तु ॥ ७ ॥ किं दुष्करं त्वयि मनोविषयं गतायां किं दुर्लभं त्वयि विधानवदर्चितायाम्। किं दुष्करं त्वयि सकृत्स्मृतिमागतायां किं दुर्जयं त्वयि कृतस्तुतिवादपुंसाम् ॥ ८ ॥

॥ इति श्रीवाराह्यनुग्रहाष्टकं सम्पूर्णम् ॥

---

## अथ भगवत्यष्टकम्

नमोऽस्तु ते सरस्वति त्रिशूलचक्रधारिणि सिताम्बरावृते शुभे मृगेन्द्रपीठसंस्थिते। सुवर्णबन्धुराधरे सुमञ्जरीशिरोरुहे सुवर्णपद्मभूषिते नमोऽस्तु ते महेश्वरि ॥१॥ पितामहादिभिर्नुते स्वकान्तिलुप्तचन्द्रभे सरत्नमालया वृते भवाब्धिकष्टहारिणि। तमालहस्तमण्डिते तमालभालशोभिते गिरामगोचरे इले नमोऽस्तु० ॥ २ ॥ स्वभक्तवत्सलेऽनघे सदाऽपवर्गभोगदे दरिद्रदुःखहारिणि त्रिलोकशङ्करीश्वरि। भवानि! भीम! अम्बिके! प्रचण्डतेजउज्ज्वले भुजाकलापमण्डिते नमोऽस्तु० ॥ ३ ॥ प्रपन्नभीतिनाशिके प्रसूनमाल्यकन्धरे धियस्तमोनिवारिके विशुद्धबुद्धिकारिके। सुरार्चिताङ्घ्रिपङ्कजे प्रचण्डविक्रमेऽक्षरे विशालपद्मलोचने नमोऽस्तु० ॥ ४ ॥ हतस्त्वया स दैत्यधूम्रलोचनो यदा रणे तदा प्रसूनवृष्टयस्त्रिविष्टपे सुरैः कृताः। निरीक्ष्य तत्र ते प्रभामलज्जत प्रभाकरस्त्वये दयाकरे ध्रुवे नमोऽस्तु० ॥ ५ ॥ ननाद केसरी यदा चचाल मेदिनी तदा जगाम दैत्यनायकः स्वसेनया द्रुतं भिया। सकोपकम्पदच्छदे सचण्डमुण्डघातिके मृगेन्द्रनादनादिते नमोऽस्तु० ॥६॥ कुचन्दनार्चितालके सितो-

ण्णवारणाधरे सवर्करानने वरे निशुम्भशुम्भमर्दिके । प्रसीद चण्डिके अजे समस्त-दोपघातिके शुभामतिप्रदेऽचले नमोऽस्तु० ॥ ७ ॥ त्वमेव विश्वधारिणी त्वमेव विश्वकारिणी त्वमेव सर्वहारिणी न गम्यसेऽजितात्मभिः । दिवौकसां हिते रता करोपि दैत्यनाशनं शताक्षि रक्तदन्तिके नमोऽस्तु० ॥ ८ ॥ पठन्ति ये समाहिता इमं स्तवं सदा नरा अनन्यभक्तिसंयुता अहर्मुखेऽनुवासरम् । भवन्ति ते तु पण्डिताः सुपुत्रधान्यसंयुताः कलत्रभूतिसंयुता व्रजन्ति चाऽमृतं सुखम् ॥ ६ ॥

॥ इति श्रीमद्रामदासपूज्यपादशिष्यश्रीमद्धंसदासशिष्येणामर-दासाख्यकविना विरचितं भगवत्यष्टकं समाप्तम् ॥

---

## अथ सङ्कटानामाष्टकम्

ॐ नारद उवाच । जैगीषव्य मुनिश्रेष्ठ सर्वज्ञ सुखदायक ! । आख्यातानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः ॥ १ ॥ न तृप्तिमधिगच्छामि तव वागमृतेन च । वदस्वैकं महाभाग सङ्कटाख्यानमुत्तमम् ॥ २ ॥ इति तस्य वचः श्रुत्वा जैगीषव्योऽब्रवीत्ततः । सङ्कष्टनाशनं स्तोत्रं शृणु देवर्षिसत्तम ! ॥ ३ ॥ द्वापरे तु पुरा वृत्ते भ्रष्टराज्यो युधिष्ठिरः । भ्रातृभिः सहितो राज्यनिर्वेदं परमं गतः ॥ ४ ॥ तदानीं तु ततः काशीं पुरीं यातो महामुनिः । मार्कण्डेय इति ख्यातः सह शिष्यैर्महायशाः ॥ ५ ॥ तं दृष्ट्वा स समुत्थाय प्रणिपत्य सुपूजितः । किमर्थं म्लानवदन एतत्त्वं मां निवेदय ॥ ६ ॥ युधिष्ठिर उवाच । सङ्कष्टं मे महत्प्राप्तमेतादृग्वदनं ततः । एतन्निवारणोपायं किञ्चिद्ब्रूहि मुने मम ॥७॥ मार्कण्डेय उवाच । आनन्दकानने देवी सङ्कटा नाम विश्रुता । वीरेश्वरोत्तरे भागे पूर्वं चन्द्रेश्वरस्य च ॥ ८ ॥ शृणु नामाष्टकं तस्याः सर्वसिद्धिकरं नृणाम् । सङ्कटा प्रथमं नाम द्वितीयं विजया तथा ॥ ६ ॥ तृतीयं कामदा प्रोक्तं चतुर्थं दुःखहारिणी । सर्वाणी पञ्चमं नाम षष्ठं कात्यायनी

तथा ॥१०॥ सप्तमं भीमनयना सर्वरोगहराऽष्टमम् । नामाष्टकमिदं पुण्यं त्रिसन्ध्यं श्रद्धयान्वितः ॥११॥ यः पठेत्पाठयेद्वाऽपि नरो मुच्येत सङ्कटात् । इत्युक्त्वा तु द्विजश्रेष्ठमृषिर्वाराणसीं ययौ ॥ १२ ॥ इति तस्य वचः श्रुत्वा नारदो हर्षनिर्भरः । ततः सम्पूजितां देवीं वीरेश्वरसमन्विताम् ॥१३॥ भुजैस्तु दशभिर्युक्तां लोचनत्रयभूषिताम् । मालाकमण्डलुयुतां पद्मशङ्खगदायुताम् ॥१४॥ त्रिशूलडमरुधरां खड्गचर्मविभूषिताम् । वरदाभयहस्तां तां प्रणम्य विधिनन्दनः ॥१५॥ वारत्रयं गृहीत्वा तु ततो विष्णुपुरं ययौ । एतत्स्तोत्रस्य पठनं पुत्रपौत्रविवर्धनम् ॥१७॥ सङ्कष्टनाशनं चैव त्रिषु लोकेषु विश्रुतम् । गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ॥१८॥

॥ इति श्रीपद्मपुराणे सङ्कटानामाष्टकं सम्पूर्णम् ॥

---

## अथ लक्ष्मीलहरिः

समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचामपाङ्गानां भृङ्गैरमृतलहरीश्रेणिमसृणैः । ह्रिया हीनं दीनं भृशमुदरलीनं करुणया हरिश्यामा सा मामवतु जडसामाजिकमपि ॥ १ ॥ समुन्मीलत्स्वन्तःकरणकरुणोद्गारचतुरः करिप्राणत्राणप्रणयिनि दृगन्तस्तव मयि । समासाद्योन्माद्यद्द्विपनियुतगण्डस्थलगलन्मदक्लिन्नद्वारो भवति सुखसारो नरपतिः ॥ २ ॥ उरस्यस्य भ्रश्यत्कबरभरनिर्यत्सुमनसः पतन्ति स्वर्बालाः स्मरशरपराधीनमनसः । सुराश्चं गायन्ति स्फुरितमनुगङ्गाधरमुखास्तवाऽयं दृक्पातो यदुपरि कृपातो विलसति ॥ ३ ॥ समीपे सङ्गीतस्वरमधुरभङ्गी मृगदृशां विदूरे दानान्धद्विरदकलभोद्दामनिनदः । बहिर्द्वारे तेषां भवति हयहेषाकलकलो दृगेषा ते येषामुपरि कमले देवि ! सदया ॥ ४ ॥ अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः । उदञ्चत्पीयूषाम्बुधिलहरिलीलामनुहरन्नपाङ्गस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥ ५ ॥ नमन्मौलिश्रेणित्रिपुरपरिपन्थि

लसत्कपर्दव्यावृत्तिस्फुरितफणिफूत्कारचकितः। लसत्फुल्लाम्भोजम्रदिमहरणः कोऽपि चरणश्चिरश्चेतश्चारी मम भवतु वारीशदुहितुः॥ ६॥ प्रवालानां दीक्षा गुरुरपि च लाक्षारुणरुचां नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः। नृणामन्तर्ध्वान्तं निबिडमपहतुं तव किल प्रभातश्रीरेषा चरणरुचिवेषा विजयते॥ ७॥ प्रभातप्रोन्मीलत्कमलवनसंचारसमये शिखाः किञ्जल्कानां विदधति रुजं यत्र मृदुलाः। तदेतन्मातस्ते चरणमरुणश्लाघ्यकरुणं कठोरा मद्वाणी कथमियमिदानीं प्रविशतु॥ ८॥ स्मितज्योत्स्नामज्जद्द्विजमणिमयूखामृतभरैर्निषिञ्चन्तीं विश्वं तव विमलमूर्तिं स्मरति यः। अमन्दं स्पन्दन्ते वदनकमलादस्य कृतिनो विविक्तौ वैकल्पाः सततमविकल्पा नवगिरः॥ ९॥ शरौ मायाबीजौ हिमकरकलाक्रान्तशिरसौ विधायोर्ध्वं बिन्दुं स्फुरितमिति बीजं जलधिजे!। जपेद्यः स्वच्छन्दं स हि पुनरमन्दं गजघटामदभ्राम्यद्भृङ्गैर्मुखरयति वेश्मानि विदुषाम्॥१०॥ स्मरो नामं नामं त्रिजगदभिरामं तव पदं प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु। यया पातं पातं पदकमलयोः पर्वतचरो हरो हा रोषार्द्रामनुनयति शैलेन्द्रतनयाम्॥११॥ हरन्तो निःशङ्कं हिमकरकलानां रुचिरतां किरन्तः स्वच्छन्दं किरणमयपीयूषनिकरम्। विलुम्पन्तु प्रौढा हरिहृदयहाराः प्रियतमा ममान्तःसन्तापं तव चरणशोणाम्बुजनखाः॥१२॥ विपाम्माणिक्यानां विगलितनिमेषं निमिषतामनन्दं सौन्दर्यं तव चरणयोरम्बुधिसुते!। पदालङ्काराणां जयति कलनिक्वाणनपटुरुदञ्चन्नुद्दामः स्तुतिवचनलीलाकलकलः॥१३॥ मणिज्योत्स्नाजालैर्निजतनुरुचां मांसलतया जटालं ते जङ्घायुगलमघभङ्गाय भवतु। भ्रमन्ती यन्मध्ये दरदलितशोणाम्बुजरुचां दृशां माला नीराजनमिव विधत्ते मुररिपोः॥१४॥ हरद्दर्वं सर्वं करिपतिकराणां मृदुतया भृशं भाभिर्दम्भं कनकमयरम्भावनिरुहाम्। लसज्जानुज्योत्स्नातरणिपरिणद्धं जलधिजे तवोरुद्वन्द्वं नः श्लथयतु भवोरुज्वरभयम्॥ १५॥ कलक्वाणां काञ्चीं मणिगणजटालामधिवहन्वसानः कौसुम्भं वसनमसनं कौस्तुभरुचाम्। मुनिव्रातैः प्रातः शुचिवचनजातैरतिनुतं नितम्बस्ते बिम्बं हसति नवमम्बाम्बरमणेः॥१६॥ जगन्मिथ्याभूतं मम निगदतां वेद-

वचसामभिप्रायो नाद्यावधि हृदयमध्याविशदिदम्। इदानीं विश्वेषां जनकमुदरं ते विमृशतो विसन्देहं चेतोऽजनि गरुडकेतोः प्रियतमे! ।१७। अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहैर्निरस्ता विस्तारं क्वचिदकलयन्ती तनुमपि। असत्ख्यातिख्याख्यादिकचतुरिमाख्यानमहिमा वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः ॥१८॥ निदानं शृङ्गारप्रकरमकरन्दस्य कमले महानेवालम्बो हरिनयनरोलम्बवरयोः। निधानं शोभानां निधनमतुलापस्य जगतो जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥१९॥ गभीरागुद्वेला प्रथमरसकल्लोलमिलिता विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक्। पदं यावन्न्यस्यत्यहह विनिमग्नैव सहसा नहि क्षेमं सूते गुरुमहिमभूतेष्वविनयः ।२०। कुचौ ते दुग्धाम्भोनिधिकुलशिखामण्डनमणे! हरेते सौभाग्यं यदि सुरगिरेश्चित्रमिह किम्। त्रिलोकीलावण्याहरणनवलीलानिपुणयोर्ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः ॥२१॥ हरक्रोधग्रस्यन्मदननवदुर्गद्वयतुला दधत्कोकद्वन्द्वद्युतिदमनदीक्षाधिगुरुताम्। नवैनद्वक्षोजद्वितयमरविन्दाक्षमहिले। मम स्वान्तध्वान्तं किमपि च नितान्तं गमयतु ॥ २२ ॥ अनेकब्रह्माण्डस्थितिनियमलीलाविलसिते दयापीयूषाम्भोनिधिसहजसख्यास्पदभवने।। विधोश्चित्तायामे हृदयकमले ते तु कमले मनाङ्मश्चित्तारस्मृतिरपि च कोणे निवसतु ॥२३॥ मृणालीनां लीलाः सहजलवणिम्ना लघयतां चतुर्णां सौभाग्यं तव जननि। दोष्णां वदतु कः। लुठन्ति स्वच्छन्दं मरकतशिलामांसलरुचः श्रुतीनां स्पर्धां ये दधत इव कण्ठे मधुरिपोः ॥२४॥ अलभ्यं सौरभ्यं कविकुलतमस्याकुचिरता तथापि त्वद्धस्ते निवसदरविन्दं विकसितम्। कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ गुणोत्कर्षाधानं प्रथितमुपमानं समजनि ॥२५॥ अनल्पं जल्पन्तु प्रतिहतधियः पल्लवतुला स्मृङ्गामज्ञाना क इव कमले मन्थरयतु। जयन्तु श्रीभिक्षावितरणवशीभूतजगतां कराणां सौभाग्यं तव तुलयितुं तुङ्गरमनाः ॥२६॥ समाहारः श्रीणां विरचितविहारो हरिदृशां परीहारो भक्तप्रभवभवसन्तापसरणेः। प्रहारः सर्वासामपि च विपदां विष्णुदयिते! समोद्धारोपायं तव सपदि हारो विमृशतु ॥ २७ ॥ अलङ्कुर्वाणानां मणिगणघृणीनां लवणिमा यदीयाभिर्भाभिर्भजति महिमानं लघुरपि।

सुपर्वश्रेणीनां जनितपरसौभाग्यविभवास्तवाङ्गुल्यस्ता मे ददतु हरिवामेऽभिलषितम् ॥ २८ ॥ तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं तव ग्रीवालक्ष्मीलवपरिचयादाप्त-विभवम् । हरिः कम्बुं चुम्बत्यथ वहति पाणौ किमधिकं वदामस्तत्राऽयं प्रणयवश-तोऽस्यै स्पृहयति ॥२९॥ अभेदप्रत्यूहः सकलहरिदुल्लासनविधिर्विलीनो लोकानां स हि नयनतापोऽपि कमले । तवास्मिन्पीयूषं किरति! वदने रम्यवदने कुतो हेतोश्चेतो विधुरयमुदेति स्म जलधेः ॥ ३० ॥ मुखाम्भोजे मन्दस्मितमधुरकान्त्या विकसतां द्विजानां ते हीरावलिविहितनीराजनरुचाम् । इयं ज्योत्स्ना काऽपि स्रवदमृतसन्दो-हसरसा ममोद्यद्दारिद्र्यज्वरतरुणतापं तिरयतु ॥३१॥ कुलैः कस्तूरीणां भृशमनिश-माशास्यमपि च प्रभातप्रोन्मीलन्नलिननिवहैरश्रुतचरम् । वहन्तः सौरभ्यं मृदुगति-विलासा मम शिवं तव श्वासा नासापुटविहितवासा विदधताम् ॥३२॥ कपोले ते दोलायितललितलोलालकवृते विमुक्ताद्धम्मिल्लादभिलसति मुक्तावलिरियम् । स्वकी-यानां वन्दीकृतमसहमानैरिव बलान्निबध्योर्ध्वं कृष्टा तिमिरनिकुरम्बैर्विधुकला ॥३३॥ प्रसादो यस्याऽयं नमदमितगीर्वाणमुकुटप्रसर्पज्ज्योत्स्नाभिश्चरणतलपीठार्चितविधिः । दृगम्भोजं तत्ते गतिहसितमत्तेभगमने वने लीनैर्दीनैः कथय कथमीयादिह तुलाम् ॥३४॥ दुरापा दुर्वृत्तैर्दुरितदमने दारुणभरा दयार्द्रा दीनानामुपरि दलदिन्दीवर-निभा । दहन्ती दारिद्र्यद्रुमकुलमुदारद्रविणदा त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥३५॥ तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी सदैव श्रीनारायणगुणगणौघप्रण-यिनी । रवैर्दीनां लीनामनिशमवधानातिशयिनीं ममाप्येतां वाचं जलधितनये गोचरयताम् ॥३६॥ प्रभाजालैः प्राभातिकदिनकराभापनयनं तवेदं खेदं मे विघट-यतु ताटङ्कयुगलम् । महिम्ना यस्याऽयं प्रलयसमयेऽपि क्रतुभुजां जगत्पायं पायं स्वपिति निरपायं तव पतिः ॥ ३७ ॥ निवासो मुक्तानां निबिडतरनीलाम्बुदनिभस्तवाऽयं धम्मिल्लो विमलयतु मल्लोचनयुगम् । भृशं यस्मिन्कालागुरुबहुलसौरभ्यनिवहैः पतन्ति श्रीभिक्षार्थिन इव मदान्धा मधुलिहः ॥ ३८ ॥ विलग्नौ ते पार्श्वद्वयपरिसरे मत्तकिरणौ करोन्नीतैरच्छन्मणिकलशमुग्धास्यगलितैः । निषिञ्चन्तौ मुक्तामणिगण-

चयैस्त्वा जलकणैर्नमस्यामो दामोदरगृहिणि ! दारिद्र्यदलिता ॥३९॥ अये मातर्लक्ष्मि ! त्वदरुणपदाम्भोजनिकटे लुठन्तं बालं मामविरलगलद्बाष्पजटिलम् । सुधासेकस्निग्धैरतिमसृणमुग्धैः करतलैः स्पृशन्ती मा रोदीरिति वद ममाश्वासयसि कदा ॥ ४० ॥ रमे ! पद्मे ! लक्ष्मि ! प्रणतजनकल्पद्रुमलते सुधाम्भोधेः पुत्रि त्रिदशनिकरोपास्तचरणे । परे नित्यं मातर्गुणमयि परब्रह्ममहिले जगन्नाथस्याऽऽकर्णय मृदुलवर्णावलिमिमाम् ॥४१॥

॥ इति पण्डितराज श्रीजगन्नाथविरचिता लक्ष्मीलहरिः समाप्ता ॥

---

## अथ अम्बाष्टकम्

चेटीभवन्निखिलखेटीकदम्बतरुवाटीषु नाकिपटलीकोटीरचारुतरकोटीमणीकिरणकोटीकरम्बितपदा । पाटीरगन्धकुचशाटी कवित्वपरिपाटीमगाधिपसुता घोटीकुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ॥ १ ॥ कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधा कोलाहलक्षपितकालामरी कुशलकीलालपोषणनभाः । स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥ २ ॥ यत्राऽऽशयो लगति तत्रागजा वसतु कुत्राऽपि निस्तुलशुका सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा । छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमवधूः कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ॥ ३ ॥ द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा । नीपालया सुरभिधूपालका दुरितकूपादुदञ्चयतु मां रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ॥ ४ ॥ यालीभिरात्मतनुताली सकृत्प्रियकपालीषु खेलति भयव्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा । बालीभृति श्रवसि तालीदलं वहति यालीकशोभितिलका सालीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥ ५ ॥ न्यङ्का करे वपुषि कङ्कादिरक्तपुषि

कङ्कादिपक्षिविषये त्वं कामनामयसि किं कारणं हृदयपङ्कारिमेहि गिरिजाम्। शङ्काशिलानिशितटङ्कायमानपदसंकाशमानसुमनोभङ्कारिमानततिमङ्कानुपेतशशिसङ्काशिवक्त्रकमलाम् ॥ ६ ॥ कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा शम्बाहुलेयशशिबिम्बाभिराममुखसम्बाधितस्तनभरा। अम्बा कुरङ्गमदजम्बालरोचिरिह लम्बालका दिशतु मे बिम्बाधरा विनतशम्बायुधादिनिकुरम्बा कदम्बविपिने ॥ ७ ॥ इन्धानकीरमणिबन्धा भवे हृदयबन्धावतीव रसिका सन्धावती भुवनसन्धारणेऽप्यमृतसिन्धावुदारनिलया। गन्धानुभानमुहुरन्धालिवीतकचबन्धा समर्पयतु मे शन्धाम भानुमपि सन्धानमाशु पदसन्धानमप्यगसुता ॥ ८ ॥

॥ इति श्रीमच्छंकराचार्यविरचितमम्बाष्टकं समाप्तम् ॥

---

# अथ लघुस्तोत्रम्

आधारे तरुणार्कबिम्बरुचिरं सोमप्रभं वाग्भवं बीजं मन्मथमिन्द्रगोपकनिभं हृत्पङ्कजे संस्थितम्। रन्ध्रे ब्रह्मपदे च शाक्तमपरं चन्द्रप्रभाभासुरं ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सौख्यं पदम् ॥ १ ॥

ॐ अस्य श्रीलघुस्तवस्तोत्रमन्त्रस्य वृद्धसारस्वत ऋषिः। त्रिपुरभैरवी देवता। शार्दूलविक्रीडितं छन्दः। मम सर्वकामफलप्राप्त्यर्थे जपे विनियोगः।

ॐ ऐन्द्रस्येव शरासनस्य दधतीं मध्ये ललाटप्रभां शौक्लीं कान्तिममुष्यगोरिव शिरस्याऽऽतन्वती सर्वतः। एषाऽसौ त्रिपुरा हृदिद्युतिरिवोष्मांशोः सदाहस्थिता छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥ या मात्रा त्रिपुपीलतानतुलसत्तन्तुस्थिति स्पर्धिनी वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्। शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २ ॥ दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं येना-

कूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम्। तस्याऽपि ध्रुवमेव देवि तरसा जाते तवानुग्रहे वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥ ३ ॥ यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि। आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः प्रारम्भे प्रणवास्पदं प्रणयितुं नीत्वोच्चरन्ति स्फुटम् ॥ ४ ॥ यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावैर्बुधैस्तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम्। अस्त्वौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये गौःशब्दो गिरि वर्तते सुनियतं योगं विना सिद्धिदः ॥ ५ ॥ एकैकं तव देवि। जन्म ह्यनघं सव्यञ्जनाव्यञ्जनं कूटस्थं यदि वा पृथक् क्रमगतं यद्वा स्थितं व्युत्क्रमात्। यं यं काममपेक्ष्य येन विधिना केनाऽपि वा चिन्तितं जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम् ॥ ६ ॥ वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे भक्तेभ्यो वरदानपेशलकरां कर्पूरकन्दोज्ज्वलाम्। उज्जृम्भाम्बुजपत्रकान्तिनयनां स्निग्धप्रभालोकिनीं ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥७॥ ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम्। अश्रान्तं विकटं स्फुटाक्षरपदा निर्यान्ति वक्त्राम्बुजात्तेषां भारति। भारतीसुरसरित्कल्लोललोलोर्मयः ॥ ८ ॥ ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमामुर्वीं चाऽपि विलीनयावकरसप्रस्तारमग्नामिव। पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वरक्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति ध्रुवम् ॥ ९ ॥ चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम्। तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं माद्यत्कुञ्जरकर्णताल-तरलाः स्थैर्यं भजन्ति श्रियः ॥१०॥ आर्भट्याशशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम्। त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसञ्चिन्तये ॥ ११ ॥ जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः। यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवद्देवि। त्वच्चरणाम्बुजप्रण-

तितः सोऽयं प्रसादोदयः ॥१२॥ चण्डि! त्वच्चरणाम्बुजार्चनकृते विल्वीदलोल्लुण्ठनात् त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः। ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्सवत्साङ्कितैर्जायन्ते पृथिवीभुजाः कथमिवाम्भोजप्रभैः पाणिभिः ॥१३॥ विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैस्त्वां देवि! त्रिपुरे! परां परकलां सन्तर्प्य पूजाविधौ। यां यां प्रार्थयते मनस्थिरधियां येषां त एव ध्रुवं तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥ शब्दानां जननि! त्वमत्र भुवने वाग्वादिनीत्युच्यसे त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम्। लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी सा त्वं काचिदचिन्त्यरूपगहना शक्तिः परा गीयसे ॥१५॥ देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरास्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः। यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥१६॥ लक्ष्मीं राजकुले जयं रणमुखे क्षेमङ्करीमध्वनि क्रव्याद्द्विपसर्पभाजि शवरीं कान्तारदुर्गे गिरौ। भूतप्रेतपिशाचजृम्भकभयं स्मृत्वा महाभैरवीं व्यामोहे त्रिपुरां तरन्ति विपदस्ताराञ्च तो यत्प्लवे, ॥१७॥ या या (माया) कुण्डलिनी क्रिया मधुमती काली कला मालिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवा(वी!)। शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥१८॥ आ-ई-पल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः। नामानि त्रिपुरे! भवन्ति खलु या नित्यन्तु गुह्यानि ते तेभ्यो भैरवपत्नि! विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥ बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं भारत्या त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्तिः स्फुटम्। एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरैर्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥ २० ॥ सावद्यं निरवद्यमस्तु यदि वा किम्वाऽनया चिन्तया नूनं स्तोत्रमिदं पठिष्यति जनो यस्याऽस्ति भक्तिस्त्वयि। सञ्चिन्त्याऽपि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयाऽपि ध्रुवम् ॥ २१ ॥ आनन्दोद्भवकम्पघूर्ण-

नयनं निद्राट्ट्हासादिकं वेदव्याकरणावगाहकवितातर्कोक्तिमुक्तिप्रदम्। वश्याकर्ष-पुरप्रवेशनगरक्षोभादिसिद्ध्यष्टकं लघ्वाचार्यमिदं करोति सततं सौभाग्यमारोग्यताम् ॥ २२ ॥ गौरि त्र्यम्बकपत्नि! पार्वति सति त्रैलोक्यमाने शिवे शर्वाणि त्रिपुरे भवानि वरदे रुद्राणि कात्यायनि। भीमे भैरवि चण्डि सर्ववरदे कालि क्षये शूलिनि त्वत्पादप्रणतं ह्यनन्यमनसा पर्याकुलं पाहि माम् ॥ २३ ॥ यदि भवति जडात्मा त्रैपुरं मन्त्रराजं स हि भवति कवीन्द्रः सर्ववादीन्द्रजेता। इदमपि कविभानुर्मत्त-मातङ्गगण्डाच्च्यवति मदजनाना पिच्छलद्वारदेशे॥२४॥ आ-ई-सवह्निरजनीवरबिन्दु-नादमेकाक्षरं पदमिदं कमुका वदन्ति। मन्त्रं च येन भुवनत्रयकाकितस्य सृष्टि-स्थितिप्रलयहेतुरचिन्त्यरूपम् ॥२५॥

॥ इति श्रीलघ्वाचार्यविरचितं श्रीलघुस्तवस्तोत्रं सम्पूर्णम् ॥

---

# अथ इन्द्राक्षीस्तोत्रम्

ॐ अस्य श्रीइन्द्राक्षीस्तोत्रमन्त्रस्य सहस्राक्ष ऋषिः। इन्द्राक्षी देवता। अनुष्टु-प्छन्दः। महालक्ष्मी बीजम्। भुवनेश्वरीति शक्तिः। भवानीति कीलकम्। ॐ श्रीं ह्रीं क्लीं इति बीजानि। मम सर्वाभीष्टसिद्ध्यर्थे श्रीमदिन्द्राक्षीस्तोत्रजपे विनियोगः।

ॐ इन्द्राक्षी इत्यङ्गुष्ठाभ्यां नमः। ॐ महालक्ष्मीरिति तर्जनीभ्यां नमः। ॐ माहेश्वरीति मध्यमाभ्यां नमः। ॐ अम्बुजाक्षीत्यनामिकाभ्यां नमः। ॐ कात्या-यनीति कनिष्ठिकाभ्यां नमः। ॐ कौमारीति करतलकरपृष्ठाभ्यां नमः। ॐ इन्द्रा-क्षीति हृदयाय नमः। ॐ महालक्ष्मीरिति शिरसे स्वाहा। ॐ माहेश्वरीति शिखायै वषट्। ॐ अम्बुजाक्षीति कवचाय हुम्। ॐ कात्यायनीति नेत्रत्रयाय वौषट्। ॐ कौमारीत्यस्त्राय फट्। भूर्भुवस्वरोम् इति दिग्बन्धनम्।

पूर्वस्यां पातु मां ब्राह्मी चाऽऽग्नेय्यां तु महेश्वरी। कौमारी पातु याम्ये वै नैर्ऋत्यां

पातु भैरवी॥ १ ॥ पश्चिमे पातु वाराही वायव्ये नारसिंहिका। कालरात्रिरुदीच्यां वा ऐशान्यां सर्वशक्तिधृक् ॥ २ ॥ ऊर्ध्वं मे भैरवी पातु चाधस्थं विन्ध्यवासिनी। यद्यद्विपममस्थानं तत्तद्रक्षतु चेश्वरी ॥ ३ ॥ अथ ध्यानम् ॥ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम्। वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ॥ १ ॥ इन्द्राक्षीं युवतीं देवीं नानालङ्कारभूषिताम्। प्रसन्नवदनाम्भोजामप्सरोगणसेविताम् ॥ २ ॥ द्विभुजां सौम्यवदनां पाशाङ्कुशधरां पराम्। त्रैलोक्यमोहिनीं देवीमिन्द्राक्षीनामकीर्तिताम् ॥ ३ ॥ अथ मन्त्रः ॥ ॐ ऐं ह्रीं श्रीं क्लीं क्लूं इन्द्राक्ष्यै नमः। इन्द्र उवाच। इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता। गौरी शाकम्भरी देवी दुर्गा नाम्नीति विश्रुता ॥ ४ ॥ कात्यायनी महादेवी चन्द्रघण्टा महातपा। सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥ ५ ॥ नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला। अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी ॥ ६ ॥ मेघश्यामा सहस्राक्षी मुक्तकेशी जलोदरी। महादेवी मुक्तकेशी घोररूपा महाबला ॥ ७ ॥ अजिता भद्रदा नन्दा रोगहन्त्री शिवप्रिया। शिवदूती कराली च प्रत्यक्षा परमेश्वरी ॥ ८ ॥ सदा सम्मोहिनी देवी सुन्दरी भुवनेश्वरी। इन्द्राक्षी इन्द्ररूपा च इन्द्रशक्तिः परायणा ॥ ९ ॥ महिषासुरसंहर्त्री चामुण्डा गर्भदेवता। वाराही नारसिंही च भीमा भैरवनादिनी ॥ १० ॥ श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती। अनन्ता विजया पूर्णा मानस्तोकाऽपराजिता ॥ ११ ॥ भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा। एतैर्नामशतैर्दिव्यैः स्तुता शक्रेण धीमता ॥१२॥ आयुरारोग्यमैश्वर्यं वित्तं ज्ञानं यशो बलम्। नाभिमात्रजले स्थित्वा सहस्रपरिसंख्यया ॥१३॥ जपेत्स्तोत्रमिमं मन्त्रं वाचां सिद्धिर्भवेत्ततः। अनेन विधिना भक्त्या मन्त्रसिद्धिश्च जायते ॥१४॥ सन्तुष्टा च भवेद्देवी प्रत्यक्षा सम्प्रजायते। शतमावर्तयेद्यस्तु मुच्यते नाऽत्र संशयः ॥ १५ ॥ आवर्तनसहस्रेण लभ्यते वाञ्छितं फलम्। सायं शतं पठेन्नित्यं षण्मासात्सिद्धिरुच्यते ॥१६॥ चोरव्याधिभयस्थाने मनसा ह्यनुचिन्तयन्। सम्वत्सरमुपाश्रित्य सर्वकामार्थसिद्धये ॥ १७ ॥ राजानं वश्यमाप्नोति षण्मासान्नाऽत्र संशयः ॥१८॥ इति श्रीन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

# अथ श्रीभवानीभुजङ्गस्तोत्रम्

षडाधारपङ्केरुहान्तर्विराजत्सुषुम्नान्तरालेऽतितेजोल्लसन्तीम्। सुधामण्डलं द्रावयन्तीं पिबन्तीं सुधामूर्तिमीडेऽहमानन्दरूपाम्॥ १॥ ज्वलत्कोटिबालार्कभासारुणाङ्गीं सुलावण्यशृङ्गारशोभाभिरामाम्। महापद्मकिञ्जल्कमध्ये विराजत्त्रिकोणोल्लसन्तीं भजे श्रीभवानीम्॥ २॥ क्वणत्किङ्किणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादारविन्दाम्। अजेशाच्युताद्यैः सुरैः सेव्यमानां महादेवि! मन्मूर्ध्नि ते भावयामि॥ ३॥ सुशोणाम्बराबद्धनीवीविराजन्महारत्नकाञ्चीकलापं नितम्बम्। स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वली रम्यते (?) रोमराजीं भजेऽहम्॥ ४॥ लसद्वृत्तमुत्तुङ्गमाणिक्यकुम्भोपमश्रीस्तनद्वन्द्वमम्बाम्बुजाक्षीम्। भजे पूर्णदुग्धाभिरामं तवेदं महाहारदीप्तं सदा प्रस्नुतास्यम्॥ ५॥ शिरीषप्रसूनोल्लसद्बाहुदण्डैर्ज्वलद्बाणकोदण्डपाशाङ्कुशैश्च। चलत्कङ्कणोदारकेयूरभूषाज्वलद्भिः स्फुरन्तीं भजे श्रीभवानीम्॥ ६॥ शरत्पूर्णचन्द्रप्रभापूर्णबिम्बाधरस्मेरवक्त्रारविन्दश्रियं ते। सुरत्नावलीहारताटङ्कशोभां भजे सुप्रसन्नामहं श्रीभवानीम्॥७॥ सुनासापुटं पद्मपत्रायताक्षं यजन्तः श्रियं दानदक्षं कटाक्षम्। ललाटोल्लसद्गन्धकस्तूरिभूषोज्ज्वलद्भिः स्फुरन्तीं भजे श्री०॥ ८॥ चलत्कुण्डलान्ते भ्रमद्भृङ्गवृन्दां घनस्निग्धधम्मिल्लभूषोज्ज्वलन्तीम्। स्फुरन्मौलिमाणिक्यमध्येन्दुरेखाविलासोल्लसद्दिव्यमूर्धानमीडे॥ ९॥ स्फुरत्त्वाम्ब बिम्बस्य मे हृत्सरोजे सदा वाङ्मयं सर्वतेजोमयञ्च। इति श्रीभवानीस्वरूपं तदेवं प्रपञ्चात्परं चाऽतिसूक्ष्मं प्रसन्नम्॥१०॥ गणेशाणिमाद्याखिलैः शक्तिवृन्दैः स्फुरच्छ्रीमहाचक्रराजोल्लसन्तीम्। परां राजराजेश्वरीं त्वा भवानीं शिवाङ्कोपरिस्थां शिवां भावयेऽहम्॥११॥ त्वमर्कस्त्वमग्निस्त्वमिन्दुस्त्वमापस्त्वमाकाशभूर्वायवस्त्वं चिदात्मा। त्वदन्यो न कश्चित्प्रकाशोऽस्ति सर्वं सदानन्दसंवित्स्वरूपं तवेदम्॥१२॥ गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवाऽसि माता पिताऽसि त्वमेव। त्वमेवाऽसि विद्या त्वमेवाऽसि बुद्धिर्गतिर्मे

मतिर्देवि सर्वं त्वमेव ॥ १३ ॥ श्रुतीनामगम्यं सुवेदागमाद्यैर्महिम्नो न जानाति पारं तवेदम्। स्तुतिं कर्तुमिच्छामि ते त्वं भवानी क्षमस्वेदमम्ब प्रमुग्धः किलाऽहम् ॥१४॥ ारण्ये वरण्ये सुकारुण्यपूर्णे हिरण्योदराद्यैरगम्येऽतिपुण्ये। भवारण्यभीतं च मां ाहि भद्रे नमस्ते नमस्ते नमस्ते भवानि ॥१५॥ इमामन्वहं श्रीभवानीभुजङ्गस्तुतिं यः पठेच्छ्रोतुमिच्छेत तस्मै। स्वकीयं पदं शाश्वतं चैव सारं श्रियं चाष्टसिद्धीश्च देवी ददाति ॥१६॥

॥ इति श्रीमत्परहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं श्रीभवानीभुजङ्गस्तोत्रं सम्पूर्णम् ॥

---

## अथ दुर्गापदुद्धारस्तोत्रम्

नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे। नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे। नमस्ते नमस्ते सदानन्दरूपे नम० ॥२॥ अनाथस्य दीनस्य तृष्णातुरस्य भयार्त्तस्य भीतस्य बद्धस्य जन्तोः। त्वमेका गतिर्देवि! निस्तारकर्त्री नम० ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे। त्वमेका गतिर्देवि निस्तारनौका नम० ॥ ४ ॥ अपारे महादुस्तरेऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजाम्। त्वमेका गतिर्देवि! निस्तारहेतुर्नम० ॥ ५ ॥ नमश्चण्डिके चण्डदुर्दण्डलीलासमुत्खण्डिता खण्डिताशेषशत्रो। त्वमेका गतिर्देवि! निस्तारबीजं नम० ॥ ६ ॥ त्वमेवाघभावाधृतासत्यवादीर्नजाताजिताक्रोधनात्क्रोधनिष्ठा। इडा पिङ्गला त्वं सुषुम्ना च नाडी नम० ॥ ७ ॥ नमो देवि! दुर्गे! शिवे! भीमनादे सरस्वत्यरुन्धत्यमोघस्वरूपे!। विभूतिः शची कालरात्रिः सती त्वं नम०॥८॥ शरणमसि सुराणां सिद्धविद्याधराणां मुनिमनुज(दनुज)पशूनां दस्युभिस्त्रासितानाम्। नृप-

निगृह्यमानानां व्याधिभिः पीडितानां त्वमसि शरणमेका देवि ! दुर्गे ! प्रसीद ॥ ९ ॥ इदं स्तोत्रं मया प्रोक्तमापदुद्धारहेतुकम् । त्रिसन्ध्यमेकसन्ध्यं वा पठनाद्घोरसङ्कटात् ॥ १० ॥ मुच्यते नात्र सन्देहो भुवि स्वर्गे रसातले । सर्वं वा श्लोकमेकं वा यः पठेद्भक्तिमान् सदा ॥११॥ स सर्वं दुष्कृतं त्यक्त्वा प्राप्नोति परमं पदम् । पठनादस्य देवेशि ! किं न सिध्यति भूतले ॥१२॥ स्तवराजमिदं देवि ! सङ्क्षेपात्कथितं मया ॥१३॥

॥ इति श्रीसिद्धेश्वरीतन्त्रे उमामहेश्वरसम्वादे श्रीदुर्गापदुद्धारस्तोत्रं समाप्तम् ॥

---

# अथ सरस्वत्यष्टकम्

शतानीक उवाच । महामते महाप्राज्ञ ! सर्वशास्त्रविशारद ! । अक्षीणकर्मबन्धस्तु पुरुषो द्विजसत्तम ! ॥ १ ॥ मरणे यज्जपेज्जाप्यं यं च भावमनुस्मरन् । परं पदमवाप्नोति तन्मे ब्रूहि महामुने ॥ २ ॥ शौनक उवाच । इदमेव महाराज पृष्टवांस्ते पितामहः । भीष्मं धर्मविदां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥ ३ ॥ युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्वशास्त्रविशारद । बृहस्पतिस्तुता देवी । वागीशाय महात्मने । आत्मानं दर्शयामास सूर्यकोटिसमप्रभम् ॥ ४ ॥ सरस्वत्युवाच । वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते । बृहस्पतिरुवाच । यदि मे वरदा देवि ! दिव्यज्ञानं प्रयच्छ नः ॥ ५ ॥ देव्युवाच । हन्त ते निर्मलं ज्ञानं कुमतिध्वंसकारकम् । स्तोत्रेणानेन ये भक्त्या मां स्तुवन्ति मनीषिणः ॥ ६ ॥ बृहस्पतिरुवाच । लभन्ते परमं ज्ञानं यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥ ७ ॥ सरस्वत्युवाच । त्रिसन्ध्यं प्रयतो नित्यं पठेदष्टकमुत्तमम् । तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥ ८ ॥

॥ इति श्रीपद्मपुराणे दिव्यज्ञानप्रदायकं सरस्वत्यष्टकस्तोत्रं समाप्तम् ॥

# अथ श्रेयस्करीस्तोत्रम्

श्रेयस्करि श्रमनिवारिणि सिद्धविद्ये स्वानन्दपूर्णहृदये करुणातनो मे। चित्ते वस प्रियतमेन शिवेन सार्धं माङ्गल्यमातनु सदैव मुदैव मातः ॥ १ ॥ श्रेयस्करि श्रितजनोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे !।शर्मण्यपादयुगले जलजप्रमोदे मित्रे त्रयीप्रसृमरे रमतां मनो मे ॥ २ ॥ श्रेयस्करि प्रणतपामरपारदानज्ञानप्रदान-सरणिश्रितपादपीठे!। श्रेयांसि सन्ति निखिलानि सुमङ्गलानि तत्रैव मे वसतु मान-सराजहंसः ॥ ३ ॥ श्रेयस्करीति तव नाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करी पुरस्तात्। किं किं न सिध्यति सुमङ्गलनाममालां धृत्वा सुखं स्वपिति शेषतनौ रमेशः ॥ ४ ॥ श्रेयस्करीति वरदेति दयापरेति वेदोदरेति विधिशङ्करपूजितेति। वाणीति शम्भुरमणीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम् ॥ ५ ॥ श्रेयस्करि प्रकटमेव तवाऽभिधानं यत्राऽस्ति तत्र रविवत्प्रथमानवीर्यम्। ब्रह्मेन्द्ररुद्रम-रुदादिगृहाणि सौख्यैः पूर्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि! प्रणतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम्। भक्त्या नतोऽस्मि विनतोऽस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते मयि सन्निधत्स्व ॥ ७ ॥ श्रेयस्करी-चरणसेवनतत्परेण कृष्णेन भिक्षुवपुषा रचितं पठेद्यः। तस्य प्रसीदति सुरारिविम-र्दनीयमम्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामति कृतस्तुतौ मुदमुपैति माता न किं यथा विभवदानतो मुदमुपैति पात्रं न किम्। भवानि! तव संस्तुतिं विरचितुं न चाहं क्षमस्तथापि मुदमेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥

॥ इति श्रीमत्परमहंसपरिव्राजाचार्य कृष्णानन्दसरस्वतीविरचितं श्रेयस्करीसुमङ्गलस्तोत्रं समाप्तम् ॥

---

# अथ देवीषट्कम्

अम्ब । शशिबिम्बवदने कम्बुग्रीवे कठोरकुचकुम्भे । अम्बरसमानमध्ये शम्बररिपुवैरिदेवि ! मां पाहि ॥ १ ॥ कुन्दमुकुलाग्रदन्तां कुङ्कुमपङ्केन लिप्तकुचभाराम् । आनीलनीलदेहामम्बामखिलाण्डनायकीं वन्दे ॥ २ ॥ सरिगमपधनिसतान्तां वीणासङ्क्रान्तचारुहस्तां ताम् । शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ३ ॥ अरटतटघटितजूटीताडितताालीकपालताटङ्काम् । वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ४ ॥ वीणारसानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् । करुणापूरितरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ५ ॥ दयमानदीर्घनयना देशिकरूपेण दर्शिताभ्युदयाम् । वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ६ ॥ माणिक्यवीणामुपलालयन्तीं मन्दालसां मञ्जुलवाग्विलासाम् । माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥ ७ ॥

॥ इति श्रीकालिकाया देवीषट्कं समाप्तम् ॥

---

# अथ वंशवृद्धिकरं वंशकवचम्

भगवन्देवदेवेश कृपया त्वं जगत्प्रभो ! । वंशाख्यकवचं ब्रूहि मह्यं शिष्याय तेऽनघ ! । यस्य प्रभावाद्देवेश ! वंशवृद्धिर्हि जायते ॥१॥ सूर्य उवाच ॥ शृणु पुत्र ! प्रवक्ष्यामि वंशाख्यं कवचं शुभम् । सन्तानवृद्धिर्यत्पाठाद्गर्भरक्षा सदा नृणाम् ॥ २ ॥ वन्ध्यापि लभते पुत्रं काकवन्ध्या सुतैर्युता । मृतवत्सा सपुत्रा स्यात्स्रवद्गर्भा स्थिरप्रजा ॥ ३ ॥ अपुष्पा पुष्पिणी यस्य धारणाच्च सुखप्रसूः । कन्याप्रजा पुत्रिणी स्यादेतत्स्तोत्रप्रभावतः ॥ ४ ॥ भूतप्रेतादिजा बाधा या बाधा कुलदोषजा । ग्रहबाधा देवबाधा बाधा शत्रुकृता च या ॥ ५ ॥ भस्मीभवन्ति सर्वास्ताः कवचस्य

प्रभावतः। सर्वे रोगा विनश्यन्ति सर्वे बालग्रहाश्च ये ॥ ६ ॥ पूर्वे रक्षतु वाराही चाग्नेय्यामम्बिका स्वयम। दक्षिणे चण्डिका रक्षेन्नैर्ऋत्यां शववाहिनी ॥७॥ वाराही पश्चिमे रक्षेद्वायव्यां च महेश्वरी। उत्तरे वैष्णवी रक्षेदीशाने सिंहवाहिनी ॥ ८ ॥ ऊर्ध्वं तु शारदा रक्षेदधो रक्षतु पार्वती। शाकम्भरी शिरो रक्षेन्मुखं रक्षतु भैरवी ॥ ९ ॥ कण्ठं रक्षतु चामुण्डा हृदयं रक्षताच्छिवा। ईशानी च भुजौ रक्षेत्कुक्षिं नाभिं च कालिका ॥१०॥ अपर्णा ह्युदरं रक्षेत्कटिं वस्तिं शिवप्रिया। ऊरू रक्षतु कौमारी जया जानुद्वयं तथा ॥११॥ गुल्फौ पादौ सदा रक्षेद्ब्रह्माणी परमेश्वरी। सर्वाङ्गानि सदा रक्षेद्दुर्गा दुर्गार्त्तिनाशिनी ॥१२॥ नमो देव्यै महादेव्यै दुर्गायै सततं नमः। पुत्रसौख्यं देहि देहि गर्भरक्षां कुरुष्व नः ॥ १३ ॥ ॐ ह्रीं ह्रीं ह्रीं श्रीं श्रीं श्रीं ऐं ऐं ऐं महाकाली महालक्ष्मी महासरस्वतीरूपायै नवकोटिमूर्त्यै दुर्गायै नमः। ह्रीं ह्रीं ह्रीं दुर्गार्त्तिनाशिनि सन्तानसौख्यं देहि देहि वन्ध्यत्वं मृतवत्सत्वं च हर हर गर्भरक्षां कुरु कुरु सकलां बाधां कुलजां बाह्यजां कृतामकृतां च नाशय नाशय सर्वगात्राणि रक्ष रक्ष गर्भं पोषय पोषय सर्वोपद्रवं शोषय शोषय स्वाहा। अनेन कवचेनाङ्गं सप्तवाराभिमन्त्रितम्। ऋतुस्नाता जलं पीत्वा भवेद्गर्भवती ध्रुवम् ॥ १४ ॥ गर्भपातभये पीत्वा दृढगर्भा प्रजायते। अनेन कवचेनाऽथ मार्जितायां निशागमे ॥१५॥ सर्वबाधाविनिर्मुक्ता गर्भिणी स्यान्न संशयः। अनेन कवचेनेह ग्रन्थितं रक्तदोरकम् ॥१६॥ कटिदेशे धारयन्ती सुपुत्रसुखभागिनी। असूत पुत्रमिन्द्राणी जयन्तं यत्प्रभावतः ॥१७॥ गुरूपदिष्टं वंशाख्यं कवचं तदिदं सखे!। गुह्याद्गुह्यतरं चेदं न प्रकाश्यं हि सर्वतः। धारणात्पठनादस्य वंशच्छेदो न जायते ॥१८॥ बाला विनश्यन्ति पतन्ति गर्भास्तत्राबलाः कष्टयुताश्च वन्ध्याः। बालग्रहैर्भूतगणैश्च रोगैर्न यत्र धर्माचरणं गृहे स्यात् ॥१९॥

॥ इति श्रीज्ञानभास्करे वंशवृद्धिकरं वंशकवचं सम्पूर्णम् ॥

---

# अथ देवीपदपङ्कजाष्टकम्

मातस्त्वत्पदपङ्कजं कलयतां चेतोऽम्बुजे सन्ततं मानाथाम्बुजसम्भवाद्रितनयाकान्तैः समाराधितम् । वाञ्छापूरणनिर्जितामरमहीरुड्गर्वसर्वस्वकं वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥ १ ॥ मातस्त्वत्पदपङ्कजं मुनिमनःकासारवासादरं मायामोहमहान्धकारमिहिरं मानातिगप्राभवम् । मातङ्गाभिमतिं स्वकीयगमनैर्निर्मूलयत्कौतुकाद्वन्द्वेऽमन्दतपः फलान्यनमनस्तोत्रार्चनाप्रक्रमम् ॥ २ ॥ मातस्त्वत्पदपङ्कजं प्रणमतामानन्दवाराम्निधे । राकाशारदपूर्णचन्द्रनिकरं कामाहिपक्षीश्वरम् । वृन्दं प्राणभृतां स्वनाम वदतामत्यादरात्सत्वरं षड्भाषासरिदीश्वरं प्रविदधत्पाणमातुराच्यं भजे ॥ ३ ॥ कामं कालतले दुरक्षरततिर्देवीमसत्तां न भीमां तत्त्वत्पदपङ्कजोत्थरसजा लुम्पामि ना निश्चितम् । मार्कण्डेयमुनिर्यथा भवपदाम्भोजार्चनाप्राभवात्कालं तद्वदहं चतुर्मुखमुखाम्भोजातसूर्यप्रभे । ॥ ४ ॥ पापानि प्रशमं नयाऽऽशु ममता देहेन्द्रियप्राणगा कामादीनपि वैरिणो दृढतरान्मोक्षाध्वविघ्नप्रदान् । श्लाघां प्रापय सन्ततं शमदमध्यानादिमान्मोदतो मातस्त्वत्पदपङ्कजं हृदि सदा कुर्वे गिरा देवते । ॥ ५ ॥ मातस्त्वत्पदपङ्कजस्य मनसा वाचा क्रियातोऽपि वा ये कुर्वन्ति मुदाऽन्वहं बहुविधैर्दिव्यैः सुमैरर्चनाम् । शीघ्रं ते प्रभवन्ति भूमिपतयो निन्दन्ति च स्वश्रिया जम्भारातिमपि ध्रुवं शतमखीकष्टाप्तनाकश्रियम् ॥ ६ ॥ मातस्त्वत्पदपङ्कजं शिरसि ये पद्माटवीमध्यगश्चन्द्राभं प्रविचिन्तयन्ति पुरुषाः पीयूषवर्ष्यन्वहम् । ते मृत्युं प्रविजित्य रोगरहिताः सम्यग्दृढाङ्गाश्चिरं जीवन्त्येव मृणालकोमलवपुष्मन्तः सुरूपा भुवि ॥ ७ ॥ मातस्त्वत्पदपङ्कजं हृदि मुदा ध्यायन्ति ये मानवाः सच्चिद्रूपमशेषवेदशिरसां तात्पर्यगम्यं मुहुः । अत्यागेऽपि तनोरखण्डपरमानन्दं वहन्तः सदा सर्वं विश्वमिदं विनाशि तरसा पश्यन्ति ते पूरुषाः ॥ ८ ॥

॥ इति श्रीदेवीपदपङ्कजाष्टकं सम्पूर्णम् ॥

# अथ मन्त्रगर्भं श्रीभुवनेश्वरीस्तोत्रम्

कर्णस्वर्णविलोलकुण्डलधरामापीनवक्षोरुहां मुक्ताहारविभूषणां परिलसद्धम्मि-ल्लसन्मल्लिकाम्। लीलालोलितलोचनां शशिमुखीमाबद्धकाञ्चीस्रजं दीव्यन्तीं भुवनेश्वरीमनुदिनं वन्दामहे मातरम्॥ १॥ ऐन्दव्या कलयावतंसितशिरोविस्तारिनादात्मकं तद्रूपं जननि! स्मरामि परमं सन्मात्रमेकं तव। यत्रोदेति पराभिधा भगवती भासां हि तासां पदं पश्यन्ती तनुमध्यमा विहरति स्वैरं च सा वैखरी॥ २॥ आदिक्षान्तिविलासलालसतया तासां तुरीया तु या क्रोडीकृत्य जगत्त्रयं विजयते वेदादिविद्यामयी। तां वाचं मयि सम्प्रसादय सुधाकल्लोलकोलाहलक्रीडाकर्णनवर्णनीयकवितासाम्राज्यसिद्धिप्रदाम्॥ ३॥ कल्हारे कमलासनोऽपि कलया विद्धः कयाचित्किल त्वां ध्यात्वाङ्कुरयाञ्चकार चतुरो वेदांश्च विद्याश्च ताः। तन्मातर्ललिते प्रसीद सरलं सारस्वतं देहि मे यस्यामोदमुदीरयन्ति पुलकैरन्तर्गता देवताः॥ ४॥ मातर्देहभृतामहो धृतिमयी नादैकरेखामयी सा त्वं प्राणमयी हुताशनमयी विन्दुप्रतिष्ठामयी। तेन त्वां भुवनेश्वरीं विजयिनीं ध्यायामि जायां विभोस्त्वत्कारुण्यविकाशिपुण्यमतयः खेलन्तु मे सूक्तयः॥ ५॥ त्वामश्वत्थदलानुकारलघुरामाधारचक्रोदरां संसेवे भुवनेश्वरीमनुदिनं वाग्देवतामेव ताम्। तन्मे शारदकौमुदीपरिचयोदञ्चत्सुधासागरस्वैरोज्जागरवीचिविभ्रमजितो दिव्यन्तु दिव्या गिरः॥ ६॥ लेखप्रस्तुतवेद्यवस्तुसुरभिश्रीपुस्तकोत्तंसितो मातः स्वस्तिकृदस्तु मे तव करो वामोऽभिरामः श्रिया। सद्यो विद्रुमकन्दलीसरलता सन्दोहसान्द्राङ्गुलिर्मुद्राम्बोधमयीं दधत्सदपरोऽप्यास्तामपास्तभ्रमः॥ ७॥ मातः पातकजालमूलदलनक्रीडाकठोरा दृशः कारुण्यामृतकोमलास्तव मयि स्फूर्जन्तु सिद्ध्यर्जिताः। आभिः स्वाभिमतप्रबन्धलहरीसाकूतकौतूहलां चान्तःस्वान्तचतुर्मुखोचितगुणोद्गारां करिष्ये गिरम्॥ ८॥ त्वामाधारचतुर्दलाम्बुजगतां वाग्बीजगर्भे यजे प्रत्यावृत्तिभिरादिभिः कुसुमितां मायालतामुन्नताम्। चूडामूलपवित्रपत्रकमलप्रेङ्खोलखेलत्सुधाकल्लोलासु

कुचक्रचङ्क्रमचमत्कारैकलोकोत्तराम् ॥ ९ ॥ सोऽहं त्वत्करुणाकटाक्षशरणः पश्चात्प्रसञ्चारतः प्रत्याहृत्य मनो वसामि रसनालिङ्गं समाऽऽलिङ्गतु । श्रीसर्वज्ञविभूषणीकृतकलानिस्यन्दमानामृतस्वच्छन्दस्फटिकाद्रिसान्द्रितपयः शोभावती भारती ॥१०॥ मातर्मातृकया विदर्भितमिदं गर्भीकृतानाहतस्वच्छन्दध्वनिपेयमध्वनिरतं चन्द्रार्कनिन्दागिरौ । संसेवे विपरीतरीतिरचनोच्चारादकारावधिस्वाधीनामृतसिन्धुबन्धुरमहो मायामयं ते मह ॥ ११ ॥ तस्मान्नन्दनचारुचन्दनतरुच्छायासु पुष्पासवास्वादनमोदमानमनसामुद्दामधामभ्रुवाम् । वीणासङ्गितरङ्गितस्वरचमत्कारोऽपि सारोज्झितो येन स्यादिह देहि मे तदभितः सञ्चारि सारस्वतम् ॥ १२ ॥ आधारे हृदये शिखापरिसरे सन्धाय मेधामयी मेधाबीजतनूमनूनकरुणापीयूषकल्लोलिनीम् । त्वां मातर्जपतो निरङ्कुशनिजाद्वैतामृतास्वादनप्रज्ञास्फुलिङ्गैः स्फुरन्तु पुलकैरङ्गानि तुङ्गानि मे ॥ १३ ॥ वाणीबीजमिदं जपामि परमं सत्कामराजाभिधं मातः सान्तपनं विसर्गसहितौकारोत्तमं तेन मे । दीर्घान्दोलितमौलिकीलितमणिप्रारब्धनीराजनैर्धीरैः पीतरसा निरन्तरमसौ वाग्जृम्भतामद्भुता ॥१४॥ चूडाचन्द्रकलानिरन्तरगलत्पीयूषबिन्दुश्रिया सन्देहोचितमक्षसूत्रवलयं या बिभ्रती निर्भरम् । अन्तर्मन्त्रमयं स्वमेव जपसि प्रत्यक्षवृत्त्यक्षरं सा त्वं दक्षिणपाणिनाऽम्ब । वितर श्रेयांसि भूयांसि मे ॥१५॥ बद्ध्वा स्वस्तिकमासनं सितकचिच्छेदावदातच्छविश्रेणिश्रीसुभगं भविष्णुसततव्याजृम्भमाणेऽम्बुजे । दीव्यन्तीमधिवामजानु रुचिरन्यस्तेन हस्तेन तां नित्यं पुस्तकधारणप्रणयिनीं सेवे गिरामीश्वरीम् ॥१६॥ तस्मै विश्वपथीनपीनविलसत्त्रिःसीमसारस्वतस्रोतोवीचिविचित्रभङ्गिसुभगा विभ्राजतां भारती । यामाकर्ण्य विघूर्णमानमनसः प्रेङ्खोलितैर्मौलिभिर्मीलद्भिर्नयनाञ्चलैः सुमनसो निन्देयुरिन्दोः कलाम् ॥१७॥ आदौ वाग्भवमिन्दुबिन्दुमधुरं मध्ये च कामात्मकं योगान्ते कपयोस्तृतीयमिति ते बीजत्रयं ध्यायताम् । सार्धं मातृकया विलोमविषमं सन्धाय बन्धच्छिदा वाचान्तर्गतया महेश्वरि । मया मात्राशतं जप्यते ॥१८॥ तत्सारस्वतसार्वभौमपदवी सद्यो मम द्योततां यत्राऽऽज्ञाविहितैर्महाकविशतैः स्फीतां गिरं

चुम्बताम् । चैत्रोन्मीलितकेलिकोकिलकुहूकारावताराञ्चितश्लाघासञ्चितपञ्चमश्रुति-समाहारोऽपि भारोपमः ॥ १९ ॥ वाग्बीजं भुवनेश्वरीं वद वदेत्युच्चार्य वाग्वादिनि ! स्वाहाचर्णविशीर्णपातकभरां ध्यायामि नित्याङ्गिरम् । वीणापुस्तकमक्षसूत्रवलयं व्याजृम्भमम्भोरुहं बिभ्राणामरुणांशुभिः करतलैराविर्भवद्भिभ्रमाम् ॥२०॥ त्वं मातः कृपया तरङ्गयतरां विद्याधिपत्यं मयि ज्योत्स्नासौरभचौरकीर्त्तिकवितासेव्यैकसिंहासनम् । कालाग्न्यादिशिवावसानभवनप्राग्भारकुक्षिम्भरि ! प्रज्ञाम्भः परिपाकपीवर-परानन्दप्रतिष्ठास्पदम् ॥२१॥ लेखाभिस्तुहिनद्युतेरिव कृतं वाग्बीजमुच्चैः स्फुरत्तारा-कारकरालबिन्दुपरितो मायात्रिधावेष्टितम् । पूर्णेन्दोरुदरे तदेतदखिलं पीयूषगौ-राक्षरं स्रोतःसम्भ्रमसम्भृतं स्मरति यो जिह्वाञ्चले निश्चलः ॥ २२ ॥ तस्य त्वत्करु-णाकटाक्षकणिकासङ्क्रान्तिमात्रादपि स्वान्ते शान्तिमुपैति दीर्घजडताजाग्रद्वि-काराग्रणीः । तस्मादाशु जगत्त्रयाद्भुतरसाद्वैतप्रतीतिप्रदं सौरभ्यं परमभ्युदेति वदनाम्भोजे गिराम्विभ्रमैः ॥२३॥ आद्यो मौलिरथापरो मुखमिई नेत्रे च कर्णावुरू नासावंशपुटे श्रुकृ तदनुजौ वर्णौ कपोलद्वयम् । दन्ताश्चोर्ध्वमधस्तथोष्ठयुगलं सन्ध्य-क्षराणि क्रमाज्जिह्वामूलमुदग्रबिन्दुरपि च ग्रीवा विसर्गी स्वरः ॥२४॥ कादिर्दक्षि-णतो भुजस्तदपरो वर्गश्च वामो भुजष्टादिस्तादिरनुक्रमेण चरणौ कुक्षिद्वयं ते पफौ । वंशः पृष्ठभवोऽथ नाभिहृदये बादित्रयं धातवो याद्याः सप्त समीरणश्च सपरः क्षः क्रोध इत्यम्बिके ! ॥२५॥ एवं वर्णमयं वपुस्तव शिवे ! लोकत्रयव्यापकं योऽहंभावनया भजत्यवयवेऽप्यारोपितैरक्षरैः । मूर्तीभूय दिनावसानकमलाकारैः शिरःशायिभिस्तं विद्याः समुपासते करतलैर्दृष्टिप्रसादोत्सुकाः ॥२६॥ ये जानन्ति यजन्ति सन्तत-मभिध्यायन्ति गायन्ति वा तेषामास्यमुपास्यते मृदुपदन्यासैर्विलासैर्गिराम् । किञ्च क्रीडति भूर्भुवः स्वरभितः श्रीचन्दनस्यन्दिनी कीर्त्तिः कार्तिकरात्रिकैरवसमा सौभा-ग्यशोभाकरी ॥२७॥ मायाबीजविदर्भितं पुनरिदं श्रीकूर्मचक्रोदितं दीपाम्नायविदो जपन्ति खलु ये तेषां नरेन्द्राः सदा । सेवन्ते चरणौ किरीटवलभी विश्रान्तरत्नाङ्कुर-ज्योत्स्नामेदुरमेदिनीतलरजोमिश्राङ्गरागश्रियः ॥२८॥ श्रीबीजं सकलाक्षरादिषु पुनः

क्रोधाक्षरान्ते भवेदेवं यो भजतेऽम्ब। ते तनुमिमां तस्याऽग्रतो जाग्रती। लक्ष्मीः सिन्दूरदानगन्धलहरी लोलान्धपुष्पन्धयश्रेणीवन्धुरशृङ्खलानियमिते वापैति नैव क्वचित् ॥२९॥ यस्त्वां विद्रुमपल्लवद्रवमयीं लेखामिवालोहितामात्मानं परितः स्फुरत्त्रिवलयां मायामभिध्यायति। तस्मै निन्दितचन्दनेन्दुकदलीकान्तारहारस्रजो निःश्वासभ्रमवाष्पदाहगहना मूर्च्छन्ति तास्ताः स्त्रियः॥ ३० ॥ मातः श्रीभगमालिनीत्यभिधया दिव्यागमोत्तंसितां त्वामानन्दमयीमनुस्मरति यस्तं नाम वामभ्रुवः। बाहुस्वस्तिकपीडितैः स्तनतटैदैन्याञ्चितैश्चाटुभिर्नीरन्ध्रैः पुलकाङ्कितैर्मुकुलितैर्ध्यायन्ति नेत्राञ्चलैः ॥३१॥ यस्त्वां ध्यायति रागसागरतरत्सिन्दूरनौकान्तरस्वैरोज्जागरपद्मरागनलिनीपुष्पासनाध्यासिनीम्। बालादित्यसपत्नरत्नरचितप्रत्यङ्गभूषारुचिश्रेणीसम्मिलिताङ्गरागवसनास्तस्य स्मरन्त्यङ्गनाः॥ ३२ ॥ कर्पूरं कुमुदाकरं कमलिनीपत्रं कलाकौशलं कूजत्कोकिलकामिनीकुलकुहूकल्लोलकोलाहलम्। शङ्कन्ते प्रलयानलं स्मरमहापस्मारवेगातुराः कम्पन्ते निपतन्ति हन्त। न गिरं मुञ्चन्ति शोचन्ति च ॥३३॥ श्रीमृत्युञ्जयनामधेयभगवच्चैतन्यचन्द्रात्मिके ह्रींकारि प्रथमा तमांसि दलय त्वं हंससञ्जीविनि। जीवं प्राणविजृम्भमाणहृदयग्रन्थिस्थितं मे कुरु त्वां सेवे निजबोधलाभरभसा स्वाहाभुजामीश्वरीम्॥ ३४ ॥ एवं त्वाममृतेश्वरीमनुदिनं राकानिशाकामुकस्यान्तः सन्ततभासमानवपुषं साक्षाद्यजन्ते तु ये। ते मृत्योः कवलीकृतत्रिभुवनाभोगस्य मौलौ पदं दत्त्वा भोगमहोदधौ निरवधि क्रीडन्ति तैस्तैः सुखैः॥ ३५ ॥ जाग्रद्बोधसुधामयूखनिचयैराप्लाव्य सर्वा दिशो यस्याः कापि कला कलङ्करहिता षट्चक्रमाक्रामति। दैन्यध्वान्तविदारणैकचतुरा वाचं परां तन्वती सा नित्या भुवनेश्वरी विहरतां हंसीव मन्मानसे॥ ३६ ॥ त्वं माता पितरौ त्वमेव सुहृदस्त्वं भ्रातरस्त्वं सखा त्वं विद्या त्वमुदारकीर्त्तिचरितं त्वं भाग्यमत्यद्भुतम्। किं भूयः सकलं त्वमीहितमिति ज्ञात्वा कृपाकोमले श्रीविश्वेश्वरि सम्प्रसीद शरणं मातः परं नास्ति मे ॥३७॥ श्रीसिद्धनाथ इति कोऽपि युगे चतुर्थे प्रादुर्बभूव करुणावरुणालयोऽस्मिन्। श्रीशम्भुरित्यभिधया स मयि प्रसन्नं चेतश्चकार सकलागमचक्रवर्त्ती॥३८॥ तस्याऽऽ-

ज्ञया परिणतान्वयसिद्धविद्याभेदास्पदैः स्तुतिपदैर्वचसां विलासैः। तस्मादनेन भुवनेश्वरिवेदगर्भं सद्यः प्रसीद वदने मम सन्निधेहि ॥३९॥ येषां परं न कुलदैवतमम्बिके त्वं तेषां गिरा मम गिरो न भवन्तु मिश्राः। तैस्तु क्षणं परिचिते विषयेऽपि वासो मा भूत्कदाचिदिति सन्ततमर्थये त्वाम् ॥ ४० ॥ श्रीशम्भुनाथ करुणाकर सिद्धनाथ श्रीसिद्धनाथ करुणाकर शम्भुनाथ ! । सर्वापराधमलिनेऽपि मयि प्रसन्नं चेतः कुरुष्व शरणं मम नान्यदस्ति ॥४१॥ इत्थं प्रतिक्षणमुदश्रुविलोचनस्य पृथ्वीधरस्य पुरतः स्फुटमाविरासीत्। दत्त्वा वरं भगवती हृदयं प्रविष्टा शास्त्रैः स्वयं नवनवैश्च मुखेऽवतीर्णा ॥ ४२ ॥ वाक्सिद्धिमेवमतुलामवलोक्य नाथः श्रीशम्भुरस्य महतीमपि तां प्रतिष्ठाम्। स्वस्मिन्पदे त्रिभुवनागमवन्द्यविद्यासिंहासनैकरुचिरे सुचिरं चकार ॥४३॥ भूमौ शय्या वचसि नियमः कामिनीभ्यो निवृत्तिः प्रातर्जातीविटपसमिधा दन्तजिह्वाविशुद्धिः। पत्रावल्ल्यां मधुरमशनं ब्रह्मवृक्षस्य पुष्पैः पूजाहोमौ कुसुमवसनालेपनान्युज्ज्वलानि ॥४४॥ इत्थं मासत्रयमविकलं यो व्रतस्थः प्रभाते मध्याह्ने वाऽस्तमितसमये कीर्त्तयेदेकचित्तः। तस्योल्लासैः सकलभुवनाश्चर्यभूतैः प्रभूतैर्विद्याः सर्वाः सपदि वदने शम्भुनाथप्रसादात् ॥४५॥ व्रतेन हीनोऽप्यनवाप्तमन्त्रः श्रद्धाविशुद्धोऽनुदिनं जपेद्यः। तस्याऽपि वर्षादनवद्यसद्यः कवित्वहृद्याः प्रभवन्ति विद्याः ॥ ४६ ॥ कोऽप्यचिन्त्यप्रभावोऽस्य स्तोत्रस्य प्रत्ययावहः। श्रीशम्भोराज्ञया सर्वाः सिद्धयोऽस्मिन्प्रतिष्ठिताः ॥४७॥

॥ इति मन्त्रगर्भं श्रीभुवनेश्वरीस्तोत्रं सम्पूर्णम् ॥

# अथ कालिकाकवचम्

कैलासशिखरासीनं देवदेवं जगद्गुरुम् । शङ्करं परिपप्रच्छ पार्वती परमेश्वरम् ॥ १ ॥ पार्वत्युवाच ॥ भगवन् देवदेवेश देवाना भोगद प्रभो ! । प्रब्रूहि मे महादेव ! गोप्यं चेद्यदि हे प्रभो ! ॥ २ ॥ शत्रूणां येन नाशः स्यादात्मनो रक्षणं भवेत् । परमैश्वर्यमतुलं लभेद्येन हि तद्वद ॥ ३ ॥ भैरव उवाच ॥ वक्ष्यामि ते महादेवि! सर्वधर्मविदाम्वरे ! । अद्भुतं कवचं देव्याः सर्वकामप्रसाधकम् ॥४॥ विशेषतः शत्रुनाशं सर्वरक्षाकरं नृणाम् । सर्वारिष्टप्रशमनं सर्वाभद्रविनाशनम् ॥ ५ ॥ सुखदं भोगदं चैव वशीकरणमुत्तमम् । शत्रुसङ्घाः क्षयं यान्ति भवन्ति व्याधिपीडिताः ॥ ६ ॥ दुःखिनो ज्वरिणश्चैव स्वाभीष्टद्रोहिणस्तथा । भोगमोक्षप्रदं चैव कालिकाकवचं पठेत् ॥ ७ ॥ ॐ अस्य श्रीकालिकाकवचस्य भैरव ऋषिः, अनुष्टुप्छन्दः, श्रीकालिका देवता, जपे विनियोगः । ॐ ध्यायेत्कालीं महामायां त्रिनेत्रां बहुरूपिणीम् । चतुर्भुजां ललज्जिह्वां पूर्णचन्द्रनिभाननाम् ॥ ८ ॥ नीलोत्पलदलश्यामां शत्रुसङ्घविदारिणीम् । नरमुण्डं तथा खड्गं कमलं च वरं तथा ॥ ९ ॥ निर्भयां रक्तवदनां दंष्ट्रालीघोररूपिणीम् । साट्टहासाननान्देवीं सर्वदाञ्च दिगम्बरीम् ॥१०॥ शवासनस्थितां कालीं मुण्डमालाविभूषिताम् । इति ध्यात्वा महाकालीं ततस्तु कवचं पठेत् ॥११॥ ॐ कालिका घोररूपा सर्वकामप्रदा शुभा । सर्वदेवस्तुता देवी शत्रुनाशं करोतु मे ॥१२॥ ॐ ह्रीं ह्रींरूपिणीं चैव ह्रां ह्रीं ह्रांरूपिणीं तथा । ह्रां ह्रीं क्षों क्षौंस्वरूपा सा सदा शत्रून्विदारयेत् ॥१३॥ श्रीं-ह्रीं-ऐंरूपिणी देवी भवबन्धविमोचनी । हुंरूपिणी महाकाली रक्षास्मान् देवि सर्वदा ॥१४॥ यया शुम्भो हतो दैत्यो निशुम्भश्च महासुरः । वैरिनाशाय वन्दे तां कालिकां शङ्करप्रियाम् ॥१५॥ ब्राह्मी शैवी वैष्णवी च वाराही नारसिंहिका । कौमार्यैन्द्री च चामुण्डा खादन्तु मम विद्विषः ॥ १६ ॥ सुरेश्वरी घोररूपा चण्डमुण्डविनाशिनी । मुण्डमालावृताङ्गी च

सर्वतः पातु मां सदा ॥१७॥ ह्रीं ह्रीं ह्रीं कालिके घोरे दंष्ट्रेव रुधिरप्रिये। रुधिरापूर्णवक्त्रे च रुधिरेणावृतस्तनि! ॥१८॥ मम शत्रून् खादय खादय हिंस हिंस मारय मारय भिन्धि भिन्धि छिन्धि छिन्धि उच्चाटय उच्चाटय द्रावय द्रावय शोषय शोषय स्वाहा। ह्रां ह्रीं कालिकायै मदीयशत्रून् समर्पयामि स्वाहा॥ ॐ जय जय किरि किरि किटि किटि कट कट मर्द मर्द मोहय मोहय हर हर मम रिपून् ध्वंस ध्वंस भक्षय भक्षय त्रोटय त्रोटय यातुधानान् चामुण्डे! सर्वजनान् राज्ञो राजपुरुषान् स्त्रियो मम वश्यान् कुरु कुरु तनु तनु धान्यं धनं मेऽश्वान् गजान् रत्नानि दिव्यकामिनीः पुत्रान् राजश्रियं देहि यच्छ क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्वाहा। इत्येतत्कवचं दिव्यं कथितं शम्भुना पुरा। ये पठन्ति सदा तेषां ध्रुवं नश्यन्ति शत्रवः ॥ १९ ॥ वैरिणः प्रलयं यान्ति व्याधिता वा भवन्ति हि। बलहीनाः पुत्रहीनाः शत्रवस्तस्य सर्वदा ॥२०॥ सहस्रपठनात्सिद्धिः कवचस्य भवेत्तदा। तत्कार्याणि च सिध्यन्ति यथा शङ्करभाषितम् ॥२१॥ श्मशानाङ्गारमादाय चूर्णं कृत्वा प्रयत्नतः। पादोदकेन पिष्ट्वा तल्लिखेल्लोहशलाकया ॥ २२ ॥ भूमौ शत्रून् हीनरूपानुत्तराशिरसस्तथा। हस्तं दत्त्वा तु हृदये कवचं तु स्वयं पठेत् ॥२३॥ शत्रोः प्राणप्रतिष्ठां तु कुर्यान्मन्त्रेण मन्त्रवित्। हन्यादस्त्रं प्रहारेण शत्रो! गच्छ यमक्षयम् ॥ २४ ॥ ज्वलदङ्गारतापेन भवन्ति ज्वरिता भृशम्। प्रोञ्छनैर्वामपादेन दरिद्रो भवति ध्रुवम् ॥ २५ ॥ वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम्। परमैश्वर्यदं चैव पुत्रपौत्रादिवृद्धिदम् ॥ २६ ॥ प्रभातसमये चैव पूजाकाले च यत्नतः। सायंकाले तथा पाठात्सर्वसिद्धिर्भवेद्ध्रुवम् ॥२७॥ शत्रुरुच्चाटनं याति देशाद्वा विच्युतो भवेत्। पश्चात्किङ्करतामेति सत्यं सत्यं न संशयः ॥ २८ ॥ शत्रुनाशकरे देवि! सर्वसम्पत्करे शुभे। सर्वदेवस्तुते देवि! कालिके! त्वां नमाम्यहम् ॥ २९ ॥

॥ इति श्रीरुद्रयामले कालिकाकल्पे कालिकाकवचं सम्पूर्णम् ॥

---

# अथ श्यामादण्डकम्

माणिक्यवीणामुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम्। माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां सततं स्मरामि ॥ १ ॥ चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे। पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः! ॥ २ ॥ माता मरकतश्यामा मातङ्गी मदशालिनी। कटाक्षयतु कल्याणी कदम्बवनवासिनी ॥३॥ जय मातङ्गतनये जय नीलोत्पलद्युते। जय सङ्गीतरसिके। जय लीलाशुकप्रिये! ॥ ४ ॥ जय जननि! सुधासमुद्रान्तरुद्यन्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्पद्रुमाकल्पकादम्बकान्तारवासप्रिये! कृत्तिवासप्रिये! सर्वलोकप्रिये!। सादरारब्धसङ्गीतसम्भावनासम्भ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके। शेखरीभूतशीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसम्भाविते।-कामलीलाधनुःसन्निभभ्रूलतापुष्पसन्दोहसन्देहकृल्लोचने वाक्सुधासेचने। चारुगोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे। प्रोल्लसद्बालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्य-सम्भ्रान्तभृङ्गाङ्गनागीतसान्द्रीभवन्मन्द्रतन्त्रीस्वरे सुस्वरे भास्वरे। वल्लकीवादनप्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसम्मानिते दिव्यहालामदोद्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले। स्वेदबिन्दूल्लसत्फाललावण्यनिष्यन्दसन्दोहसन्देहकृन्नासिकामौक्तिके सर्वविश्वात्मिके! कालिके!। मुग्धमन्दस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसम्पत्करे पद्मभास्वत्करे। कुन्दपुष्पद्युतिस्निग्धदन्तावलीनिर्मलालोलकल्लोलसम्मेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥ १ ॥ सुललितनवयौवनारम्भचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिब्बोकभृत्कन्धरे सत्कलामन्दिरे मन्थरे। दिव्यरत्नप्रभाबन्धुरच्छन्नहारादिभूषासमुद्योतमानानव-

द्यांशुशोभे शुभे। रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लताराजिते योगिभिः पूजिते। विश्व-दिङ्मण्डलव्यापिमाणिक्यतेजः स्फुरत्कङ्कणालङ्कृते विभ्रमालङ्कृते साधकैः सत्कृते। वासरारम्भवेलासमुज्जृम्भमाणारविन्दप्रतिद्वन्द्विपाणिद्वये सन्ततोद्यद्दये अद्वये। दिव्य-रत्नोर्मिकादीधितिस्तोमसन्ध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले सन्नताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले। तारकाराजिनीकाशहारावलिस्मेरचारुस्तनाभोगभारानमन्मध्यवल्लीवलिच्छेदवीचीसमुल्लाससन्दर्शिताकारसौन्दर्यरत्नाकरे वल्लकीभृत्करे किङ्करश्रीकरे। हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे। लसद्वृत्तगम्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसम्भाषणे। चारुशिञ्जत्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुः शिञ्जिनीडम्बरे दिव्यरत्नाम्बरे। पद्मरागोल्लसन्मेखलाभास्वरश्रोणिभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥२॥ विकसितनवकिंशुकाताम्रदिव्यांशुकच्छन्नचारुशोभापराभूतसिन्दूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवानर्गले श्यामले। कोमलस्निग्धनीलोत्पलोत्पादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारुलीलागते। नम्रदिक्पालसीमन्तिनीकुन्तलस्निग्धनीलप्रभापुञ्जसञ्जातदूर्वाङ्कुराशङ्कसारङ्गसंयोगरिङ्खन्नखेन्दूज्ज्वले प्रोज्ज्वले निर्मले। प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीशकीनाशदैत्येशयक्षेशवाय्वग्निकोटीरमाणिक्यसङ्घृष्टबालातपोद्दामलाक्षारसारुण्यतारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे ॥३॥ सुरुचिरनवरत्नपीठस्थिते सुस्थिते रत्नपद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते। तत्र विघ्नेशदुर्गावटुक्षेत्रपालैर्युते मत्तमातङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते। देवि! वामादिभिः शक्तिभिः सेविते धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते मातृकामण्डलैर्मण्डिते। यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्चिते। पञ्चबाणात्मिके पञ्चबाणेन रत्या च सम्भाविते। प्रीतिभाजा वसन्तेन चानन्दिते भक्तिभाजां परं श्रेयसे कल्पसे। योगिनां मानसे द्योतसे छन्दसामोजसा भ्राजसे। गीतविद्याविनोदातितृष्णेन कृष्णेन सम्पूज्यसे। भक्तिमच्चेतसा वेधसा स्तूयसे। विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥४॥ श्रवणहरणदक्षिणक्वाणया वीणया किन्नरैर्गीयसे। यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्च्यसे। सर्वसौभा-

# अथ श्यामादण्डकम्

माणिक्यवीणामुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम् । माहेन्द्रनीलद्यु-
तिकोमलाङ्गीं मातङ्गकन्यां सततं स्मरामि ॥ १ ॥ चतुर्भुजे चन्द्रकलावतंसे कुचो-
न्नते कुङ्कुमरागशोणे । पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ! ॥ २ ॥
माता मरकतश्यामा मातङ्गी मदशालिनी । कटाक्षयतु कल्याणी कदम्बवनवासिनी
॥३॥ जय मातङ्गतनये जय नीलोत्पलद्युते ! । जय सङ्गीतरसिके । जय लीलाशुक-
प्रिये ! ॥ ४ ॥ जय जननि । सुधासमुद्रान्तहृद्यन्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्प-
द्रुमाकल्पकादम्बकान्तारवासप्रिये ! कृत्तिवासप्रिये । सर्वलोकप्रिये । । सादरारब्ध-
सङ्गीतसम्भावनासम्भ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके । शेख-
रीभूतशीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसम्भाविते ।
कामलीलाधनुःसन्निभभ्रूलतापुष्पसन्दोहसन्देहकृल्लोचने वाक्सुधासेचने । चारु-
गोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे । प्रोल्लसद्वालिकामौक्तिकश्रेणि-
काचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्य-
सम्भ्रान्तभृङ्गाङ्गनागीतसान्द्रीभवन्मन्द्रतन्त्रीस्वरे सुस्वरे भास्वरे । वल्लकीवादन-
प्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसम्मानिते । दिव्यहालामदो-
द्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छा-
फले श्रीफले । स्वेदबिन्दूल्लसत्फाललावण्यनिःष्यन्दसन्दोहसन्देहकृन्नासिकामौक्तिके
सर्वविश्वात्मिके । कालिके ! । मुग्धमन्दस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डो-
त्करे ज्ञानमुद्राकरे सर्वसम्पत्करे पद्मभास्वत्करे । कुन्दपुष्पद्युतिस्निग्धदन्तावलीनिर्म-
लालोलकल्लोलसम्मेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥ १ ॥ सुललि-
तनवयौवनारम्भचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिब्बोकभृत्कन्धरे स-
त्कलामन्दिरे मन्थरे । दिव्यरत्नप्रभाबन्धुरच्छन्नहारादिभूषासमुद्द्योतमानानव-

द्यांशुशोभे शुभे। रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लताराजिते योगिभिः पूजिते। विश्व-दिङ्मण्डलव्यापिमाणिक्यतेजः स्फुरत्कङ्कणालङ्कृते विभ्रमालङ्कृते साधकैः सत्कृते। वासरारम्भवेलासमुज्जृम्भमाणारविन्दप्रतिद्वन्द्विपाणिद्वये सन्ततोद्यद्दये अद्वये। दिव्य-रत्नोर्मिकादीधितिस्तोमसन्ध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले सन्नताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले। तारकाराजिनीकाशहारावलिस्मेरचारुस्तनाभोगभा-रानमन्मध्यवल्लीवलिच्छेदवीचीसमुल्लाससन्दर्शिताकारसौन्दर्यरत्नाकरे वल्लकीभृत्करे किङ्करश्रीकरे। हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे। लसद्वृत्तग-म्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसम्भाषणे। चारुशिञ्ज-त्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुः शिञ्जिनीडम्बरे दिव्यरत्नाम्बरे। पद्मरागोल्लसन्मे-खलाभास्वरश्रोणिभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥२॥ विकसितनवकिंशुकाता-म्रदिव्यांशुकच्छन्नचारुशोभापराभूतसिन्दूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवान-र्गले श्यामले। कोमलस्निग्धनीलोत्पलोत्पादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारु-लीलागते। नम्रदिग्पालसीमन्तिनीकुन्तलस्निग्धनीलप्रभापुञ्जसञ्जातदूर्वाङ्कुराशङ्कसा-रङ्गसंयोगरिङ्खन्नखेन्दूज्ज्वले प्रोज्ज्वले निर्मले। प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीश-कीनाशदैत्येशयक्षेशवाय्वग्निकोटीरमाणिक्यसङ्घृष्टबालातपोद्दामलाक्षारसारुण्य-तारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे ॥३॥ सुरुचिरनवरत्नपीठस्थिते सुस्थिते रत्न-पद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते। तत्र विघ्नेशदुर्गावटुक्षेत्रपालैर्युते मत्तमा-तङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते। देवि! वामा-दिभिः शक्तिभिः सेविते धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते मातृकामण्डलैर्मण्डिते। यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्चिते। पञ्चबाणात्मिके पञ्चबाणेन रत्या च सम्भाविते। प्रीतिभाजा वसन्तेन चानन्दिते भक्तिभाजां परं श्रेयसे कल्पसे। योगिनां मानसे द्योतसे छन्दसामोजसा भ्राजसे। गीतविद्याविनोदातितृष्णेन कृष्णेन सम्पूज्यसे। भक्तिमच्चेतसा वेधसा स्तूयसे। विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥४॥ श्रवणहरण-दक्षिणक्वाणया वीणया किन्नरैर्गीयसे। यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्च्यसे। सर्वसौभा-

र्ययाञ्छावतीभिर्वधूभि. सुराणा समाराध्यसे । सर्वविद्याविशेषात्मकं चाटुगाथा· समुच्चारणं कण्ठमूलोल्लसद्वर्णराजित्रयं कोमलश्यामलोदारपक्षद्वयं तुण्डशोभातिदूरी· भवत्किंशुकं तं शुकं लालयन्ती परिक्रीडसे । पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं पुस्तकं चाङ्कुशं पाशमाबिभ्रती येन सिञ्चिन्त्यसे तस्य वक्त्रान्तराद्‌ गद्यपद्यात्मिका भारती नि सरेत् । येन वा यावका भाकृतिर्भाव्यसे तस्य वश्या भवन्ति स्त्रिय. पूरुषाः । येन वा शातकुम्भद्युतिर्भाव्यसे सोऽपि लक्ष्मीसहस्रैः परिक्रीडते । किं न सिध्येद्वपुः श्यामलं कोमलं चन्द्रचूडान्वितं तावकं ध्यायतः । तस्य लीलासरोवारिधिस्तस्य केलीवनं नन्दनं तस्य गीर्देवता किङ्करी तस्य चाज्ञाकरी श्रीः स्वयम् । सर्वतीर्थात्मिके सर्वमन्त्रात्मिके सर्वतन्त्रात्मिके सर्वयन्त्रात्मिके सर्व पीठात्मिके सर्वतत्त्वात्मिके सर्वशक्त्यात्मिके सर्वविद्यात्मिके सर्वयोगात्मिके सर्वना दात्मिके सर्वशिष्या(शब्दा)त्मिके सर्वविश्वात्मिके सर्वदीक्षात्मिकेसर्वसर्वात्मिके सर्वे पाहि मा पाहि मा पाहि मां देवि । तुभ्यं नमो देवि । तुभ्यं नमः ॥ ५ ॥

॥ इति श्रीश्यामादण्डकस्तोत्रं सम्पूर्णम् ॥

---

## अथ मोहिनीकवचम्

भगवन् सर्वधर्मज्ञ । सर्वागमविशारद ! । कवचं देवतायास्तु कृपया कथय प्रभो ! ॥१॥ ब्रह्मोवाच ॥ शृणु देव महाप्राज्ञ । सर्वशास्त्रविशारद ! । कवचं मोहिनीदेव्या महासिद्धिकरं परम् ॥ २ ॥ मोहिनी मे शिरः पातु भालं नेत्रयुगं तथा । भ्रुवौ च कामिनी रक्षेन्मुखं वागीश्वरी तथा ॥ ३ ॥ श्रोत्रे मङ्गलरूपा च कण्ठं महिष- मर्दिनी । भुजौ सौन्दर्यनिलया हस्तौ रक्षेद्यशस्विनी ॥ ४ ॥ सर्वदा नाभिदेशे तु कमला पातु चोदरम् । विजया हृदयं पातु कटिं सुरवरार्चिता ॥ ५ ॥ करौ महा- लया रक्षेदङ्गुलीर्भक्तवत्सला । वैष्णवी पातु जङ्घे च माया मेढ्रं गुदं तथा ॥ ६ ॥

पादौ च देवजननी तलं पातालवासिनी । पूर्वे तु मोहिनी रक्षेद्दक्षिणे सुखदायिनी ॥ ७ ॥ पश्चिमे वारुणी रक्षेदुत्तरेऽमृतवासिनी । ईशान्यां पातु चेशानी आग्नेय्यामग्निदेवता ॥ ८ ॥ नैर्ऋत्यां खड्गधृग्देवी वायव्यां मृगवाहिनी । ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥ ९ ॥ अग्रतः पातु चेन्द्राणी वाराही पृष्ठतस्तथा । कौबेरी चोत्तरे पातु दक्षिणे विष्णुवल्लभा ॥१०॥ इदं कवचमज्ञात्वा यो भजेन्मोहिनीं नरः । वृथा श्रमो भवेत्तस्य न मन्त्रः सिद्धिदायकः ॥११॥ भूर्जपत्रे समालिख्य कुङ्कुमादिकचन्दनैः । शतमष्टोत्तरं जाप्यं स्वर्णस्थं धार्यते यदि ॥१२॥ कण्ठे वा दक्षिणे बाहावष्टसिद्धिर्भवेद्ध्रुवम् । सर्वथा सर्वदा नित्यं जपेन्मोहिनिकं तथा ॥१३॥ राजद्वारे सभास्थाने कारागृहनिबन्धने । जलमध्ये चाऽग्निमध्ये तथा निर्जनके वने ॥१४॥ अरण्ये प्रान्तरे घोरे शत्रुसङ्घे महाहवे । शस्त्रघाते विषे पीते जपन् सिद्धिमवाप्नुयात् ॥१५॥ ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः । नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ १६ ॥ मनसा चिन्तितं कार्यं सहस्रं जपतस्तथा । पलाशमूले प्रजपेत्सहस्रत्रितयं मुदा ॥ १७ ॥ शत्रुहानिर्ध्रुवं चाऽत्र जायते नाऽत्र संशयः । अर्कमूले जपेन्नित्यं मन्त्रराजमिमं शुभम् ॥ १८ ॥ भोजयेद्ब्राह्मणांश्चैव लक्ष्मीर्वसति सर्वदा । यदिदं कवचं नित्यं भक्त्या तव मयोदितम् ॥१५॥ यो जपेत्सर्वदा भक्त्या मोहिन्याः कवचं शुभम् । वाञ्छितं फलमाप्नोति नाऽत्र कार्या विचारणा ॥ २० ॥

॥ इति श्रीभविष्योत्तरपुराणे ब्रह्मप्रोक्तं मोहिनीकवचस्तोत्रं सम्पूर्णम् ॥

---

# अथ मोहिन्यर्गलास्तोत्रम्

देवा ऊचुः । जय मङ्गलरूपे त्वं जय त्वं भक्तवत्सले । जय सौन्दर्यनिलये जय कारुण्यवारिधे । ॥१॥ महालये भो करुणालये मां त्वं त्राहि दीनार्तिहरे । प्रपन्नम् । त्वत्पादपद्मावनतोत्तमाङ्गं प्रसीद नित्यं वरदे । शरण्ये । ॥ २ ॥ त्वं विष्णुरूपिणी देवि । त्वं च रुद्रस्वरूपिणी । त्वं ब्राह्मी त्वं च शर्वाणी त्वमिन्द्राणीति गीयसे ॥ ३ ॥ त्वं कल्याणी च श्रीर्वाणी सैंहिकेयविदारिणी । त्वमिन्द्राणी च सौपर्णी काद्रवेय-विदारिणी ॥ ४ ॥ वैकुण्ठपद्मिनि श्रेणी निर्जराणां तरङ्गिणी । गङ्गाधरस्य रमणी निधिवासप्रवासिनी ॥ ५ ॥ संहारिणी च विपदा सम्पत्सन्ततिकारिणी । भव-पाशमहापाशगेहपाशविदारिणी ॥ ६ ॥ स्कन्द उवाच ॥ इति ते त्रिदशाः स्तुत्वा जनार्दनमनन्तरम् । स्त्रीरूपेणातिशोभाढ्यं मोहिनीरूपकं जगुः ॥ ७ ॥ देवा ऊचुः । शृङ्गारलावण्यसमुद्ररूपिणी स्वरूपशोभारतिकोटिजित्वरा । त्वमेव कामीप्सितदा-तृदानदा देवी । मुदा रक्षतु दैत्यमोहिनी ॥ ८ ॥ प्रतारणाभिज्ञतमा सुरारिणां नमः शिरश्छेदनकारिविक्रमा । स्वरूपसम्मोहितदानवव्रजा देवी मुदा रक्षतु दैत्य-मोहिनी ॥ ९ ॥ ददाति दोर्भ्यामपि या चतुर्भुजा श्रियं हितर्घेतिविभूषणाङ्कनैः । आपत्यदारिद्र्यविनाशकारिणी देवी मुदा रक्षतु दैत्यमोहिनी ॥१०॥ पीयूषदात्री सुतनुर्दिवौकसां दितेः सुतानां च सुराप्रदात्री । गृहीतमायामयकामिनीवपुर्देवी मुदा रक्षतु दैत्यमोहिनी ॥११॥ सुवर्णपङ्केरुहकेतकीश्रियं शरीरवर्णेन च जित्वरा प्रसूः । स्वकण्ठधिक्कारितवल्लकीगुणा देवी । मुदा रक्षतु दैत्यमोहिनी ॥१२॥ स्वदी-प्रकोटीन्दुकृतप्रभाश्रया प्रभाविनी दैवतकामपूरिणी । अखण्डमाखण्डलनिर्जरस्तुता देवी मुदा रक्षतु दैत्यमोहिनी ॥१३॥ यस्याः प्रभावं द्विसहस्रजिह्वः सहस्रवक्त्रोऽ-प्युरगाधिराजः । वक्तुं प्रभुर्न क तदेतरे जना देवी मुदा रक्षतु दैत्यमोहिनी ॥१४॥ स्कन्द उवाच ॥ इति स्तुता तैस्त्रिदशैः स्वभावैः सा मोहिनीरूपमधोक्षजस्य ।

उवाच वाक्यं विनयप्रसन्ना श्लक्ष्णं तदा तान्प्रणतानुदारान् ॥१५॥ मोहिन्युवाच ॥ आदौ पुरुषरूपेण संस्तुतोऽहं जनार्दनः। ततः सीमन्तिनीरूपा भवद्भिर्मोहिनी स्तुता ॥१६॥ अथ चैष महापुण्यपुरुषप्रकृतिस्तवः। य एनं पठते नित्यं प्रातरुत्थाय मानवः ॥१७॥ मत्समीपे विशेषेण शुचिर्भूत्वा धृतव्रतः। न दारिद्र्यं भवेत्तस्य न सङ्कटमवाप्नुयात् ॥ १८ ॥ आरोग्यं सततं गच्छेन्न स रोगैः प्रबाधते। भूतप्रेतपिशाचानां न बाधाभिः स भूयते ॥ १६ ॥ मरणेऽपि शुभांल्लोकान्प्राप्नोतीति विनिश्चितम्। इदं क्षेत्रं महापुण्यं वृद्धातीरमिति श्रुतम् ॥ २० ॥ विशेषेणाऽधुना जातं युष्मत्पद्भक्तिनिषेवणात्। महालयेति विख्यातिं याताऽहं मोहिनी स्वयम् ॥२१॥ वसाम्यत्र सुराः सर्वे भवन्तोऽपि वसिष्यथ। त्रिरात्रं मत्समीपे यो मोहिन्या अर्गलास्तवम् ॥ २२ ॥ सदा पठति सश्रद्धस्तस्याऽहं वाञ्छितप्रदा। मद्दर्शनकृतां पुंसां मुक्तिरेव न संशयः ॥२३॥

॥ इति श्रीमोहिन्यर्गलास्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीवरदवल्लभास्तोत्रम्

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनम्वाहनं वेदात्मा विहगेश्वरो जवनिका माया जगन्मोहिनी। ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति! ब्रूमः कथं त्वां वयम् ॥ १ ॥ यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुर्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः। तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो लोकैकेश्वरि! लोकनाथदयिते दान्ते दयान्ते विदन् ॥ २ ॥ ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्षसे नष्टं प्राक्त्वदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम्। श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्याक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ॥ ३ ॥ शान्तानन्तमहाविभूति परमं यद्ब्रह्मरूपं हरे मूर्तं ब्रह्म ततोऽपि यत्प्रियतरं रूपं यदत्यद्भुतम्। यान्यन्यानि यथा-

सुखं विहरतो रूपाणि सर्वाणि तान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगाढानि दे ॥४॥ आकारत्रयसम्पन्नामरविन्दविलासिनीम् । अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥ ५ ॥

॥ इति श्रीवरदवल्लभास्तोत्रं सम्पूर्णम् ॥

---

## अथ श्रीभवानीस्तुतिः

श्रीभवान्यै नमः । आनन्दमन्थर पुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १ ॥ ब्रह्मादयोऽपि यदपाङ्गतरङ्गभङ्ग्या सृष्टिस्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ २ ॥ पौलस्त्यपीनभुजसम्पदुदस्यमानकैलाशसम्भ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ ३ ॥ दिश्यान्महासुरशिरःसरसीप्सितानि प्रेङ्खन्नखावलिमयूखमृणालनालम् । चण्ड्याश्चलच्चटुलनूपुरचञ्चरीकझाङ्कारहारि चरणाम्बुरुहद्वयम्वः ॥ ४ ॥

॥ इति श्रीभवानीस्तुतिः समाप्तम् ॥

---

## श्रीकनक (लक्ष्मी ) धारास्तवः

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् । अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः ॥ १ ॥ मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि । माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसम्भवायाः ॥ २ ॥ आमीलिताक्षमधिगम्य

मुदा मुकुन्दमानन्दमन्दमनिमेषमनङ्गतन्त्रम् । आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ३ ॥ बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावली च हरिनीलमयी विभाति । कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः ॥ ४ ॥ कालाम्बुदालिललितोरसि कैटभारेर्धाराधरे स्फुरति या तडिदङ्गनेव । मातुः समस्तजगतां महनीयमक्षि भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ५ ॥ प्राप्तं पदं प्रथमतः खलु यत्प्रभावान्मङ्गल्यभाजि मधुमाथिनि मन्मथेन । मय्यापतेत्तदिह मन्थरमीक्षणार्धं मन्दालसाक्षि ! मकराकरकन्यकायाः ॥६॥ विश्वामरेन्द्रपदविभ्रमदानदक्षमानन्दहेतुरधिकं मधुविद्विषोऽपि । ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥ इष्टा विशिष्टमतयोऽपि नरा यथा द्राग्दृष्टास्त्रिविष्टपसदश्च पदं भजन्ते । दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ८ ॥ दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ निषण्णे । दुष्कर्मधर्ममपनीय चिराय दूरान्नारायणप्रणयिनीनयनाम्बुवाहः ॥ ९ ॥ धीर्देवतेति गरुडध्वजभामिनीति शाकम्भरीति शशिशेखरवल्लभेति । सृष्टिस्थितिप्रलयसिद्धिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥ श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणाश्रयायै । शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥ नमोऽस्तु नालीकविभावनायै नमोऽस्तु दुग्धोदधिजन्मभूत्यै । नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥ नमोऽस्तु हेमाम्बुजपीठिकायै नमोऽस्तु भूमण्डलनायिकायै । नमोऽस्तु देवादिदयापरायै नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥ नमोऽस्तु देव्यै भृगुनन्दनायै नमोऽस्तु विष्णोरुरसि स्थितायै । नमोऽस्तु लक्ष्म्यै कमलालयायै नमोऽस्तु दामोदरवल्लभायै ॥१४॥ नमोऽस्तु कान्त्यै कमलेक्षणायै नमोऽस्तु भूत्यै भुवनप्रसूत्यै । नमोऽस्तु देवादिभिरर्चितायै नमोऽस्तु नन्दात्मजवल्लभायै ॥ १५ ॥ स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम् । गुणाधिका गुरुधनभाग्यभागिनो भवन्ति ते भवमनु भाविताशयाः ॥ १६ ॥

॥ इति श्रीमद्भगवत्पादशङ्कराचार्यकृतः कनक(लक्ष्मी)धारास्तवः सम्पूर्णः ॥

# श्रीस्तवः

स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन्हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥ १ ॥ हे श्रीर्देवि ! समस्तलोकजननि ! त्वां स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम्। भक्तिं बन्धय नन्दयाश्रितमिमं दासं जनं तावकं लक्ष्यं लक्ष्मि । कटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥ २ ॥ स्तोत्रं नाम किमामनन्ति कवयो यदन्यदीयान्गुणानन्यत्र त्वसतोऽधिरोप्य भणितिः सा तर्हि वन्ध्या त्वयि । सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी वाग्वाचस्पतिनाप्यशक्यरचना त्वत्सद्गुणार्णोनिधौ ॥ ३ ॥ ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता यन्मामिका भारती । हास्यं तत्तु न मन्महे न हि चकोर्यैकाऽखिला चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ४ ॥ क्षोदीयानपि दुष्टबुद्धिरपि निःस्नेहोऽप्यनीहोऽपि ते कीर्त्तिन्देवि । लिहन्नहं न च बिभेम्यज्ञो न जिह्रेमि च । दुष्येत्सा तु न तावता न हि शुना लीढाऽपि भागीरथी दुष्येच्चाऽपि न लज्जते न च बिभेत्यार्तिस्तु शाम्येच्छुनः ॥ ५ ॥ ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि यत्तल्लक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिकं वर्त्तते । तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो धन्यं मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः ॥ ६ ॥ ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययो रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते । तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि ! प्रथामश्नुते ॥ ७ ॥ देवि ! त्वन्महिमावधिर्न हरिणा नाऽपि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते । यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तया खलु विदन् भ्रान्तोऽयमित्युच्यते ॥ ८ ॥ लोके वन-

स्पतिबृहस्पतितारतम्यं यस्याः कटाक्षपरिणाममुदाहरन्ति। सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९ ॥ यस्याः कटाक्षमृदुवीक्षण-वीक्षणेन सद्यः समुल्लसितपल्लवमुल्ललास। विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तां देव-देवमहिषीं श्रियमाश्रयामः ॥१०॥

॥ इति श्रीस्तवः सम्पूर्णः ॥

---

# अथ गोदास्तुतिः

श्रीमतेरामानुजाय नमः। श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ता-चार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥ श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं श्री रङ्गराजहरिचन्दनयोगदृश्याम्। साक्षात्क्षमाङ्करुणयाकमलामिवान्यां गोदामनन्य-शरणः शरणं प्रपद्ये ॥ १ ॥ वैदेशिकः श्रुतिगिरामपि भूयसीनां वर्णेषु मातिमहिमा नहि मादृशान्ते। इत्थं विदन्तमां सह सैव गोदे मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २ ॥ त्वत्प्रेयसश्रवणयोरमृतायमानां तुल्यान्त्वदीयमणि नूपुरशिञ्जितेन। गोदे! त्वमेवजननि! त्वदभीष्टवार्हां वाचम्प्रसन्नमधुरां मम सम्विधेहि ॥३॥ कृष्णान्वयेन दधतीं यमुनानुभावं तीर्थैर्यथावदवगाह्य सरस्वतीन्ते। गोदे! विकस्वरधियां भवतीक-टाक्षाद्वाचः स्फुरन्ति मकरन्दमुचः कवीनाम् ॥ ४ ॥ अस्मादृशामपि कृतौ चरदी-क्षितानामह्लाय देवि! दयते यदसौ मुकुन्दः। तन्निश्चितन्नियमितस्तव मौलिदाम्ना तन्त्रीनिनादमधुरैश्च गिराम्निगुम्फैः ॥५॥ शोणाधरेऽपि कुचयोरपि तुङ्गभद्रा वाचा-म्प्रवाहविभवेऽपि सरस्वती त्वाम्। अप्राकृतैरपिरसैर्विरजास्वभावाद्गोदाऽपि देवि! कमितुर्ननु नर्मदाऽसि ॥६॥ वल्मीकतः श्रवणतो वसुधात्मनस्ते जातो बभूव स मुनिः कविसार्वभौमः। गोदे! किमद्भुतमिदं यदमी स्वदन्ते वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥७॥ भोक्तुन्तवप्रियतमम्भवतीव गोदे भक्तिं निजाम्प्रणयभावनया गृणन्तः। उच्चा-

यचैर्विरहसङ्गमजैरुदन्तैः शृङ्गारयन्ति हृदयङ्गुरवस्त्वदीयाः ॥ ८ ॥ मातः समुत्थितवतीमधिविष्णुचित्तं विश्वोपजीव्यममृतम्वचसा दुहानाम् । तापच्छिदं हिमरुचेरिवमूर्तिमन्या सन्तः पयोधिदुहितुः सहजाम्विदुस्त्वाम् ॥ ९ ॥ तातस्तु ते मधुभिदस्तुतिलेशवश्यात् कर्णामृतैः स्तुतिशतैरनवाप्तपूर्वम् । त्वन्मौग्ध्यगन्धसुभगामुपहृत्य मालां लेभे महत्तरपदानुगुणं प्रसादम् ॥१०॥ दिग्दक्षिणाऽपि परिपक्त्रिमपुण्यलभ्यात्सर्वोत्तरा भवति देवि ! तवावतारात् । यत्रैव रङ्गपतिना बहुमानपूर्वं निद्रालुनाऽपि नियतं निहिताः कटाक्षाः ॥११॥ प्रायेण देवि ! भवतीव्यपदेशयोगाद्गोदावरीजगदिदम्पयसा पुनीते । यस्यां समेत्य समयेषु चिरन्निवासाद्भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः ॥१२॥ नागेशयः सुतनुपक्षिरथः कथन्ते जातःस्वयंवरपतिः पुरुषः पुराणः । एवंविधाः समुचितं प्रणयम्भवत्याः सन्दर्शयन्ति परिहासगिरः सखीनाम् ॥ १३ ॥ त्वद्भुक्तमाल्यसुरभीकृतचारुमौलेर्हित्वा भुजान्तरगतामपि वैजयन्तीम् । पत्युस्तवेश्वरि ! मिथः प्रतिघातलोलबर्हातपत्ररुचिमारचयन्ति भृङ्गाः ॥१४॥ आमोदवत्यपि सदाहृदयङ्गमाऽपिरागान्विताऽपिललिताऽपि गुणोत्तराऽपि । मौलिस्रजा तव मुकुन्दकिरीटभाजा गोदे ! भवत्यधरिता खलु वैजयन्ती ॥१५॥ त्वन्मौलिदामनि विभोः शिरसा गृहीते स्वच्छन्दकल्पितसपीतिरसप्रमोदाः । मञ्जुस्वना मधुलिहो विदधुः स्वयन्ते स्वायम्वरं कमपि मङ्गलतूर्यघोषम् ॥१६॥ विश्वायमानरजसा कमलेन नाभौ वक्षःस्थले च कमलास्तनचन्दनेन । आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे धत्ते नतेन शिरसा तव मौलिमालाम् ॥१७॥ चूडापदेन परिगृह्य तवोत्तरीयं मालामपित्वदलकैरधिवास्य धत्ताम् । प्रायेण रङ्गपतिरेष बिभर्त्ति गोदे ! सौभाग्यसम्पदभिषेकमहाधिकारम् ॥१८॥ तुङ्गैरकृत्रिमगिरः स्वयमुत्तमाङ्गैर्यं सर्वगन्ध इतिसादरमुद्वहन्ति । आमोदमन्यमधिगच्छति मालिकाभिः सोऽपि त्वदीयकुटिलालकवासिताभिः ॥१९॥ धन्ये समस्तजगताम्पितुरुत्तमाङ्गे त्वन्मौलिमाल्यभरसम्भरणेन भूयः । इन्दीवरस्रजमिवादधती त्वदीयान्याकेसराणि बहुमानविलोकितानि ॥ २० ॥ रङ्गेश्वरस्य तव च प्रणयानुरोधादन्योन्यमाल्यपरिवृत्तिमभिष्टुवन्तः । वाचालयन्निवसुदेरसिकास्त्रि-

ोकीं मान्यार्थिकत्वसमताविपर्यैर्विवादैः ॥२१॥ दूर्वादलप्रतिमया तव देहकान्त्या ारोचनारुचिरया च तथेन्दिरायाः। आसीदनुज्झितशिखावलकण्ठशोभं माङ्ग-ल्यदं प्रणमताम्मधुवैरिगात्रम ॥२२॥ अर्च्यं समर्च्यनियमैर्निगमप्रसूनैर्नाथं त्वया कम-लया च समेयिवांसम। मातश्चिरन्निरविशन्निजमाधिराज्यं मान्या मनुप्रभृतयोऽपि महीक्षितस्ते ॥२३॥ आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं रङ्गेश्वरस्य रमया विनिवेद्य-माने। पार्श्वे परत्र भवती यदि तस्य नासीत्प्रायेण देवि! वदनं परिवर्त्तितं स्यात् ॥२४॥ गोदे गुणैरपनयन प्रणतापराधान् भ्रूक्षेप एव तव भोगरसानुकूलः। कर्मानु-बन्धफलदानरतस्य भर्त्तुः स्वातन्त्र्यदुर्व्यसनमर्मभिदा निदानम॥२५॥ रङ्गे तटिद्गुण-वतो रमयैव गोदे कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या। दौर्गत्यदुर्विषविनाशसुधा-नदीं त्वां सन्तः प्रपद्य शमयन्त्यचिरेण तापान्॥२६॥ जातापराधमपि मामनुकम्प्य गोदे गोप्त्री यदि त्वमसि युक्तमिदम्भवत्याः। वात्सल्यनिर्भरतया जननी कुमारं स्तन्येनव-र्द्धयति दष्टपयोधराऽपि ॥२७॥ शतमखमणिनीला चारुकह्लारहस्ता स्तनभरनमिताङ्गी सान्द्रवात्सल्यसिन्धुः। अलकविनिहिताभिः स्रग्भिराकृष्टनाथा विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८ ॥ इति विकसितभक्तेरुत्थितां वेङ्कटेशाद्बहुगुणरमणी-यां वक्ति गोदास्तुतिं यः। स भवति बहुमान्यः श्रीमतो रङ्गभर्त्तुश्चरणकमलसेवां शाश्व-तीमभ्युपेष्यन् ॥ २९ ॥

॥ इति कवितार्किकसिंहस्यसर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ता-चार्यस्य कृतिषु गोदास्तुतिः सम्पूर्णा ॥

---

# अथ श्रीगुणरत्नकोशः

श्रीमते रामानुजाय नमः। श्रीपराशरभट्टार्य्य श्रीरङ्गेशपुरोहितः। श्रीवत्साङ्क सुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे। श्रियः समस्तचिदचिद्विधानव्यसनं हरेः। अङ्गीका रिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥१॥ उल्लासपल्लवितपालितसप्तलोकी निर्वा कोरकितनेमकटाक्षलीलाम्। श्रीरङ्गहर्म्यतलमङ्गलदीपरेखां श्रीरङ्गराजमहिषीं श्रिय माश्रयामः ॥ २ ॥ अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीर खानोकहर्द्धिः। स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीकल्पवः कटाक्षान् ॥ ३ ॥ यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेर्वेदान्ता स्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति। भोगोपोद्घातकेलीचुलकितभगवः श्वरूप्यानुभावा सा न श्रीरास्तृणीताममृतलहरिधीलङ्घनीयैरपाङ्गैः॥ ४ ॥ यद वत्तव वैभवं तदुचितस्तोत्राय दूरे स्पृहा स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चं विरिञ्च्यादयः। अप्येवं नव देवि! वाङ्मनसयोर्भाषानभिज्ञं पदं का वाच प्रयतामहे कवयितुं स्वस्ति प्रशस्त्यै गिराम् ॥ ५ ॥ स्तोतारं तमुशन्ति देवि कवयो यो विस्तृणीते गुणान् स्तोतव्यस्य ततश्च ते स्तुतिधुरा मय्येव विश्राम्यति यस्मादस्मदमर्पणीयभणितिस्वीकारसस्ते गुणाः क्षान्त्यौदार्यदयादयो भगवति स्व प्रस्तुवीरन् प्रथाम् ॥ ६ ॥ सूक्ति समग्रयतु नः स्वयमेव लक्ष्मीः श्रीरङ्गराजमहि मधुरैः कटाक्षैः। वैदग्ध्यवर्णगुणगुम्फनगौरवैर्या कण्डूलकर्णकुहराः कवयो धयन्ति ॥ ७ ॥ अनाघ्रातावद्यं बहुगुणपरीणाहि मनसो दुहानं सौहार्दं परिचितमिव थाऽपि गहनम्। पदानां सौभ्रात्रादनिमिषनिषेव्यं श्रवणयोस्त्वमेव श्रीर्मह्यं बहुमुख वाणीविलसितम् ॥ ८ ॥ श्रियः श्रीश्रीरङ्गेशाय तव च हृद्या भगवतीं श्रियं त्वत्तो प्युच्चैर्वयमिह भणामः शृणुतराम्। दृशौ ते भूयास्तां सुखतरलतारे श्रवणतः पुनर्हर्षो त्कर्षात् स्फुटतु भुजयोः कञ्चुकशतम् ॥ ९ ॥ देवि! श्रुतिं भगवतीं प्रथमे पुम

सत्त्वत्सद्गुणौघमणिकोशगृहं गृणन्ति। तद्द्वारपाटनपटूनि च सेतिहाससन्तर्कण-
स्मृतिपुराणपुरःसराणि ॥ १० ॥ आहुर्वेदा न मानं कतिचन कतिचाराजकं
विश्वमेतद्राजन्वत्केचिदीशं गुणिनमपि गुणैस्तं दरिद्राणमन्ये। भिक्षावन्ये सुराज-
म्भवमिति च जडास्ते तलातलपकार्पुर्ये ते श्रीरङ्गहर्म्याङ्गणकनकलते न क्षणं लक्ष्य-
मासन् ॥११॥ मनसि विलसिताक्ष्णा भक्तिसिद्धाञ्जनेन श्रुतिशिरसि निगूढं लक्ष्मि
ते वीक्षमाणाः। निधिमिव महिमानं भुञ्जते येऽपि धन्या ननु भगवति दैवीं सम्पदं
तेऽभिजाताः ॥ १२ ॥ अस्येशाना जगत इति ते धीमहे यां समृद्धिं श्रीः श्रीसूक्तं
बहु मुखयतं तां च शाखानुशाखम्। ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तस्तं च
त्वत्कम्पतिमधिजगावुत्तरश्चानुवाकः ॥ १३ ॥ उद्वाहुस्त्वामुपनिषदसावाहनैकां
नियन्त्रीं श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रे। स्मार्तारोऽस्मज्जननियतमे सेति-
हासैः पुराणैर्निन्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाणम् ॥१४॥ आकुब्रामनिया-
मकादपि विभोरासर्वनिर्वाहकादैश्वर्यं यदिहोत्तरोत्तरगुणं श्रीरङ्गभर्तुः प्रिये ! तुङ्गं मङ्ग-
लमुज्ज्वलं गरिमवत पुण्यं पुनः पावनं धन्यं यत्तददश्च वीक्षणभुवस्ते पञ्चपा(षो)विप्रुषः
॥१५॥ एको मुक्तातपत्रप्रचुरमणिघणत्कारिमौलिर्मनुष्यो ह्यप्यहन्तावलस्थो न गण-
यति नतान् यन् क्षणं क्षोणिपालान्। यत्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन्
दन्तपङ्क्तिं तत्ते श्रीरङ्गराजप्रणयिनि नयनोदञ्चितं न्यञ्चिताभ्याम् ॥१६॥ रतिर्म-
तिसरस्वतीधृतिसमृद्धिसिद्धिश्रियः सुधासखि यतोमुखं विचलिपेत्तव भ्रूलता।
ततो मुखमथेन्दिरे ! बहुमुखीमहम्पूर्विकां विगाह्य च वशम्वदाः परिवहन्ति कूलङ्कषाः
॥१७॥ सहस्थिरपरित्रसव्रजविरिञ्चिनाऽकिञ्चनैरनोकहबृहस्पतिप्रवलविक्रयप्रक्रियम्।
इदं सदसदात्मनां निखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि ! तत्ताण्डवम्
॥१८॥ काले शंसति योग्यतां चिदचितोरन्योन्यमालिङ्गतो भूताहङ्कृतिबुद्धिपञ्च-
करणीस्वान्तःप्रवृत्तीन्द्रियैः। अण्डानावरणैः सहस्रमकरोत्तान् भूर्भुवः स्वर्वतः श्रीर-
ङ्गेश्वरदेवि ते विहृतये सङ्कल्पमानः प्रियः ॥ १९ ॥ शब्दादीन् विषयान् प्रदर्श्य
विभवं विस्मार्य दास्यात्मकं वैष्णव्या गुणमायया‌ऽऽत्मनिवहान् विप्लाव्य पूर्वैः

पुमान्। पुंसा पण्यवधूविडम्बितवपुषा धूर्तानिवायामयन् श्रीरङ्गेश्वरि! कल्पते त परीहासात्मने केलये ॥ २० ॥ यद्दूरे मनसो यदेव तमस. पारे यदत्यद्भुतं यत्का लादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः। सायुज्यस्य यदेव यद्दिरां तद्विष्णो परमं पदं तव कृते मातः समाम्नासिषुः ॥ २१ ॥

चराचरमिदं भोगे विभूतिः परा पुण्यास्ते परिचारकर्मणि सदा पश्यन्ति ये सूरयः श्रीरङ्गेश्वरदेवि। केवलकृपानिर्वाह्यवर्गो वयं शेषित्वे परमः पुमान् परिकरा ह्ये तव स्फारणे ॥२२॥ आज्ञानुग्रहभीमकोमलपुरीकालाफलं भेजुषा यायोध्येत्यपरा जितेति विदिता नाकं परेण स्थिता। भावैरद्भुतभोगभूमगहनैः सान्द्रा सुधास्य न्दिभिः श्रीरङ्गेश्वरगेहलक्ष्मि युवयोस्तां राजधानीं विदुः ॥२३॥ तस्यां च त्वत्क पायन्निरवधिजनता विश्रमार्हावकाशं सङ्कीर्णं दास्यतृष्णाकलितपरिकरैः पुम्भिरा नन्दनिघ्नैः। स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैरानन्दैकार्णवं श्रीभगवति! युवयोराहुरास्थानरत्नम् ॥ २४ ॥ तत्र स्रक्स्पर्शगन्धं स्फुरदुपरिफणा- रत्नरोचिर्वितानं विस्तीर्यानन्तभोगं तदुपरि नयता विश्वमेकाधिपत्यम्। तैस्तैः कान्तेन शान्तोदितगुणविभवैरर्हता त्वामसंख्यैरन्योन्याद्वैतनिष्ठाघनरसगहनान् दे बध्नासि भोगान् ॥२५॥ भोग्यानामपि नान्तरीयकतया पुष्पाङ्गरागैः समं निर्वृत्त- प्रणयातिवाहनविधौ नीताः परीवाहताम्। देवि! त्वामनु नीलया सह मही- देव्यः सहस्रं तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वाभिप्रियं श्लाघसे ॥२६॥ रे साध्याः सन्ति देवा जननिगुणवपुर्वेषवृत्तस्वरूपैर्भोगैर्वा निर्विशेषाः सवयस इव रे नित्यनिर्दोषगन्धाः। हे श्री! श्रीरङ्गभर्तुस्तव च पदपरीचारवृत्त्यै सदाऽपि प्रेमप्रद्रा णभावाविलहृदयहठात्कारकैङ्कर्यभोगाः ॥ २७ ॥ स्वरूपं स्वातन्त्र्यं भगवत इ चन्द्रवदने! त्वदाश्लेषात्कर्षाद्भवति खलु निष्कर्षसमये। त्वमासीर्मातः श्रीः कमितु रिदमित्थं त्वभिभवन्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि ॥२८॥ नव स्पर्शा दीशं स्पृशति कमले मङ्गलपदं तवेदं नोपाधेरुपनिपतितं श्रीरसि यतः। प्रसूनं पुष्य न्तीमपि परिमलर्द्धिं जिगदिषुर्न चैवं त्वा देवं स्वदत इति कश्चित् कथयते ॥ २९ ॥

अपाङ्गा भूयांसो यदुपरि परम्ब्रह्म तदभूदमी यत्र द्वित्राःस च शतमखादिस्तदध-राक्। अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम् ॥ ३० ॥ स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवांस्त्वदाय-त्तर्द्धित्वेऽप्यभवदपराधीनविभवः। स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥३१॥ प्रशकनबलज्योतिर्ज्ञानैश्वरी-विजयप्रथा प्रणतवरणप्रेमक्षेमङ्करत्वपुरःसरा। अपि परिमलः कान्तिर्लावण्यमरी-चिरितीन्दिरे तव भगवतश्चैते साधारणा गुणराशयः॥ ३२ ॥ अन्येऽपि यौवन-मुखा युवयोः समानाः श्रीरङ्गमङ्गलविजृम्भणवैजयन्ति!। तस्मिंस्तव त्वयि च तस्य तस्य परम्परेण संस्तीर्णदर्पण इव प्रचुरं स्वदन्ते ॥ ३३ ॥ युवत्वादौ तुल्येऽप्यपरव-शताशत्रुशमनस्थिरत्वादीन् कृत्वा भगवति! गुणान् पुंस्त्वसुलभान्। त्वयि स्त्रीत्वै-कान्तान् म्रदिमपतिपारार्थ्यकरुणाक्षमादीन्वा भोक्तुं भवति युवयोरात्मनि भिदा ॥ ३४ ॥ घनकनकद्युती युवदशामपि मुग्धदशां युवतरुणत्वयोरुचितमाभरणादि परम्। ध्रुवमसमानदेशविनिवेशि विभज्य हरौ त्वयि च कुशेशयोदरविहारिणि निर्विशसि ॥३५॥ अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्फतः क्षीराब्धेः किमृजी-षतामुपगतामन्ये महार्घास्ततः। इन्दुः कल्पलताः सुधामधुमखा इत्याविलां वर्णनां श्रीरङ्गेश्वरि! शान्तकृत्रिमकथं दिव्यं वपुर्नार्हति ॥ ३६ ॥ प्रणमदनुविधित्सावा-सनानम्रमग्रे प्रणतिपरिचिचीपाकुञ्चितं पार्श्वकेन। कनकनिकषचञ्चच्चम्पकस्रक्स-मानप्रवरमिदमुदारं वर्ष्म वाचामभूमिः ॥ ३७ ॥ एकं न्यञ्च्यनतिक्षमं मम परं चाकुञ्च्य पादाम्बुजं मध्ये विष्टरपुण्डरीकमभयं विन्यस्य हस्ताम्बुजम्। त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापाङ्गतरङ्गमम्ब! मधुरं मुग्धं मुखं बिभ्रतीम् ॥३८॥ सुरभितनिगमान्तं वन्दिषीयेन्दिरायास्तव कमलपलाशप्रक्रियं पादयुग्मम्। वहति यदुपमर्दं वैजयन्तीहिमाम्भःप्लुतिभिरिव नवत्वं कान्तबाह्वन्तराले ॥ ३९ ॥ स्वत्स्वीकारकलावलेपकलुषा राज्ञां दृशो दुर्वचा नित्यं त्वन्मधुपानमत्तमधुपश्रीनिर्भ-राभ्यां पतिम्। दृग्भ्यामेव हि पुण्डरीकनयनं वेदो विदामासते साक्षाल्लक्ष्मि! तवा-

वलोकविभवः कास्ता कथा वर्ण्यते ॥ ४० ॥ आनन्दाश्रभरीशमज्जनमदक्षीबाल-सैरागलप्रेमार्द्रैरपिकूलमुद्वहकृपासम्प्लावितास्माद्दशैः । पद्मे ते प्रतिबिन्दुबद्धकलिक-ब्रह्मादिविष्कम्भकरैश्वर्योद्गमगद्गदैरशरणं मा पालयालोकितैः ॥४१॥ पादाम्बुदमे-पङ्कजरजश्चेटीभृशालोकितैरङ्गम्लानिरथाम्ब । माद्दमविधौ लीलारविन्दग्रहः डोला ते वनमालया हरिभुजे हा कष्टशब्दास्पदं केन श्रीरतिकोमला तनुरियं वाच विमर्दक्षमा ॥४२॥ आमर्यादभकण्टकं स्तनयुगं नाथाऽपि नालोकितभ्रूभेदस्मित विभ्रमा जहति या नैसर्गिकत्वायशः । सूते शैशवयौवनव्यतिकरो गात्रेषु ते सौरभ भोगस्रोतसि कान्तदेशिककरग्राहेण गाहक्षम. ॥ ४३ ॥ आमोदाङ्कुरशालियौवन दशाव्याकोचमम्लानिमत्सौन्दर्यामृतसेकशीतलमिदं लावण्यसूत्रार्पितम् । श्रीरङ्गे श्वरि ! कोमलाङ्गसुमनःसन्दर्भणं देवि । ते कान्तारैः प्रतियत्नमर्हति कविन्धिङ्मा मकाण्डाकुलम् ॥ ४४ ॥ मर्मस्पृशोरसशिराव्यतिविद्धयवृत्तैः कान्तोपभोगललितैर्लु लिताङ्गयष्टिः । पुष्पावलीव रसिकभ्रमरोपभुक्ता त्वं देवि । नित्यमभिनन्दयसे मुकु न्दम् ॥४५॥ कनकरसनामुक्ताताटङ्कहारललाटिकामणिसरतुलाकोटिप्रायैर्जनार्दन जीविके । प्रकृतिमधुरं गात्रं जागर्ति मुग्धविभूषणैर्वलयशकलैर्दुग्धं पुष्पैश्च कल्पलता यथा ॥ ४६ ॥ सामान्यभोग्यमपि कौस्तुभवैजयन्ती पञ्चायुधादि रमणः स्वयमेव बिभ्रत् । तद्धारखेदमिव ते परिहर्तुकामः श्रीरङ्गधाममणिमञ्जरि ! गाहते त्वाम् ॥४७॥ यदि मनुजतिरश्चां लीलया तुल्यवृत्तेरनुजनुरनुरूपा देवि ! नावातरिष्यः । असर-समभविष्यन्नर्म नाथस्य मातर्दरदलदरविन्दोदन्तकान्तायताक्षी ॥४८॥ स्खलित-कटकमाल्यैर्दोर्भिरब्धि मुरारेर्भगवति । दधिमार्थं मथ्नतः श्रान्तिशान्त्यै । भ्रमद्-मृततरङ्गावर्ततः प्रादुरासीः स्मितनयनसुधाभिः सिञ्चती चन्द्रिकेव ॥४९॥ मात-र्मैथिलि राक्षसीस्त्वयि तदैवाद्रापराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य-गोष्ठी कृता । काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः सा नः सान्द्रमहागसः सुखयतु क्षान्तिस्तवाऽऽकस्मिकी ॥५०॥ मातर्लक्ष्मि ! यथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैर्भावैरिहामुत्र च । जामाता दयितस्तवेति भवती-

सम्बन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥५१॥ पितेव त्वत्प्रेयान् जननि ! परिपूर्णागसि जने हितः स्रोतोवृत्त्या भवति च कदाचित् कलुषधीः । किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता ! तदसि नः ॥५२॥ नेतुर्नित्यसहायिनी जननि ! नस्त्रातुं त्वमत्राऽऽगता लोके त्वन्महिमाववोधवधिरे प्राप्ता विमर्दं वहु । क्लिष्टं ग्रावसुमालतीमृदुपदं विश्लिष्य वासो वने जातो धिक्करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम् ॥ ५३ ॥ अधिशयितवानब्धिं नाथो ममन्थ ववन्ध तं हरधनुरसौ वल्लीभञ्जं वभञ्ज च मैथिलि ! । अपि दशमुखं लूत्वा रक्षःकवन्धमनर्त्तयत् किमिव न पतिः कर्त्ता त्वच्चाटुचुञ्चुमनोरथः ॥५४॥ दशशतपाणिपादवदनाक्षिमुखैरखिलैरपि निजवैश्वरूप्यविभवैरनुरूपगुणैः । अवतरणैरतैश्च रसयन् कमिता कमले ! क च नहि विभ्रमभ्रमिमुखे विनिमज्जति ते ॥५५॥ जननभवनप्रीत्या दुग्धार्णवं बहु मन्यसे जननि ! दयितप्रेम्णा पुष्णासि तत्परमं पदम् । उदधिपरमव्योम्नोर्विस्मृत्य मादृशरक्षणं क्षममिति धिया भूयः श्रीरङ्गधामनि मोदसे ॥५६॥ औदार्यकारुणिकताश्रितवत्सलत्वं पूर्वेषु सर्वमतिशायितमत्र मातः ! । श्रीरङ्गधाम्नि यदुतान्यदुदाहरन्ति सीतावतारमुखमेतदमुष्य योग्यम् ॥ ५७ ॥ ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य । अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब ! त्वं लज्जसे कथय कोऽयमुदारभावः ॥५८॥ ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहमिच्छाधिकारशकनानुशयानभिज्ञः । आगांसि देवि ! युवयोरपि दुःसहानि वध्नामि मूर्खचरितस्तव दुर्भरोऽस्मि ॥५९॥ इत्युक्तिकैतवशतेन विडम्बयामि तानम्ब ! सत्यवचसः पुरुषान् पुराणान् । यद्वा न मे भुजबलं तव पादपद्मलाभे त्वमेव शरणं विधितः कृताऽसि ॥६०॥ श्रीरङ्गे(ङ्गे)शरदां शतं सह सुहृद्वर्गेण निष्कण्टकं निर्दुःखं ससुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम् । युष्मत्पादसरोरुहान्तरजसः स्याम त्वमम्बा ! पिता सर्वं च त्वमपि त्वमेव भवतः स्वीकुर्वकस्मात् कृपाम् ॥ ६१ ॥ इति श्रीपराशरभट्टारकैर्विरचितं श्रीगुणरत्नकोशस्तोत्रं समाप्तम् ॥

---

# अथ कनकधाराश्रीलक्ष्मीस्तवराजः

श्रीमते रामानुजाय नमः । श्रीमान्वेङ्कटनाथार्य्यः कवितार्किककेसरी । वेदान्ताचार्य्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥ ईशाना जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं त्वद्वक्षस्स्थलनित्यवासरसिकां तत्क्षान्तिसम्वर्द्धिनीम् । पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीम्वन्दे जगन्मातरम् ॥ २ ॥ मानातीतप्रथितविभवां मङ्गलं मङ्गलानां वक्षःपीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या । प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां श्रेयोमूर्त्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ ३ ॥ आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलम्वा । भूमौ यस्या भुवनमखिलं देवि ! दिव्यं पदं वा स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ ४ ॥ स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना तामेव त्वामतितरगतिः स्तोतुमाशंसमानः । सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ५ ॥ यत्सङ्कल्पाद्भवति कमले ! यत्र देहिन्यमीषां जन्मस्थानप्रलयरचना जङ्गमाजङ्गमानाम् । तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजःस्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ६ ॥ निष्प्रत्यूहप्रणयघटितं देवि ! नित्यानपायं विष्णुस्त्वं चेत्यनवधिगुणैर्द्वन्द्वमन्योन्यलक्ष्यम् । शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां सम्पद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ७ ॥ उद्देश्यत्वं जननि ! भजतोरुज्झितोपाधिगन्धं प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् । पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो नावच्छेदं भजति महिमा नर्त्तयन्मानसं नः ॥ ८ ॥ पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्द्धम्मध्ये कृत्यं त्रिगुणफलकं निर्मितस्थानभेदम् । विश्वाधीशं प्रणयिनि सदा विभ्रमद्यूतवृत्तौ ब्रह्मेशाद्या दधति युवयोरक्षसारप्रचारम् ॥ ९ ॥ अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं लक्ष्मीः पद्मा

जलधिस्तनया विष्णुपत्नीन्दिरेति। यन्नामानि श्रुतिपरिमलान्येवमावर्त्तयन्तो नाऽऽ-वर्त्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ १० ॥ त्वामेवाऽऽहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किन्तैरन्तःकलहमलिनैः किञ्चिदुत्तीर्य्य मग्नैः। तत्सम्प्रीत्यै विहरति हरौ सम्मुखीनां श्रुतीनां भावारूढौ भगवति ! युवां दैवतं दम्पती नः ॥११॥ आपन्नार्त्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोराचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम्। प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १२ ॥ धत्ते शोभां हरिमरकते तावकी मूर्त्तिराद्या तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा। यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धावुत्पद्यन्ते ललितलहरीविभ्रमं व्यक्तयस्ते ॥१३॥ आसंसारं विततमखिलं वाङ्मयं यद्विभूतिर्यद्भ्रूभङ्गात्कुसुमधनुषः किङ्करो मेरुधन्वा। यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः पद्मे ! तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥ १४ ॥ अग्रे भर्त्तुः सरसिजमये भद्रपीठे निषण्णामम्भोराशेरधिगतसुधासम्प्लवादुत्थितां त्वाम्। पुष्पासारस्थगितभुवनैः पुष्कलावर्त्तकाद्यैर्दीप्तारम्भाः कनककलशैरभ्यषिञ्चन् गजेन्द्राः ॥ १५ ॥ आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां शापाक्रान्ताः शरणमगमन् सावरोधाः सुरेन्द्राः। लब्ध्वा भूयस्त्रिभुवनमिदं रक्षितं त्वत्कटाक्षैः सर्वाकारस्थिरसमुदयां सम्पदं निर्विशन्ति ॥ १६ ॥ आर्त्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहैरम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः। यस्यां यस्यां दिशि विहरते देवि ! दृष्टिस्त्वदीया तस्यां तस्यामहमहमिकां तन्वते सम्पदोघाः ॥१७॥ योगारम्भत्वरितमनसो युष्मदैकान्त्ययुक्तं धर्म्मं प्राप्तं प्रथममिह ये धारयन्ते धनाय। तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १८ ॥ श्रेयस्कामाः कमलनिलये चित्रमाम्नायवाचां चूडापीठं तव पदयुगं चेतसा धारयन्तः छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः श्लाघाशब्दश्रवणमुदितास्स्रग्विणस्सञ्चरन्ति ॥१९॥ ऊरीकर्त्तुं कुशलमखिलं जेतुमादीनरातीन् दूरीकर्त्तुं दुरितमखिलं त्यक्तुमाद्यामविद्याम्। अङ्गालम्भावधिकजननं ग्रामसीमान्तरेखामालम्बन्ते विमलमनसो विष्णु-

कान्ते । दयान्ते ॥२०॥ जाताकाङ्क्षा जननि । युवयोरेकसेवाधिकारे मायालीढं विभवमखिलं मन्यमानास्तृणाय । प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते वेलाभङ्गप्रशमनमलं वैदिकं धर्म्मसेतुम् ॥२१॥ सेवे देवि । त्रिदशमहिलामौलिमालार्चितन्ते सिद्धिक्षेत्रं शमितविपदां सम्पदां पादपद्मम् । यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं वर्त्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥२२॥ सानुप्रायप्रकटितदयैः शान्तवात्सल्यदिग्धैरम्भः स्निग्धैरमृतलहरीलब्धमद्ब्रह्मचर्य्यैः । धर्मे तापत्रयविरचिते गाढतप्तं क्षणं मामाकिञ्चन्यग्लपितमनघैरार्द्रयेथाः कटाक्षैः ॥२३॥ सम्पद्यन्ते भवभयतमी भानवस्त्वत्प्रसादाद्भावास्सर्वे भगवति ! हरौ भक्तिमुद्वेलयन्तः । याचे किन्त्वामहमिह यतः शीतलोदारशीला भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २४ ॥ माता देवि ! त्वमसि कमले ! वासुदेवः पिता मे जातः सोऽहं जननि । युवयोरेकलक्ष्यं दयायाः । दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं किन्ते भूयः प्रियमिति किल स्मेरवक्त्रा विभासि ॥ २५ ॥ कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा नित्यामोदा निगमवचसां मौलिमन्दारमाला । सम्पद्दिव्या मधुविजयिनः सन्निधत्तां सदा मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २६ ॥ उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात् कलिकलुषनिवृत्त्यै कल्प्यमानं प्रजानाम् । सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः सकलकुशलसीमासार्वभौमा भवन्ति ॥२७॥ कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥ २८ ॥ इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्य्यस्य कृतिषु कनकधाराश्रीलक्ष्मीस्तवराजः सम्पूर्णः ॥

---

## अथ शारदाभुजङ्गस्तोत्रम्

सुवक्षोजकुम्भां सुधापूर्णकुम्भां प्रसादावलम्बां प्रपुण्यावलम्बाम्। सदास्येन्दु-बिम्बां सदानोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम्॥ १॥ कटाक्षे दयार्द्रां करे ज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम्। पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम्॥ २॥ ललामाङ्कफालां लसद्गानलोलां स्वभक्तैकपालां यशःश्रीकपोलाम्। करे त्वक्षमालां कनत्प्रत्नलोलां भजे शारदाम्बामजस्रं मदम्बाम्॥ ३॥ सुसीमन्तवेणीं दृशा निर्जितैणीं रमत्कीरवाणीं नमद्वज्रपाणिम्। सुधामन्थ-रास्यां मुदा चिन्त्यवेणीं भजे शारदाम्बामजस्रं मदम्बाम्॥ ४॥ सुशान्तां सुदेहां दृगन्ते कचान्तां लसत्सल्लताङ्गीमनन्तामचिन्त्याम्। स्मरेत्तापसैः सङ्गपूर्वस्थितां तां भजे शारदाम्बामजस्रं मदम्बाम्॥ ५॥ कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे मराले मदेभे महोक्षेऽधिरूढाम्। महत्यां नवम्यां सदा सामरूपां भजे शारदाम्बामजस्रं मदम्बाम्॥ ६॥ ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीं भजे मानसाम्भोजसुभ्रान्त-भृङ्गीम्। निजस्तोत्रसङ्गीतनृत्यप्रभाङ्गीं भजे शारदाम्बामजस्रं मदम्बाम्॥ ७॥ भवाम्भोजनेत्राब्जसम्पूज्यमानां लसन्मन्दहासप्रभावक्त्रचिह्नाम्। चलच्चञ्चलाचारु-ताटङ्ककर्णां भजे शारदाम्बामजस्रं मदम्बाम्॥८॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यप्रणीतं शारदा-भुजङ्गस्तोत्रं सम्पूर्णम्॥

---

## अथ शारदापट्कस्तोत्रम्

वेदाभ्यासजडोऽपि यत्करसरोजातग्रहात्पद्मभूश्चित्रं विश्वमिदं तनोति विविधं वीतक्रियं सक्रियम्। तां तुङ्गातटवाससक्तहृदयां श्रीचक्रराजालयां श्रीमच्छङ्करदेशि-

आकलय्य खगेट् करोत्यम्ब तवाङ्घ्रिसेवाम् ॥२०॥ विष्णौ वीक्ष्य जडाधिवासमथ च स्वामिन्नशायित्वमप्यण्डोद्भूतपतिर्विहाय तमिमं विज्ञानरूपामयम् । त्वामेवाऽद्य निषेवते खलु मुदा वाग्देवि युक्तं च तत्को वा शत्रुसहासिका हि महते लोकेषु विद्वज्जनः ॥२१॥ भूताकाशचरेट् त्वमेव भुवने सिद्धं हि का तेन मे बुद्धिश्चाभवदित्यवेत्य खगराट् नूनं गिरा देवते । हार्दाकाशचराधिपत्यमपि मे भूयादितीच्छावशात्तत्प्राप्त्यै तव पादपङ्कजयुगीसेवा करोत्यादरात् ॥ २२ ॥ लोके ह्येकः पक्षः शुक्लश्चान्यश्च कृष्ण एवेह । द्वावपि शुक्लौ पक्षौ धत्ते गरुडः किमम्ब तव वाहः ॥ २३ ॥ हस्तान्तरस्थपरशुं शम्भोर्भूपार्थमाहृताम्नाणान् । दृष्ट्वा भीतो हरिणश्चरणं शरणं जगाम तव वाणि ! ॥ २४ ॥ समाश्रयेयं यदि पुष्करस्थमब्जं तदा स्यात्पतनं हि दर्शे । ममेति मत्वा मृगशावकोऽयं पदाब्जमेवाश्रयते तवाऽम्ब ! ॥२५॥ पिबेयुरपि मा सुरा यदि वसामि चन्द्रे तदेत्यपायरहितं पदं जिगमिषुश्चिरं सञ्चरन् । अपायवचनोज्झितं तव पदाब्जयोरन्तरं विलोक्य मृगशावको वसति तत्र वाग्देवि ! किम् ॥२६॥ लालयति वाणि ! किं त्वां पञ्चास्यः स्कन्धमारोप्य । युक्तमिदं भ्रातॄणां सोदर्याल्लालनं लोके ॥२७॥ नाथस्याऽपि ममानिवेद्य हरिणः सेवा कथं प्रातनोद्वाग्देव्याश्चरणाब्जयोरिति रुषा सारङ्गबालं भृशम् । त्वा शीघ्रप्रपलायनोत्सवपरं सेवा करोत्यादरादृष्ट्येशः स्वयमित्यवैमि करुणावारां निधे शारदे ! ॥२८॥ विष्णवधृत्वात्पालकत्वं ममाऽऽस्ते संहर्तृत्वं नैजमेवाऽस्ति किन्तु । स्रष्टृभावो वाणि ! नास्तीति मत्वा तत्प्राप्त्यै त्वा सेवते पञ्चवक्त्रः ॥ २९ ॥ उन्नम्य पादद्वितयं तुरङ्गो वदन्नितीवाऽस्ति गिरा मविचित्रि ! । विलङ्घयतां किं सरिदीश्वरोऽयमुत्प्लुत्य गच्छेयमथाम्बरं वा ॥ ३० ॥ पदे पदे दानववश्यता मे भवेच्छचीनाथसमीपवासे । उच्चैःश्रवा इत्यभिगम्य मातस्तवाङ्घ्रिसेवा प्रकरोति किं वा ॥ ३१ ॥ कुरङ्गंगस्तव दृष्टपूर्वस्तुरङ्गवेगं परिपश्य वाणि । इतीव गर्वादधिगम्य मातस्तुरङ्गमस्त्वा परिसेवते किम् ॥ ३२ ॥ विहङ्गं कुरङ्गं तुरङ्गं च वाहं विधायाशुगं श्रान्तिमासाद्य किं त्वम् । गजं मन्दगं वाहमथातनोषि प्रणम्य मे ब्रूहि वाचामधीशे ! ॥ ३३ ॥ जम्भारौ कौशिकत्वं ह्यथ

च तदनुजे वीक्ष्य सम्यग्धरित्वं त्यक्त्वा ह्रीसाध्वसाभ्यामयमिभकुलराट् तौ शरच्चन्द्रशुभ्रः। इन्द्रोपेन्द्रादिसेव्यामपि सकलसुराराध्यपादारविन्दां त्वामेवातिप्रमोदात्कमलजदयिते सेवते नूनमेतत् ॥३४॥ नतेष्टदानाय सदादयार्द्रकराम्बुजा त्वं यत एव वाणि! । तस्मादिभोऽप्येष तवाङ्घ्रिसङ्गाद्दानाम्बुसंसिक्तकरो विभाति ॥३५॥ मत्पादाब्जप्रणम्रं नरमतितरसा सेवते चेभमुख्या लक्ष्मीर्हस्ताग्रराजद्वरकनकमयस्रग्धरेत्येव बोधम्। कर्तुं हस्ताग्रराजद्वरकनकसरं नागराजं प्रधत्से वाणि! प्रब्रूहि किं त्वं कमलजहृदयाम्भोजसूर्यप्रभे मे ॥३६॥ त्यक्ष्यामि नैव रागं कालत्रितयेऽपि नम्रवर्गेषु। इति बोधनाय वाणी रक्तसुमानां त्रयं धत्ते ॥३७॥ एकः शुकः प्रसिद्धोऽस्ति पाराशर्यसुतः किल। शुकोऽपरस्तु को ब्रूहि शारदे! प्रणताय मे ॥३८॥ पद्मासनस्थे सरसीरुहोत्थजाये वस त्वं हृदये सदा मे। तेनाहमाशाः सकला जयेयं न तत्र सन्देहलवोऽस्ति मेऽद्य ॥ ३९ ॥

॥ इति श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिर्विरचितं शारदास्तोत्रं समाप्तम् ॥

---

## अथ सरस्वतीस्तोत्रम्

बृहस्पतिरुवाच। सरस्वति! नमस्यामि चेतनां हृदि संस्थिताम्। कण्ठस्थां पद्मयोनिं त्वां ह्रीङ्कारां सुप्रियां सदा ॥ १ ॥ मतिदां वरदां चैव सर्वकामफलप्रदाम्। केशवस्य प्रियां देवीं वीणाहस्तां वरप्रदाम् ॥ २ ॥ मन्त्रप्रियां सदा हृद्यां कुमतिध्वंसकारिणीम्। स्वप्रकाशां निरालम्बामज्ञानतिमिरापहाम् ॥ ३ ॥ मोक्षप्रियां शुभां नित्यां सुभगां शोभनप्रियाम्। पद्मोपविष्टां कुण्डलिनीं शुक्लवस्त्रां मनोहराम् ॥ ४ ॥ आदित्यमण्डले लीनां प्रणमामि जनप्रियाम्। ज्ञानाकारां जगद्दीपां भक्त-

महास्थूल महासूक्ष्म भयङ्कर ।। श्वेतपीताम्बरधर नीलवासो नमोऽस्तु ते ।।१७।। कुशेशय नमस्तेऽस्तु पद्मेशय जलेशय ! । गोविन्द प्रीतिकर्त्तश्च हंस पीताम्बरप्रिय ।।१८।। अधोक्षज नमस्तेऽस्तु शार्ङ्गध्वज जनार्दन ।। वामनाय नमस्तुभ्यं नमस्ते मधुसूदन ।।१९।। सहस्रशीर्षाय नमो ब्रह्मशीर्षाय वै नम । नम सहस्रनेत्राय सोमसूर्यानलेक्षण ! ।।२०।। नमश्चाऽथर्वशिरसे महाशीर्षाय ते नमः । नमस्ते धर्मनेत्राय महानेत्राय ते नमः ।।२१।। नमः सहस्रपादाय सहस्रभुजमन्यवे । नमो यज्ञवराहाय महारूपाय ते नमः ।।२२।। नमस्ते विश्वदेवाय विश्वात्मन् विश्वसम्भव । विश्वरूप नमस्तेऽस्तु त्वत्तो विश्वमभूदिदम् । न्यग्रोधस्त्वं महाशाखस्त्वं मूलकुसुमार्चितः ।। २३ ।। स्कन्धपत्राङ्कुरलतापल्लवाय नमोऽस्तु ते । मूलं ते ब्राह्मणाः स्कन्धाः क्षत्रिया भवतः प्रभो ! ।।२४।। वैश्याः शाखास्त्वचः शूद्रा ते नमोऽस्तु वनस्पते । ब्राह्मणाः साग्नयो वक्त्रात्सायुधा बाहुतो नृपाः ।।२५।। पार्श्वाद्विशश्चोरुयुगाज्जाताः शूद्राश्च पादतः । नेत्राद्भानुरभूत्त्वत्तः पद्भ्यां भूः श्रोत्रयोर्दिशः ।।२६।। नाभ्याश्चाभूदन्तरिक्षं शशाङ्को मनसस्तव । प्राणाद्वायुः समभवत्कामाद् ब्रह्मा पितामहः । क्रोधात्त्रिनयनो रुद्रः शीर्ष्णो द्यौः समवर्त्तत ।।२७।। इन्द्राग्नी वदनाज्जातौ पशवो मलसम्भवाः । ओषध्यो रोमसम्भूता विराजास्त्वं नमोऽस्तु ते ।।२८।। पुष्पहास नमस्तेऽस्तु महाहास नमोऽस्तु ते । ओङ्कारस्त्वं वषट्कारो वौषट् त्वं च सुधा स्वधा ।।२९।। स्वाहाकार नमस्तुभ्यं हन्तकार नमोऽस्तु ते । सर्वाकार निराकार वेदाकार नमोऽस्तु ते ।।३०।। त्वं हि वेदमयो देवः सर्वदेवमयस्तथा । सर्वतीर्थमयश्चैव सर्वयज्ञमयो रसः ।।३१।। नमस्ते यज्ञपुरुष यज्ञभागभुजे नमः । नमः सहस्रधाराय शतधाराय ते नमः । भूर्भुवः स्वः स्वरूपाय गोदायाऽमृतदायिने ।।३२।। सुवर्णब्रह्मदात्रे च सर्वधात्रे च ते नमः । ब्रह्मेशाय नमस्तुभ्यं ब्रह्मणे ब्रह्मरूपधृक् ।।३३।। परब्रह्म नमस्तेऽस्तु शब्दब्रह्म नमोऽस्तु ते । विद्या त्वं वेद्यरूपस्त्वं वन्दनीयस्त्वमेव च ।।३४।। बुद्धिस्त्वमपि बोध्यश्च बोद्धा त्वं च नमोऽस्तु ते । होता होमश्च हव्यश्च हूयमानश्च हव्यवाट् ।।३५।। पाता पोता च पूतश्च पावनीयश्च ॐ नमः । हन्ता च हन्यमानश्च क्रियमाणस्त्वमेव च ।।३६।। हर्त्ता नेता च नीतिश्च पूज्योऽग्र्यो विश्वधार्यपि । स्रुक्

स्रुवो विश्वधामाऽसि कपालोलूखलोऽरणिः ॥ ३७ ॥ यज्ञपात्रारणे ! यस्त्वमेकधा बहुधा त्रिधा । यज्ञस्त्वं यजमानस्त्वमीड्यस्त्वमसि याजकः ॥३८॥ ज्ञाता ज्ञेयस्तथा ज्ञानं ध्याता ध्येयोऽसि चेश्वर ! ध्यानयोगश्च योगी च गतिर्मोक्षो धृतिः सुखम् ॥३९॥ योगाङ्गानि त्वमीशानः सर्वगस्त्वं नमोऽस्तु ते । ब्रह्मा होता तथोद्गाता सोमयूपोऽथ दक्षिणा ॥४०॥ दीक्षा त्वं त्वं पुरोडाशस्त्वं पशुः पशुहा ह्यसि । गुह्यो धाता परमसि नरो नारायणस्तथा ॥४१॥ महाजनो निरयणः सहस्रार्केन्दुरूपवान् । द्वादशारोऽथ षण्णाभिस्त्रिव्यूहो द्विगुणस्तथा ॥४२॥ कालचक्रो महामेधाः शम्भुः शक्रः प्रभञ्जनः । मित्रावरुणमूर्त्तिस्त्वममूर्त्तिरनघः शुभः ॥ ४३ ॥ प्राग्वंशकायो भूतादिर्महाभूतोऽच्युतो द्विजः । त्वमूर्ध्वकेतोर्ध्वधर ! ऊर्ध्वरेता नमोऽस्तु ते ॥४४॥ महापातकहा त्वं च उपपातकहा तथा । मुनीशः सर्वपापघ्नस्त्वामहं शरणं गतः । इत्येतत्परमं स्तोत्रं सर्वपापप्रमोचनम् ॥४५॥ केशवस्याग्रतोगत्वा स्नात्वा तीर्थोदके शुभे । महेश्वरेणगदितं वाराणस्यां पुरा मुने ! ॥४६॥ उपशान्तस्तदाजातो रुद्रः पापोपशान्तितम् । एतत् पवित्रं त्रिपुरघ्नभाषितं पठन्नरो विष्णुपुरे महर्षे ! विमुक्तपापोऽप्युपशान्तमूर्तिः सम्पूज्यते देववरैः ससिद्धैः ॥४७॥ इति श्रीवामनपुराणोक्तं पापप्रशमनं श्रीजगन्नाथस्तोत्रं समाप्तम् ॥

---

# कूर्मपुराणोक्तं वाराहस्तोत्रम्

ऋषय ऊचुः । नमस्ते देवदेवाय ब्रह्मणे परमेष्ठिने । पुरुषाय पुराणाय शाश्वताय जयाय च ॥ १ ॥ नमः स्वयम्भुवे तुभ्यं स्रष्ट्रे सर्वार्थवेदिने । नमो हिरण्यगर्भाय वेधसे परमात्मने ॥ २ ॥ नमोऽस्तु वासुदेवाय विष्णवे विश्वयोनये । नारायणाय देवाय देवानां हितकारिणे ॥ ३ ॥ नमस्तेऽस्तु चतुर्वक्त्र शार्ङ्गचक्रासिधारिणे । सर्वभूतात्मभूताय कूटस्थाय नमो नमः ॥ ४ ॥ नमो वेदरहस्याय नमस्ते वेदयोनये । नमो बुद्धाय शुद्धाय नमस्ते ज्ञानरूपिणे ॥ ५ ॥ नमोऽस्त्वानन्दरूपाय

साक्षिणे जगतां नम । अनन्तायाप्रमेयाय कार्याय कारणाय च ॥ ६ ॥ नमस्ते पञ्चभूताय पञ्चभूतात्मने नमः। नमो मूलप्रकृतये मायारूपाय ते नमः॥ ७॥ नमोऽस्तु ते वराहाय नमस्ते मत्स्यरूपिणे। नमो योगाधिगम्याय नमः सङ्कर्षणाय ते ॥८॥ नमः त्रिमूर्तये तुभ्यं त्रिधाम्ने दिव्यतेजसे। नमः सिद्धाय पूज्याय गुणत्रयविभागिने ॥९॥ नमोऽस्त्वादित्यरूपाय नमस्ते पद्मयोनये। नमोऽमूर्त्ताय मूर्त्ताय माधवाय नमो नमः॥ १० ॥ त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम्। पालयैतज्जगत्सर्वं त्राता त्वं शरणं गतिः॥ ११ ॥

॥ इति श्रीकूर्मपुराणे वाराहस्तोत्रं सम्पूर्णम् ॥

---

## विष्णुपुराणोक्तं विष्णुस्तोत्रम्

तत्रेश ! तव यत्पूर्वं त्वन्नाभिकमलोद्भवम्। रूपं सर्गोपकाराय तस्मै ब्रह्मात्मने नमः ॥ १ ॥ शक्रार्कचन्द्रवस्वाश्विमरुत्सोमादिभेदवत्। वयमेव स्वरूपं यत् तस्मै देवात्मने नमः ॥ २ ॥ दम्भप्रायमसम्बोधि तितिक्षादमवर्जितम्। यद्रूपं तव गोविन्द तस्मै दैत्यात्मने नमः॥३॥ नाऽतिज्ञानवहा यस्मिन् नाड्यस्तिमित तेजसि। शब्दादिलोभि यत्तस्मै तुभ्यं यक्षात्मने नमः॥ ४ ॥ क्रौर्यमायामयं घोरं यच्चरूपं तवासितम्। निशाचरात्मने तस्मै नमस्ते पुरुषोत्तम !॥ ५ ॥ स्वर्गस्थधर्मिसद्धर्मफलोपकरणं तव। धर्माख्यं च तथा रूपं नमस्तस्मै जनार्दन !॥ ६ ॥ हर्षप्रायमसंसर्गि गतिमद्गमनादिषु। सिद्धाख्यं तव यद्रूपं तस्मै सिद्धात्मने नमः ॥ ७ ॥ अतितिक्षाधनं क्रूरमुपभोगमयं हरे !। द्विजिह्वं तव यद्रूपं तस्मै सर्पात्मने नमः ॥ ८ ॥ अवबोधि च यच्छान्तमदोषमपकल्मषम्। ऋषिरूपात्मने तस्मै विष्णुरूपाय ते नमः॥९॥ भक्षयत्यथ भूतानि 'यत् कल्पान्ते' च वारितम्। त्वद्रूपं पुण्डरीकाक्ष तस्मै कालात्मने नमः॥१०॥ सम्भक्ष्य सर्वभूतानि देवादीन्यविशे-

पतः । नृत्यत्यन्ते च यद्रूपं तस्मै रुद्रात्मने नमः ॥११॥ प्रकृत्या रजसो यच्च कर्मणां कारकात्मकम् । जनार्दन ! नमस्तस्मै त्वद्रूपाय नरात्मने ॥१२॥ अष्टाविंशद्वधोपेतं यद्रूपं तामसं तव । उन्मार्गगामिसर्वात्मन् तस्मै पश्वात्मने नमः ॥ १३ ॥ यज्ञाङ्गभूतं यद्रूपं जगतः सिद्धिसाधनम् । वृक्षादिभेदैर्यद्भेदि तस्मै मुख्यात्मने नमः ॥१४॥ तिर्यङ्मानुपदेवादिव्योमशब्दादिकं च यत् । रूपं तवादेः सर्वस्य तस्मै सर्वात्मने नमः ॥ १५ ॥ प्रधानबुद्ध्यादिमयादशेपाद् यदन्यदस्मात् परमं परात्मन् । रूपं तवाद्यं न यदन्यतुल्यं तस्मै नमः कारणकारणाय ॥१६॥

॥ इति विष्णुपुराणोक्तं श्रीविष्णुस्तोत्रं सम्पूर्णम् ॥

---

## गारुडोक्तं विष्णुपञ्जरस्तोत्रम्

नमो नमस्ते गोविन्द चक्रं गृह्य सुदर्शनम् । प्राच्यां रक्षस्व मां विष्णो ! त्वामहं शरणं गतः ॥ १ ॥ हलमादाय सौनन्द नमस्ते पुरुपोत्तम ! । प्रतीच्यां रक्ष मां विष्णो ! त्वामहं शरणं गतः ॥ २ ॥ मुसलं शातनं गृह्य पुण्डरीकाक्ष रक्ष माम् । उत्तरस्यां जगन्नाथ ! भवन्तं शरणं गतः ॥ ३ ॥ खड्गमादाय चर्म्माऽथ अस्त्रशस्त्रादिकं हरे ! । नमस्ते रक्ष रक्षोघ्न ऐशान्यां शरणं गतः ॥ ४ ॥ पाञ्चजन्यं महाशङ्खं मनुद्बोधं च पङ्कजम् । प्रगृह्य रक्ष मां विष्णो ! आग्नेय्यां रक्ष शूकर ! ॥५॥ चन्द्रसूर्यं समागृह्य खड्गं चान्द्रमसं तथा । नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्ते नृकेशरिन् ॥ ६ ॥ वैजयन्तीं सम्प्रगृह्य श्रीवत्सं कण्ठभूपणम् । वायव्यां रक्ष मां देव ! हयग्रीव नमोऽस्तु ते ॥ ७ ॥ वैनतेयं समारुह्य त्वन्तरिक्षे जनार्दन ! । माञ्च रक्षाजित सदा नमस्तेऽस्त्वपराजित ! ॥ ८ ॥ गदां कौमोदकीं गृह्य पद्मनाभ नमोऽस्तु ते । याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ॥९॥ विशालाक्षं समारुह्य

रक्ष मा त्वं रसातले। अकूपार नमस्तुभ्यं महामीन नमोऽस्तु ते ॥१०॥ करशीर्षाद्यङ्गुले(ली?)षु सत्य! त्वं बाहु पञ्जरम्। कृत्वा रक्षस्व मा विष्णो! नमस्ते पुरुषोत्तम ॥११

॥ इति गारुडोक्तं श्रीविष्णुपञ्जरस्तोत्रं सम्पूर्णम् ॥

---

## गारुडे विष्णुस्तोत्रम्

श्रीनिवासाय देवाय नमः श्रीपतये नमः। श्रीधराय स शार्ङ्गाय श्रीप्रदाय नमोनमः ॥ १ ॥ श्रीवल्लभाय शान्ताय श्रीमते च नमो नमः। श्रीपर्वतनिवासाय नमः श्रेयस्कराय च ॥ २ ॥ श्रेयसां पतये चैव ह्याश्रमाय नमोनमः। नमः श्रेयःस्वरूपाय श्रीकराय नमो नमः ॥ ३ ॥ शरण्याय वरेण्याय भूयो भूयो नमो नमः। स्तोत्रं कृत्वा नमस्कृत्य देवदेवं विसर्जयेत् ॥ ४ ॥

॥ इति गारुडे श्रीविष्णुस्तोत्रं समाप्तम् ॥

---

## अथ वैष्णवं स्तोत्रम्

विष्णवे देवदेवाय नमो वै प्रभविष्णवे। विष्णवे वासुदेवाय नमः स्थितिकराय च ॥ १ ॥ ग्रसिष्णवे नमश्चैव नमः प्रलयशायिने। देवानां प्रभवे चैव यज्ञानां प्रभवे नमः ॥ २ ॥ मुनीनां प्रभवे नित्यं यक्षाणां प्रभविष्णवे। जिष्णवे सर्वदेवानां सर्वगाय महात्मने ॥ ३ ॥ ब्रह्मेन्द्ररुद्रवन्द्याय सर्वेशाय नमो नमः। सर्वलोकहितार्थाय लोकाध्यक्षाय वै नमः ॥ ४ ॥ सर्वगोप्त्रे सर्वकर्त्रे सर्वदुष्टविनाशिने। वरप्रदाय शान्ताय वरेण्याय नमोनमः ॥ ५ ॥ शरण्याय स्वरूपाय धर्मकामार्थदायिने। स्तुत्वा ध्यायेत् स्वहृदये ब्रह्मरूपिणमव्ययम्। एवं तु पूजयेद्विष्णुं मूलमन्त्रेण शङ्कर! ॥ ६ ॥

मूलमन्त्रश्चाऽयम्—ॐ अं वासुदेवाय नमः ॐ आं आं सङ्कर्षणाय नमः ॐ अं प्रद्युम्नाय नमः। ॐ अनिरुद्धाय नमः। ॐ नारायणाय नमः।

ॐ नमो वासुदेवाय नमः सङ्कर्षणाय च। प्रद्युम्नायाऽऽदिदेवाय अनिरुद्धाय नमो नमः॥ १॥ नमो नारायणायैव नराणां पतये नमः। नरपूज्याय स्तुत्याय कीर्त्याय वरदाय च॥ २॥ अनादिनिधनायैव पुराणाय नमो नमः। सृष्टि-संहारकर्त्रे च ब्रह्मणः पतये वमः॥ ३॥ नमो वै वेदवेद्याय शङ्खचक्रधराय च। कलिकल्मषत्रात्रे च सुरेशाय नमो नमः॥ ४॥ संसारवृक्षक्षेत्रे च मायाभेत्त्रे नमोनमः। बहुरूपाय तीर्थाय त्रिगुणाय नमोनमः॥ ५॥ ब्रह्मविष्णवीशरूपाय मोक्षदाय नमो नमः। मोक्षद्वाराय धर्माय निर्वाणाय नमोनमः॥ ६॥ सर्वकाम-प्रदायैव परब्रह्मस्वरूपिणे। संसारसागरे घोरे निमग्नं मां समुद्धर॥ ७॥ त्वदन्यो नास्ति देवेश! नास्ति त्राता जगत्प्रभो!। त्वामेव सर्वगं विष्णुं गतोऽहं शरणं विभो!। ज्ञानप्रदीपदानेन तमोमुक्तं प्रकाशय॥ ८॥

॥ इति श्रीवैष्णवं स्तोत्रं समाप्तम्॥

---

# गारुडे सुदर्शनस्तोत्रम्

नमः सुदर्शनायैव सहस्रादित्यवर्चसे। ज्वालामालाप्रदीप्ताय सहस्राराय-चक्षुषे॥ १॥ सर्वदुष्टविनाशाय सर्वपातकमर्दिने। सुचक्राय विचक्राय सर्वमन्त्र-विभेदिने॥ २॥ प्रसवित्रे जगद्धात्रे जगद्विध्वंसिने नमः। पालनार्थाय लोकानां दुष्टासुरविनाशिने॥ ३॥ उग्राय चैव सौम्याय चण्डाय च नमो नमः। नम-श्चक्षुःस्वरूपाय संसाररूपभेदिने॥ ४॥ मायापञ्जरभेत्त्रे च शिवाय च नमो नमः। ग्रहातिग्रहरूपाय ग्रहाणां पतये नमः॥ ५॥ कालाय मृत्यवे चैव भीमाय

च नमोनमः । भक्तानुग्रहदात्रे च भक्तगोप्त्रे नमोनमः ॥६॥ विष्णुरूपाय शान्ताय चायुधाना धराय च । विष्णुशस्त्राय चक्राय नमो भूयो नमो नमः ॥ ७ ॥

॥ इति गारुडे श्रीसुदर्शनस्तोत्रं सम्पूर्णम् ॥

---

## गारुडे हयग्रीवस्तोत्रम्

ॐ नमो हयशिरसे विद्याध्यक्षाय वै नमः । नमो विद्यास्वरूपाय विद्या दात्रे नमोनमः ॥ १ ॥ नमः शान्ताय देवाय त्रिगुणायात्मने नमः । सुरासुरनिहन्त्रे च सर्वदुष्टविनाशिने ॥ २ ॥ सर्वलोकाधिपतये ब्रह्मरूपाय वै नमः । नमस्येश्वरवन्द्याय शङ्खचक्रधराय च ॥ ३ ॥ नमआद्याय दान्ताय सर्वसत्त्वहिताय च । त्रिगुणाया-गुणायैव ब्रह्मविष्णुस्वरूपिणे ॥ ४ ॥ कर्त्रे हर्त्रे सुरेशाय सर्वगाय नमो नमः । इत्येवं संस्तवं कृत्वा देवदेवं विचिन्तयेत् ॥ ५ ॥ हृत्पद्मे विमले रुद्र । शङ्खचक्रगदाधरम् । सूर्यकोटिप्रतीकाशं सर्वावयवसुन्दरम् ॥ ६ ॥ हयग्रीवं महेशेश ! परमात्मान-मव्ययं । इति ते कथिता पूजा हयग्रीवस्य शङ्कर ! । यः पठेत् परया भक्त्या स गच्छे-त्परमं पदम् ॥ ७ ॥

॥ इति गारुडे श्रीहयग्रीवस्तोत्रं समाप्तम् ॥

---

## वामने पापप्रणाशनविष्णुस्तोत्रम्

पुलस्त्य उवाच । द्वितीयं पापशमनं स्तवं वक्ष्यामि ते मुने ।। येन सम्यगधीतेन पापं नाशं तु गच्छति ॥ १ ॥ मत्स्यं नमस्ये देवेशं कूर्मन्देवेशमेव च । हयशीर्षं नमस्येऽहं भवं विष्णुं त्रिविक्रमम् ॥ २ ॥ नमस्ये माधवेशानौ हृषीकेशकुमारिलौ । नारायण नमस्येऽहं नमस्ते गरुडासनम् ! ॥३॥ जयेश नरसिंहञ्च रूपधारं कुरुध्व-

जम्। कामपालमखण्डं च नमस्ये ब्राह्मणप्रियम् ॥ ४ ॥ अजितं विश्वकर्माणं पुण्डरीकं द्विजप्रियम्। हरिं शम्भुं नमस्ये च ब्रह्माणं सप्रजापतिम् ॥ ५ ॥ नमस्ये शूलबाहुं च देवं चक्रधरं तथा। शिवं विष्णुं सुवर्णाक्षं गोपतिं पीतवाससम् ॥ ६ ॥ नमस्ये च गदापाणिं नमस्ये च कुशेशयम्। अर्धनारीश्वरं देवं नमस्ये पापनाशनम् ॥ ७ ॥ गोपालं च सवैकुण्ठं नमस्ये चापधारिणम्। नमस्ये विष्णुरूपं च ज्येष्ठेशं पश्चिमं तथा ॥ ८ ॥ उपशान्तं नमस्येऽहं मार्कण्डेयं सजम्बुकम्। नमस्ये पद्मकिरणं नमस्ये वड़वामुखम् ॥ ९ ॥ कार्त्तिकेयं नमस्येऽहं बाह्लिकं शङ्खिनं तथा। नमस्ये पद्मकिरणं नमस्ये च कुशेशयम् ॥१०॥ नमस्ये स्थाणुमनघं नमस्ये वनमालिनम्। नमस्ये लाङ्गलीशं च नमस्येऽहं श्रियः पतिम् ॥११॥ नमस्ये च त्रिनयनं नमस्ये हव्यवाहनम्। नमस्ये च त्रिसौवर्णं नमस्ये धरणीधरम् ॥ १२ ॥ त्रिणाचिकेतं ब्रह्माणं नमस्ये शशिभूषणम्। कपर्दिनं नमस्ये च सर्वामयविनाशनम् ॥ १३ ॥ नमस्ये शशिनं सूर्यं ध्रुवं रुद्रं महौजसम्। पद्मनाभं हिरण्याक्षं नमस्ये स्कन्दमव्ययम् ॥१४॥ नमस्येऽहं भीमहंसौ नमस्ये हाटकेश्वरम्। सदाहंसं नमस्ये च नमस्ये प्राणतर्पणम् ॥ १५ ॥ नमस्ये रुक्मकवचं महायोगिनमीश्वरम्। नमस्ये श्रीनिवासं च नमस्ये पुरुषोत्तमम् ॥ १६ ॥ नमस्ये च चतुर्बाहुं नमस्ये च सुधाधिपम्। वनस्पतिं मधुपतिं नमस्ये मनुमव्ययम् ॥ १७ ॥ श्रीकण्ठं वासुदेवं च नीलकण्ठं सदाशिवम्। नमस्ये सर्वमनघं गौरीशं लकुड़ेश्वरम् ॥ १८ ॥ मनोहरं च कृष्णेशं नमस्ये चक्रपाणिनम्। यशोधरं महाबाहुं नमस्ये च कुशप्रियम् ॥१९॥ भूधरं छादितगदं सुनेत्रं सुरशंसितम्। भद्राक्षं वीरभद्रश्च नमस्ये शङ्कुकर्णिनम् ॥२०॥ वृषध्वजमहेशं च विश्वमित्रं शशिप्रभम्। उपेन्द्रश्च सगोविन्दं नमस्ये पङ्कजप्रियम् ॥२१॥ सहस्रशिरसं देवं नमस्ये कुन्दमालिनं। कालाग्निरुद्रदेवेशं नमस्ये कृत्तिवाससम् ॥२२॥ नमस्ये छागलेशं च नमस्ये पङ्कजाशनम्। सहस्राक्षं कोकनदं नमस्ये हरिशङ्करम् ॥२३॥ अगस्त्यं गरुड़ं विष्णुं कपिलं ब्रह्मवाङ्मयम्। सनातनं च ब्रह्माणं नमस्ये ब्रह्म तत्परम् ॥२४॥ सहस्राक्षं कोकनदं नमस्ये हरिशङ्करम्। अगस्त्यं गरुड़ं विष्णुं कपिलं ब्रह्मवाङ्मयम् ।२५।

सनातनञ्च ब्रह्माणं नमस्ये ब्रह्मतत्परम्। अप्रतर्क्यं चतुर्बाहुं सहस्रांशुं तपोमयम् ॥ २६ ॥ नमस्ये धर्मराजानं देवं गरुड़वाहनम्। सर्वभूतगतं शान्तं निर्मलं सर्वलक्षणम् ॥ २७ ॥ महायोगिनमव्यक्तं नमस्ये पापनाशनम्। निरञ्जनं निराकारं निर्गुणं निलयं पदम्। नमस्ये पापहर्त्तारं शरण्यं शरणं व्रजे ॥२८॥ एतत्पवित्रं परमं पुराणं प्रोक्तं त्वगस्त्येन महर्षिणा च। धन्यं यशस्यं बहुपापनाशनं सङ्कीर्त्तनात्स्मरणात्स्पर्शनाच्च ॥२९॥ इति श्रीवामनपुराणोक्तम्पापप्रणाशनविष्णुस्तोत्रं समाप्तम् ॥

---

## श्रीकमलापत्यष्टकम्

भुजगतल्पगतं घनसुन्दरं गरुड़वाहनमम्बुजलोचनम्। नलिन चक्रगदाकरमव्ययं भजत रे मनुजाः। कमलापतिम् ॥१॥ अलिकुलासितकोमलकुन्तलं विमलपीतदुकूलमनोहरम्। जलधिजाङ्कित(श्रित)वामकलेवरं भजत रे मनुजाः। कमलापतिम् ॥ २ ॥ किमु जपैश्च तपोभिरुताध्वरैरपि किमुत्तमतीर्थनिषेवणैः। किमुत शास्त्रकदम्बविलोकनैर्भजत० ॥ ३ ॥ मनुजदेहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वाञ्छितम्। विषयलम्पटतामपहाय वै भजत० ॥ ४ ॥ न वनिता न सुतो न सहोदरो न हि पिता जननी न च बान्धवाः। व्रजति साकमनेन जनेन वै भजत० ॥ ५ ॥ सकलमेव चलं सचराचरं जगदिदं सुतरां धनयौवनम्। समवलोक्य विवेकदृशा द्रुतं भजत० ॥ ६ ॥ विविधरोगयुतं क्षणभङ्गुरं परवशं नवमार्गमलाकुलम्। परिनिरीक्ष्य शरीरमिदं स्वकं भजत० ॥ ७ ॥ मुनिवरैरनिशं हृदि भावितं शिवविरिञ्चिमहेन्द्रनुतं सदा। मरणजन्मजराभयमोचनं भजत० ॥ ८ ॥ हरिपदाष्टकमेतदनुत्तमं परमहंसजनेन समीरितम्। पठति यस्तु समाहितचेतसा व्रजति विष्णुपदं स नरो ध्रुवम् ॥ ९ ॥ इति श्रीकमलापत्यष्टकम् सम्पूर्णम् ॥

---

## श्रीरामाष्टकम्

कृतार्त्तदेववन्दनं दिनेशवंशनन्दनम्। सुशोभिभालचन्दनं नमामि राममीश्वरम्। मुनीन्द्रयज्ञकारकं शिलाविपत्तिहारकं महाधनुर्विदारकम् नमामि राममीश्वरम्॥ स्वतातवाक्यकारिणं तपोवनेविहारिणम्। करेसुचापधारिणं नमामि०॥ कुरङ्गमुक्तशायकं जटायुमोक्षदायकम्। प्रविद्धकीशनायकम् नमामि०॥ प्लवङ्गसङ्गसम्मतिं निबद्धनिम्नगापतिम्। दशास्यवंशसङ्क्षतिं नमामि०॥ विदीनदेवहर्षणं कपीप्सितार्थवर्षणम् स्वबन्धुशोककर्षणं नमामि राममीश्वरम्॥ गतारिराज्यरक्षणं प्रजाजनार्त्तिभक्षणम्। कृतास्तमोहलक्षणं नमामि०॥ हृताखिलाचलाभरं स्वधामनीतनागरम् जगत्तमो दिवाकरं नमामि०॥ इदं समाहितात्मना नरोरघूत्तमाष्टकम्। पठन्निरन्तरं भयं भवोद्भवं न विन्दते॥

॥ इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं श्रीरामाष्टकं समाप्तम्॥

---

## श्रीरामचन्द्राष्टकम्

चिदाकारोधाता परमसुखदः पावनतनुः। मुनीन्द्रैर्योगीन्द्रैर्यतिपतिसुरेन्द्रैर्हनुमता। सदा सेव्यः पूर्णो जनकतनयाङ्गः सुरगुरुः रमानाथो रामो रमतु मम चित्ते तु सततम्॥ १॥ मुकुन्दो गोविन्दो जनकतनयालालितपदः पदं प्राप्ता यस्याऽधमकुलभवा चाऽपि शबरी। गिरातीतोऽगम्यो विमलधिषणैर्वेदवचसा रमा०॥ २॥ धराधीशोऽधीशः सुरनरवराणां रघुपतिः किरीटी केयूरी कनककपिशः शोभितवपुः। समासीनः पीठे रविशतनिभे शान्तमनसो रमा०॥ ३॥ वरेण्यः शारण्यः कपिपति सखाश्चान्तविधुरो ललाटे काश्मीरो रुचिरगतिभङ्गः

विद्यातेजस्तपोमूर्त्तिमिमं मन्त्रमुदाहरेत् ॥ ११ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे। दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥१२॥ जलेषु मां रक्षतु मत्स्यमूर्त्तिर्यादोगणेभ्यो वरुणस्य पाशात्। स्थलेषु माया-वटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥१३॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः। विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१४॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः। रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥१५॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात्। दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१६॥ सनत्कुमारोऽवतु कामदेवाद्धयाननो मां पथि देवहेलनात्। देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ धन्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा। यज्ञश्च लोकादवताज्जनान्ताद्बलो गणात्क्रोधवशादहीन्द्रः ॥१८॥ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषण्डगणात्प्रमादात्। कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥१९॥ मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गव आत्तवेणुः। नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम्। दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥२१॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः। दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्त्तिः ॥२२॥ चक्रं युगान्तानलतिग्मनेमि भ्रमत्समन्ताद्भगवत्प्रयुक्तम्। दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥ गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि। कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥२४॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन्। दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २५ ॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि। चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २६ ॥ यन्नो भयं

ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च। सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥२७॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्त्तनात्। प्रयान्तु संक्षयं सद्यो येऽन्ये श्रेयः-प्रतीपकाः ॥२८॥ गरुडो भगवांस्तोत्रस्तोभश्छन्दोमयः प्रभुः। रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनस्य वाहनम् ॥२९॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः। बुद्धी-न्द्रियमनः प्राणान् पान्तु पार्षदभूषणाः ॥३०॥ यथा हि भगवानेव वस्तुतः सदसच्च यत्। सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम्। भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥३२॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः। पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥३३॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः। प्रहापयंल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम्। विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा। पदा वा संस्पृशेत् सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्। राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ॥३७॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः। योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३८॥ तस्योपरि विमानेन गन्धर्वपतिरेकदा। ययौ चित्ररथः स्त्रीभि-र्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः। स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ ४० ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात्। यं इदं शृणुयात्काले यो धारयति चादृतः। तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४१ ॥ श्रीशुक उवाच। एतां विद्यामधिगतो विश्वरूपा-च्छतक्रतुः। त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥

॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नारायणवर्म सम्पूर्णम् ॥

---

# विष्णुपञ्जरस्तोत्रम्

ॐ अस्य श्रीविष्णुपञ्जरस्तोत्रमन्त्रस्य नारद ऋषिः। अनुष्टुप् छन्दः। श्रीविष्णु परमात्मा देवता। अहं बीजम्। सोऽहं शक्तिः। ॐ ह्रीं कीलकम्। मम सर्वदेहरक्षणार्थं(र्थे)जपे विनियोगः। नारदऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमः मुखे। श्रीविष्णुपरमात्मदेवतायै नमः हृदये। अहं बीजाय नमः गुह्ये। सोऽहं शक्तये नमः पादयोः। ॐ ह्रीं कीलकाय नमः पादाग्रे। ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति मन्त्रः। ॐ ह्रां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः। ॐ ह्रूं मध्यमाभ्यां नमः। ॐ ह्रैं अनामिकाभ्यां नमः। ॐ ह्रौं कनिष्ठिकाभ्यां नमः। ॐ ह्रः करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। अथ हृदयादिन्यासः। ॐ ह्रां हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ॐ ह्रूं शिखायै वषट्। ॐ ह्रैं कवचाय हुम्। ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्। इति अङ्गन्यासः। अहं बीजप्राणायामं मन्त्रत्रयेण कुर्यात्। (अहं बीजादिमन्त्रत्रयेण प्राणायामं कुर्यात्)। अथ ध्यानम्। परं परस्मात्प्रकृतेरनादिमेकं निविष्टं बहुधा गुहायाम्। सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम् ॥१॥ ॐ विष्णुपञ्जरकं दिव्यं सर्वदुष्टनिवारणम्। उग्रतेजो महावीर्यं सर्वशत्रुनिकृन्तनम् ॥ २ ॥ त्रिपुरं दहमानस्य हरस्य ब्रह्मणोदितम्। तदहं सम्प्रवक्ष्यामि आत्मरक्षाकरं नृणाम् ॥ ३ ॥ पादौ रक्षतु गोविन्दो जङ्घे चैव त्रिविक्रमः। ऊरू मे केशवः पातु कटिं चैव जनार्दनः ॥४॥ नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः। उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः ॥५॥ वामपार्श्वं तथा विष्णुर्दक्षिणं मधुसूदनः। बाहू वै वासुदेवश्च हृदि दामोदरस्तथा ॥ ६ ॥ कण्ठं रक्षतु वाराहः कृष्णश्च मुखमण्डलम्। माधवः कर्णमूले तु हृषीकेशश्च नासिके ॥ ७ ॥ नेत्रे नारायणो रक्षेल्ललाटं गरुडध्वजः। कपोलौ केशवो रक्षेद्वैकुण्ठः सर्वतो दिशम् ॥ ८ ॥ श्रीवत्साङ्कश्च सर्वेषामङ्गानां रक्षको । पूर्वस्यां पुण्डरीकाक्ष आग्नेय्यां श्रीधरस्तथा ॥ ९ ॥ दक्षिणे नार- [illegible] माधवोऽवतु। पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः ॥१०॥

गदाधरस्तु कौबेर्यामीशान्यां पातु केशवः। आकाशे च गदा पातु पाताले च सुदर्शनम् ॥११॥ सन्नद्धः सर्वगात्रेषु प्रविष्टो विष्णुपञ्जरः। विष्णुपञ्जरविष्टोऽहं विचरामि महीतले ॥१२॥ राजद्वारेऽपथे घोरे सङ्ग्रामे शत्रुसङ्कटे। नदीषु च रणे चैव चोरव्याघ्रभयेषु च ॥ १३ ॥ डाकिनीप्रेतभूतेषु भयं तस्य न जायते। रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ! ॥१४॥ रक्षन्तु देवताः सर्वा ब्रह्मविष्णुमहेश्वराः। जले रक्षतु वाराहः स्थले रक्षतु वामनः ॥१५॥ अटव्यां नारसिंहश्च सर्वतः पातु केशवः। दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चन्द्रमाः ॥ १६ ॥ पन्थानं दुर्गमं रक्षेत्सर्वमेव जनार्दनः। रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः ॥ १७ ॥ स्त्रीहन्ता बालघाती च सुरापो वृषलीपतिः। मुच्यते सर्वपापेभ्यो यः पठेन्नाऽत्र संशयः ॥ १८ ॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम्। विद्यार्थी लभते विद्यां मोक्षार्थी लभते गतिम् ॥१९॥ आपदो हरते नित्यं विष्णुस्तोत्रार्थसम्पदा। यस्त्विदं पठते स्तोत्रं विष्णुपञ्जरमुत्तमम् ॥२०॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति। गोसहस्रफलं तस्य वाजपेयशतस्य च ॥ २१ ॥ अश्वमेधसहस्रस्य फलं प्राप्नोऽति मानवः। सर्वकामं लभेदस्य पठनान्नाऽत्र संशयः ॥ २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके। ज्वालामालाकुले विष्णुः सर्वं विष्णुमयञ्जगत् ॥ २३ ॥

॥ इति श्रीब्रह्माण्डपुराणे इन्द्रनारदसम्वादे श्रीविष्णुपञ्जरस्तोत्रं सम्पूर्णम् ॥

---

## आचार्यकृतषट्पदी

अविनयमपनय विष्णो ! दमय मनः शमय विषयमृगतृष्णाम्। भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥ दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे। श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २ ॥ सत्यपि भेदापगमे नाथ ! तवाऽहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥३॥

उद्धृतनग! नगभिदनुज! दनुजकुलामित्रमित्रशशिदृष्टे। दृष्टे भवति प्रभवति न

किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता वसुधाम्।

मेश्वर! परिपाल्यो भवता भवतापभीतोऽहम् ॥५॥ दामोदर! गुणमन्दिर! [illegible]

वदनारविन्द! गोविन्द! भवजलधिमथनमन्दर! परमन्दरमपनय त्वं मे ॥६

नारायण! करुणामय! शरणं करवाणि तावकौ चरणौ। इति षट्पदी [illegible]

सरोजे सदा वसतु ॥ ७ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं षट्पदीस्तोत्रं सम्पूर्णम् ॥

---

## विष्णुस्तवराजः

सुवेषसदनौ वलयाङ्गदादिशोभास्पदौ दुरितदैत्यविनाशदक्षौ। तौ दक्षिणौ भगवतश्च गदासुनाभतेजोर्जितौ सुललितौ मनसा स्मरामि ॥ ८ ॥ वामौ भुजौ मुररिपोर्धृतपद्मशङ्खौ श्यामौ करीन्द्रकरवन्मणिभूषणाढ्यौ। रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ पद्मालयाप्रियकरौ रुचिरौ स्मरामि ॥ ९ ॥ कण्ठं मृणालममलं मुखपङ्कजस्य लेखात्रयेण वनमालिकया निचीतम्। किम्वा विमुक्तिवशमन्त्रकसत्फलस्य वृन्तं चिरं भगवतः सुभगं स्मरामि ॥ १० ॥ वक्त्राम्बुजं दशनहासविकासरम्यं रक्ताधरोष्ठवरकोमलवाक्सुधाढ्यम्। सन्मानसोद्भवचलेक्षणपत्रचित्रं लोकाभिराममलं च हरेः स्मरामि ॥ ११ ॥ सूरात्मजावसथगन्धमिदं सुनासं भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम्। कामोत्सवं च कमलाहृदयप्रकाशं सञ्चिन्तयामि हरिवक्त्रविलासदक्षम् ॥ १२ ॥ कर्णौ लसन्मकरकुण्डलगन्धलोलौ नानादिशां च नभसश्च विकासगेहम्। लोलालकप्रचयचुम्बनकुञ्चिताग्रौ लग्नौ हरेर्मणिकिरीटतटे स्मरामि ॥ १३ ॥ भालं विचित्रतिलकं प्रियचारुगन्धगोरोचनारचनया ललनाक्षिसख्यम्। ब्रह्मैकधाम मणिकान्तकिरीटजुष्टं ध्याये मनोनयनहारकमीश्वरस्य ॥१४॥ श्रीवासुदेवचिकुरं कुटिलं निवद्धं नानासुगन्धिकुसुमैः स्वजनादरेण। दीर्घं रमाहृदयगाशमनं धुनन्तं ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥१५॥ मेघाकारं सोमसूर्यप्रकाशं सुभ्रूनासं शक्रचापैकमानम्। शोकातीतं पुण्डरीकायताक्षं विद्युच्चैलं चाश्रयेऽहं त्वपूर्वम् ॥१६॥ दीनं हीनं सेवया दैवगत्या पापैस्तापैः पूरितं मे शरीरम्। लोभाक्रान्तं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां वासुदेव ॥ १७ ॥ ये भक्त्याऽऽद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः। स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति ॥ १८ ॥ पद्मेरितमिदं पुण्यं शिवेन परिभाषितम्। धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥१९॥ पठन्ति ये महाभागास्ते मुच्यन्तेंऽहसोऽखिलात्। धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥२०॥

॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पद्माप्रोक्तो विष्णुस्तवराजः सम्पूर्णः ॥

# श्रीमन्नारायणस्तोत्रम्

नारायण नारायण जयगोविन्द हरे। नारायण नारायण जय गोपाल हरे। ध्रु०
करुणापारावारा! वरुणालयगम्भीरा!। नारायण० ॥१॥ घननीरदसंकाशा! कृत कलिकल्मषनाशा!। नारायण० ॥२॥ यमुनातीरविहारा। धृतकौस्तुभमणिहारा। नारायण० ॥३॥ पीताम्बरपरिधाना। सुरकल्याणनिधाना!। नारायण० ॥ ४ ॥ मञ्जुलगुञ्जाभूषा! मायामानुषवेषा!। नारायण० ॥५॥ राधाधरमधुरसिका! रजनीकरकुलतिलका। नारायण० ॥ ६ ॥ मुरलीगानविनोदा वेदस्तुतभूपादा। नारायण० ॥ ७ ॥ बर्हिनिवर्हापीडा नटनाटकफणिक्रीडा। नारायण० ॥ ८ ॥ वारिजभूषाभरणा राजीवरुक्मिणीरमणा। नारायण० ॥ ९ ॥ जलरुहदलनिभनेत्रा जगदारम्भकसूत्रा। नारायण० ॥१०॥ पातकरजनीसंहर करुणालय मामुद्धर। नारायण ॥११॥ अघबकक्षयकंसारे केशव कृष्णमुरारे। नारायण० ॥१२॥ हाटकनिभपीताम्बर अभयं कुरु मे मावर!। नारायण० ॥१३॥ दशरथराजकुमारा दानवमदसंहारा। नारायण० ॥१४॥ गोवर्धनगिरिरमणा गोपीमानसहरणा। नारायण० ॥१५॥ सरयूतीरविहारा सज्जनऋषिमन्दारा। नारायण० ॥ १६ ॥ विश्वामित्रमखत्रा विविधपरासुचरित्रा। नारायण० ॥१७॥ ध्वजवज्राङ्कुशपादा धरणीसुतसहमोदा। नारायण० ॥ १८ ॥ जनकसुताप्रतिपाला जय जय संस्मृतिलीला। नारायण० ॥ १९ ॥ दशरथवाग्धृतिभारा दण्डकवनसञ्चारा। नारायण० ॥२०॥ मुष्टिकचाणूरसंहारा मुनिमानसविहारा। नारायण० ॥२१॥ वालिविनिग्रहशौर्या वरसुग्रीवहितार्या। नारायण० ॥२२॥ मां मुरलीकरधीवर पालय पालय श्रीधर। नारायण० ॥२३॥ जलनिधिबन्धनधीरा रावणकण्ठविदारा। नारायण० ॥२४॥ ताटीमददलनाढ्या नटगुणविविधधनाढ्या। नारायण० ॥२५॥ गौतमपत्नीपूजन करुणाघनावलोकन। नारायण० ॥ २६ ॥ सम्भ्रमसीताहारा साकेतपुरविहारा।

नारायण० ॥ २७ ॥ अचलोद्धृतिचञ्चत्कर भक्तानुग्रहतत्पर । नारायण० ॥ २८ ॥ नैगमगानविनोदा रक्षःसुतप्रह्लादा । नारायण० ॥२९॥ भारतियतिवरशङ्कर नामामृतमखिलान्तर । नारायण नारायण जय गोपाल हरे ॥ ३० ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्रीनारायणस्तोत्रं सम्पूर्णम् ॥

द्रष्टव्यम्—स्तोत्रेऽस्मिन्व्याकरणाशुद्धिर्बहुदृश्यतेतत्सुधियोनिभालयन्तु ।

---

## विष्णोरष्टाविंशतिनामस्तोत्रम्

अर्जुन उवाच । किं नु नामसहस्राणि जपते च पुनः पुनः । यानि नामानि दिव्यानि तानि चाऽऽचक्ष्व केशव ! ॥१॥ श्रीभगवानुवाच । मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम् । गोविन्दं पुण्डरीकाक्षं माधवं मधुसूदनम् ॥ २ ॥ पद्मनाभं सहस्राक्षं वनमालिं हलायुधम् । गोवर्धनं हृषीकेशं वैकुण्ठं पुरुषोत्तमम् ॥ ३ ॥ विश्वरूपं वासुदेवं रामं नारायणं हरिम् । दामोदरं श्रीधरं च वेदाङ्गं गरुडध्वजम् ॥ ४ ॥ अनन्तं कृष्णगोपालं जपतो नास्ति पातकम् । गवां कोटिप्रदानस्य अश्वमेधशतस्य च ॥ ५ ॥ कन्यादानसहस्राणां फलं प्राप्नोति मानवः । अमायां वा पौर्णमास्यामेकादश्यां तथैव च ॥ ६ ॥ सन्ध्याकाले स्मरेन्नित्यं प्रातःकाले तथैव च । मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥

॥ इति श्रीकृष्णार्जुनसम्वादे विष्णोरष्टाविंशतिनामस्तोत्रं सम्पूर्णम् ॥

---

## मुकुन्दमालास्तोत्रम्

वन्दे मुकुन्दमरविन्ददलायताक्षं कुन्देन्दुशङ्खदशनं शिशुगोपवेषम् । इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासे-

त्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ।॥ २ ॥ जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३ ॥ मुकुन्दमूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम । अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु तव प्रसादात् ॥ ४ ॥ श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतम । यत्पायिनो न मुञ्चन्ति मुञ्चन्ति यदपायिन. ॥ ५ ॥ नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नाऽपनेतुम् । रम्यारामामृदुतनुलतानन्दने नाऽपि रन्तुं भावे भावे हृदयभवने भावयेयं भवन्तम ॥ ६ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्भाव्यं तद्भवतु भगवन्पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहु मतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ७ ॥ दिवि वा भुवि वा ममास्तु वासं नरके वा नरकान्तकप्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणे विचिन्तयामि ॥ ८ ॥ सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमेह चित्त रन्तुम् सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥ मा भैर्मन्द मन विचिन्त्य बहुधा यामीश्चिरं यातना नैवामी प्रवदन्ति पापरिपवः स्वामी न श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥१०॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् । विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ ११ ॥ रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगाणाम् । शरणमशरणानामेक एवाऽऽतुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम ॥ १२ ॥ अपराधसहस्रसङ्कुलं पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥१३॥ मा मे स्त्रीत्वं मा च मे स्यात्कुभावो मा मूर्खत्वं मा कुदेशेषु जन्म । मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम् ॥१४॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि ॥ १५ ॥ यत्कृतं

यत्करिष्यामि तत्सर्वं न मया कृतम्। त्वया कृतन्तु फलभुक्त्वमेव मधुसूदन! ॥१६॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मा स्म गाः कातरत्वम्। सरसिजदृशि देवे तारकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम्॥ १७॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्त्ते तनयसहजग्राहसङ्घाकुले च। संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्! पादाम्भोजे वरद भवतो भक्तिभावं प्रदेहि॥१८॥ पृथ्वी रेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुस्तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः। क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा दृष्टा यत्र स तारको विजयते श्रीपादधूलीकणः॥ १९॥ आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं मेदश्छेदपदानि पूर्तविधयः सर्वं हुतं भस्मनि। तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः॥ २०॥ आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति। वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे॥ २१॥ क्षीरसागरतरङ्गसीकरासारतारकितचारुमूर्त्तये। भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः॥२२॥

॥ इति श्रीकुलशेखरेण राज्ञा विरचिता मुकुन्दमाला सम्पूर्णा॥

---

# श्रीविष्णोः षोडशनामस्तोत्रम्

औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम्। शयने पद्मनाभं च विवाहे च प्रजापतिम्॥ १॥ युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम्। नारायणं तनुत्यागे श्रीधरं प्रियसङ्गमे॥ २॥ दुःस्वप्ने स्मर गोविन्दं सङ्कटे मधुसूदनम्। कानने नारसिंहं च पावके जलशायिनम्॥ ३॥ जलमध्ये वराहं च पर्वते रघुनन्दनम्।

गमने वामनं चैव सर्वकार्येषु माधवम् ॥ ४ ॥ षोडशैतानि नामानि प्रातरुत्थाय यः पठेत् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ५ ॥

॥ इति श्रीविष्णोः षोडशनामस्तोत्रं समाप्तम् ॥

---

# विष्णुशतनामस्तोत्रम्

नारद उवाच । ॐ वासुदेवं हृषीकेशं वामनं जलशायिनम् । जनार्दनं हरिं कृष्णं श्रीवक्षं गरुडध्वजम् ॥ १ ॥ वाराहं पुण्डरीकाक्षं नृसिंहं नरकान्तकम् । अव्यक्तं शाश्वतं विष्णुमनन्तमजमव्ययम् ॥ २ ॥ नारायणं गदाध्यक्षं गोविन्दं कीर्तिभाजनम् । गोवर्धनोद्धरं देवं भूधरं भुवनेश्वरम् ॥ ३ ॥ वेत्तारं यज्ञपुरुषं यज्ञेशं यज्ञवाहकम् । चक्रपाणिं गदापाणिं शङ्खपाणिं नरोत्तमम् ॥ ४ ॥ वैकुण्ठं दुष्टदमनं भूगर्भं पीतवाससम् । त्रिविक्रमं त्रिकालज्ञं त्रिमूर्तिं नन्दकेश्वरम् ॥ ५ ॥ रामं रामं हयग्रीवं भीमं रौद्रं भवोद्भवम् । श्रीपतिं श्रीधरं श्रीशं मङ्गलं मङ्गलायुधम् ॥६॥ दामोदरं दमोपेतं केशवं केशिसूदनम् । वरेण्यं वरदं विष्णुमानन्दं वसुदेवजम् ॥ ७ ॥ हिरण्यरेतसं दीप्तं पुराणं पुरुषोत्तमम् । सकलं निष्कलं शुद्धं निर्गुणं गुणशाश्वतम् ॥ ८ ॥ हिरण्यतनुसङ्काशं सूर्यायुतसमप्रभम् । मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥ ज्योतीरूपमरूपं च स्वरूपं रूपसंस्थितम् । सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखम् ॥१०॥ ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुम् । योगीशं योगनिष्णातं योगिनं योगरूपिणम् ॥११॥ ईश्वरं सर्वभूतानां वन्दे भूतमयं प्रभुम् । इति नामशतं दिव्यं वैष्णवं खलु पापहम् ॥१२॥ व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम् । यः पठेत्प्रातरुत्थाय स भवेद्वैष्णवो नरः ॥१३॥ सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात् । चान्द्रायणसहस्राणि कन्यादानशतानि च ॥ १४ ॥ गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः । अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः ॥१५॥

॥ इति श्रीविष्णुपुराणे विष्णुशतनामस्तोत्रं सम्पूर्णम् ॥

# परमेश्वरस्तुतिसारस्तोत्रम्

त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः। बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय विभो! गजेन्द्रे दृष्टं ते शरणद! वदान्यं स्वपददम्॥ १॥ न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां त्वयाऽनेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे। अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां न रिक्तां मे याच्ञां स्वजनरत कर्तुं भवहरे॥ २॥ कदाऽहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे संसारे ह्यनवरतदुःखेऽतिविरसः। लभेयं तां शान्तिं परममुनिभिर्या ह्यधिगता दयां कृत्वा मे त्वं वितर परशान्तिं भवहर॥ ३॥ विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं विधुश्चेत्पाता माऽवतु जनिमृते दुःखजलधेः। हरः संहर्ता संहरतु मम शोकं सजनकं यथाऽहं मुक्तः स्यां किमपि तु तथा ते विदधताम्॥ ४॥ अहं ब्रह्मानन्दस्त्वमपि च तदाख्यः सुविदितस्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा। तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं स्वमायां सम्वार्य प्रभव मम भेदं निरसितुम्॥ ५॥ कदाऽहं हे स्वामिञ्जनिमृतिमयं दुःखनिबिडं भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि। रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका रमन्ते यस्मिंस्ते कृतसकलकृत्या यतिवराः॥ ६॥ पठन्त्येके शास्त्रं निगममपरे तत्परतया यजन्त्यन्ये त्वां वै ददति च पदार्थांस्तव हितान्। अहं तु स्वामिंस्ते शरणमगमं संसृतिभयाद्यथा ते प्रीतिः स्याद्धितकर! तथा त्वं कुरु विभो! ॥ ७॥ अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः श्रुतिः सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः। इति ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्वज्ञानं मयि विघटयेस्त्वं हि कृपया॥ ८॥ अनादौ संसारे जनिमृतिमये दुःखितमना मुमुक्षुः सन्कश्चिद्व्रजति हि गुरुं ज्ञानपरमम्। ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं भवति च परो यस्य भजनात्॥ ९॥ विवेको वैराग्यं न च शमद-

प्रभवति न वेदोऽपि नितरां निषिध्यद्वाक्यार्थैश्चकितचकितं योऽस्य वचनम्। स्वरूपं यद्दृत्वा प्रभुरपि च तूष्णीं भवति तं नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥८॥ विष्णवष्टकं यः पठति प्रभाते नरोऽप्यखण्डं सुखमश्नुते च। यन्नित्यबोधाय सुबुद्धिनोक्तं रघूत्तमाख्येन विचार्य सम्यक् ॥ ९ ॥

॥ इति श्रीपण्डितरघुनाथशर्मणा विरचितं श्रीविष्णवष्टकं समाप्तम् ॥

---

# श्रीमधुसूदनस्तोत्रम्

ओ३मिति ज्ञानमात्रेण रोगाजीर्णेन निर्जितः। कालनिद्रां प्रपन्नोऽस्मि त्राहि मां मधुसूदन ॥ १ ॥ न गतिर्विद्यते चान्या त्वमेव शरणं मम। पापपङ्के निमग्नोऽस्मि त्राहि० ॥२॥ मोहितो मोहजालेन पुत्रदारगृहादिषु। तृष्णया पीड्यमानोऽस्मि त्राहि० ॥ ३ ॥ भक्तिहीनं च दीनं च दुःखशोकातुरं प्रभो। अनाश्रयमनाथं च त्राहि० ॥ ४ ॥ गतागतेन श्रान्तोऽस्मि दीर्घसंसारवर्त्मसु। येन भूयो न गच्छामि त्राहि० ॥५॥ बहवो हि मया दृष्टाः क्लेशाश्चैव पृथक् पृथक्। गर्भवासे महद्दुःखं त्राहि० ॥६॥ तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः। दुःखार्णवपरित्राणात् त्राहि० ॥७॥ वाचा यत्र प्रतिज्ञातं कर्मणा नोपपादितम्। तत्पापार्जितमग्नोऽस्मि त्राहि० ॥८॥ सुकृतं न कृतं किञ्चिद्दुष्कृतं च कृतं मया। संसारघोरे मग्नोऽस्मि त्राहि० ॥९॥ देहान्तरसहस्रेषु चान्योऽन्यभ्रामितो मया। तिर्यक्त्वं मानुषत्वं च त्राहि० ॥१०॥ वाचयामि यथोन्मत्तः प्रलपामि तवाग्रतः। जरामरणभीतोऽस्मि त्राहि० ॥११॥ यत्र यत्र च यातोऽस्मि स्त्रीषु वा पुरुषेषु च। तत्र तत्राचला भक्तिस्त्राहि० ॥१२॥ गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥१३॥ ऊर्ध्वपातालमर्त्येषु व्याप्तलोकजगत्त्रयम् ॥ १४ ॥ द्वादशाक्षरात्परं नाऽस्ति वासुदेवेन भाषितम् ॥१५॥ द्वादशाक्षरं महामन्त्रं सर्वकामफलप्रदम्। गर्भवासनिवासेन शुकेन परि-

भाषितम् ॥१५॥ द्वादशाक्षरं निराहारो यः पठेद्धरिवासरे। स गच्छेद्वैष्णवं स्थानं यत्र योगेश्वरो हरिः ॥१६॥

॥ इति श्रीशुकदेवविरचितं मधुसूदनस्तोत्रं सम्पूर्णम् ॥

---

# श्रीहरिस्तोत्रम्

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम्। यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम्। येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसार० ॥ २ ॥ सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा यश्चाव्यक्तो व्यस्तसमस्तः सह सद्यस्तं संसार० ॥ ३ ॥ यस्मादन्यन्नास्त्यपि नैनं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात्। ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥ ४ ॥ आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना। भक्त्यैकाग्रध्यानपरा यं विदुरीशं तं संसार० ॥ ५ ॥ प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य। क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥ ६ ॥ यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम्। ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार० ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम्। भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥ ८ ॥ यद्यद्वेद्यं वस्तु सतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च। ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥ ९ ॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य। तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥ १० ॥ हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभम्। त्यक्त्वा देहं यं प्रविश-

न्यच्युतभक्तास्तं संसार० ॥११॥ सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च सर्वः। सर्वत्रान्तर्यामितयेत्थं यमनन्यास्तं संसार० ॥ १२ ॥ सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद्दृष्ट्वाऽऽत्मानं चैवमजं सर्वजनेषु। सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं संसार० ॥१३॥ सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते स्प्रष्टा श्रोता बुद्ध्यति चेत्याहुरिमं यम्। साक्षी चाऽऽस्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥१४॥ पश्यन् शृण्वन्नत्र विजानन्रसयन् सन् जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम्। इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार० ॥ १५ ॥ जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां दृष्ट्वा स्वप्नेऽथाऽपि सुषुप्तौ सुखनिद्राम्। इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसार० ॥१६॥ पश्यन् शुद्धोऽप्यक्षर एको गुणभेदान्नानाकारान् स्फाटिकवद्भाति विचित्रः। भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसार० ॥१७॥ ब्रह्माविष्णू रुद्रहुताशौ रविचन्द्राविन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य। एकं सन्तं यं बहुधा दुर्मतिभेदात्तं संसार० ॥ १८ ॥ सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्यम्। इत्याहाऽऽदौ यं वरुणोऽसौ भृगवेऽजं तं संसार० ॥१९॥ कोशानेतान्पञ्च रसादीनतिहाय ब्रह्माऽस्मीति स्वात्मनि निश्चित्य दृशिस्थः। पित्राऽऽदिष्टो वेद भृगुर्यं यमुरन्ते तं संसार० ॥२०॥ येनाऽऽविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः। कर्ता भोक्ताऽऽत्माऽत्रहि चिच्छक्त्यधिरूढस्तं संसार० ॥ २१ ॥ सृष्ट्वा सर्वं स्वात्मनयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम्। सच्चत्यच्चाभूत्परमात्मा स य एकस्तं संसार० ॥२२॥ वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्वततन्त्रैश्च यमीशम्। दृष्ट्वाऽथान्तश्चेतसि बुद्ध्या विविशुर्यं तं संसार० ॥२३॥ श्रद्धाभक्तिध्यानशमाद्यैर्यमनमानैर्ज्ञातु शक्यो देव इहैवाऽऽशु य ईशः। दुर्विज्ञेयो जन्मशतैश्चाऽपि विना तैस्तं संसार० ॥ २४ ॥ यस्याऽतर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः। तज्जातित्वादब्धितरङ्गाभमभिन्नं तं संसार० ॥२५॥ दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्या लभ्य हृदिस्थं दृशिमात्रम्। ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमु-

भुङ्क्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः। क्षेत्रे क्षेत्रेष्विन्दुवदेको बहुधाऽऽस्ते तं संसार० ॥२४॥ युक्त्याऽऽलोड्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरुषाख्यः। योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥२८॥ एकीकृत्याऽनेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैव स एवाशु भवन्ति। यस्मिंल्लीना नेह पुनर्जन्म लभन्ते तं संसार० ॥२९॥ द्वन्द्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृत्वा शक्रोपासनमासाद्य विभूत्या। योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥ ३० ॥ योऽयं देहे चेष्टयिताऽन्तःकरणस्थः सूर्ये चासौ तापयिता सोऽस्म्यहमेव। इत्यात्मैक्योपासनया यं विदुरीशं तं संसार० ॥३१॥ विज्ञानांशो यस्य सतः शक्त्यधिरूढो बुद्धिर्बुद्ध्यत्यत्र बहिर्बोध्यपदार्थान्। नैवान्तस्थं बुद्ध्यति यं बोधयितारं तं संसार० ॥३२॥ कोऽयं देहे देव इतीत्थं सुविचार्य ज्ञाता श्रोताऽऽनन्दयिता चैष हि देवः। इत्यालोच्य ज्ञांशमिहाऽस्मीति विदुर्यं तं संसार० ॥३३॥ को ह्येवान्यादात्मनि न स्यादयमेष ह्येवानन्दप्राणिति चापानिति चेति। इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं संसार० ॥ ३४ ॥ प्राणो वाऽहं वाक्श्रवणादीनि मनो वा बुद्धिर्वाऽहं व्यस्त उताहोऽपि समस्तः। इत्यालोच्य ज्ञप्तिरिहाऽस्मीति विदुर्यं तं संसार० ॥ ३५ ॥ नाऽहं प्राणो नैव शरीरं न मनोऽहं नाऽहं बुद्धिर्नाहमहङ्कारधियौ च। योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥ ३६ ॥ सत्तामात्रं केवलविज्ञानमजं सत् सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय। साम्नामन्ते प्राह पिता यं विभुमाद्यं तं संसार० ॥३७॥ मूर्तामूर्ते पूर्वमपोह्याऽथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय। चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसार० ॥ ३८ ॥ ओतं प्रोतं यत्र च सर्वं गगनान्तं यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः। ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं संसार० ॥३९॥ तावत्सर्वं सत्यमिवाऽऽभाति यदेतद्यावत्सोऽऽस्मीत्यात्मनि यो ज्ञो नहि दृष्टः। दृष्टे तस्मिन् सर्वमसत्यं भवतीदं तं संसार० ॥४०॥ रागामुक्तं लोहयुतं हेम यथाऽग्नौ योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ। दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ॥ ४१ ॥ यं विज्ञानज्योतिषमाद्यं सुविभान्तं हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम्।

ध्येहैव विशत्यात्मनि सन्तं तं संसार० ॥ ४२ ॥ पादाङ्गक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम् । इत्यात्मानं स्वात्मनि संहृत्य सदैकतं संसार० ॥४३॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वान्तार्काभं भगवत्पादीयमिदं यः । विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः ॥४४॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचितं श्रीहरिस्तोत्रं सम्पूर्णम् ॥

---

## भगवच्छरणस्तोत्रम्

सच्चिदानन्दरूपाय भक्तानुग्रहकारिणे । मायानिर्मितविश्वाय महेशाय नमो नमः ॥ १ ॥ रोगा हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबन्धो ! ॥ २ ॥ देहो विनश्यति सदा परिणामशीलश्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि रमते विषयेषु नान्तस्तस्मात्त्व० ॥ ३ ॥ आयुर्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात्त्व० ॥ ४ ॥ आयाद्व्ययो मम भवत्यधिको विनीते कामादयो हि बलिनो निबलाः शमाद्याः । मृत्युर्यदा तुदति मां बत किं वदेयं तस्मात्त्व० ॥ ५ ॥ तप्तं तपो नहि कदाऽपि मयेह तन्वा वाण्या तथा नहि कदाऽपि तपश्च तप्तम् । मिथ्याभिभाषणपरेण न मानसं हि तस्मात्त्व० ॥ ६ ॥ स्तब्धं मनो मम सदा नहि याति सौख्यं चक्षुश्च मे न तव पश्यति विश्वरूपम् । वाचा तथैव न वदेन्मम सौम्यवाणीं तस्मात्त्व० ॥ ७ ॥ सत्त्वं न मे मनसि याति रजस्तमोभ्यां विद्धे तदा कथमहो शुभकर्मवार्ता । साक्षात्परम्परतया सुखसाधनं तत्तस्मात्त्व० ॥ ८ ॥ पूजा

कृता नहि कदाऽपि मया त्वदीया मन्त्रं त्वदीयमपि मे न जपेद्रसज्ञा। चित्तं न मे स्मरति ते चरणौ ह्यवाप्य तस्मात्त्व० ॥ ९ ॥ यशो न मेऽस्ति हुतिदानदयादियुक्तो ज्ञानस्य साधनगणो न विवेकमुख्यः। ज्ञानं क साधनगणेन विना क मोक्षस्त-स्मात्त्व० ॥१०॥ सत्सङ्गतिर्हि विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत पण्डि-तमानिनो मे। तामन्तरेण नहि सा क च बोधवार्ता तस्मात्त्व० ॥ ११ ॥ दृष्टिर्न-भूतविषया समताभिधाना वैषम्यमेव तदियं विषयीकरोति। शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्मात्त्व० ॥ १२ ॥ मैत्री समेषु न च मेऽस्ति कदाऽपि नाथ! दीने तथा न करुणा मुदिता च पुण्ये। पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्त्व० ॥ १३ ॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तामविहाय तस्य। कान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्त्व० ॥ १४ ॥ त्यक्तं गृहाद्यपि मया भव-तापशान्त्यै नासीदसौ हतहृदो मम मायया ते। सा चाधुना किमु विधास्यति नेति जाने तस्मात्त्व० ॥१५॥ प्राप्ता धनं गृहकुटुम्बगजाश्वदारा राज्यं यदैहिकमथेन्द्रपुरश्च नाथ!। सर्वं विनश्वरमिदं न फलाय कस्मै तस्मात्त्व० ॥ १६ ॥ प्राणान्निरुध्य विधिना न कृतो हि योगो योगं विनाऽस्ति मनसः स्थिरता कुतो मे। तां वै विना मम न चेतसि शान्तिवार्ता तस्मात्त्व० ॥१७॥ ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाऽकरवं हि तेषाम्। सेवाऽपि साधनतया विदिताऽस्ति चित्ते तस्मात्त्व० ॥१८॥ तीर्थादिसेवनमहाविधिना हि नाथ! नाऽकारि येन मनसो मम शोधनं स्यात्। शुद्धिं विना न मनसोऽवगमापवर्गौ तस्मात्त्व० ॥१९॥ वेदान्तशी-लनमपि प्रमितिं करोति ब्रह्मात्मनः प्रमितिसाधनसंयुतस्य। नैवाऽस्ति साधनलवो मयि नाथ! तस्यात्तस्मात्त्व० ॥२०॥ गोविन्द! शङ्कर! हरे! गिरिजेश! मेश! शम्भो! जनार्दन! गिरीश! मुकुन्द! साम्ब!। नाऽन्या गतिर्मम कथञ्चन वां विहाय तस्मात् प्रभो! मम गतिः कृपया विधेया ॥ २१ ॥ एवं स्तवं भगवदाश्रयणाभिधानं ये मानवाः प्रतिदिनं प्रणताः पठन्ति। ते मानवा भवरतिं परिभूय शान्तिं गच्छन्ति किञ्च परमात्मनि भक्तिमद्धा। इति श्रीब्रह्मानन्दविरचितं भगवच्छरणस्तोत्रं सम्पूर्णम्।

# हरिनाममालास्तोत्रम्

गोविन्दं गोकुलानन्दं गोपालं गोपिवल्लभम्। गोवर्धनोद्धरं धीरं तं वन्दे गोमतं प्रियम् ॥ १ ॥ नारायणं निराकारं नरवीरं नरोत्तमम्। नृसिंहं नागनाथं च वन्दे नरकान्तकम् ॥ २ ॥ पीताम्बरं पद्मनाभं पद्माक्षं पुरुषोत्तमम्। पवित्रं परमानन्दं तं वन्दे परमेश्वरम् ॥ ३ ॥ राघवं रामचन्द्रं च रावणारिं रमापतिम्। राजीवलोचनं रामं तं वन्दे रघुनन्दनम् ॥ ४ ॥ वामनं विश्वरूपं च वासुदेवं च विट्ठलम्। विश्वेश्वरं विभुं व्यासं तं वन्दे वेदवल्लभम् ॥ ५ ॥ दामोदरं दिव्यसिंहं दयालुं दीननायकम्। दैत्यारिं देवदेवेशं तं वन्दे देवकीसुतम् ॥ ६ ॥ मुरारिं माधवं मत्स्यं मुकुन्दं मुष्टिमर्दनम्। मुञ्जकेशं महाबाहुं तं वन्दे मधुसूदनम् ॥ ७ ॥ केशवं कमलाकान्तं कामेशं कौस्तुभप्रियम्। कौमोदकीधरं कृष्णं तं वन्दे कौरवान्तकम् ॥ ८ ॥ भूधरं भुवनानन्दं भूतेशं भूतनायकम्। भावनैकं भुजङ्गेशं तं वन्दे भवनाशनम् ॥ ९ ॥ जनार्दनं जगन्नाथं जगज्जाड्यविनाशकम्। जामदग्न्यं वरं ज्योतिस्तं वन्दे जलशायिनम् ॥ १० ॥ चतुर्भुजं चिदानन्दं चाणूरमल्लमर्दनम्। चराचरगतं देवं तं वन्दे चक्रपाणिनम् ॥११॥ श्रियःकरं श्रियोनाथं श्रीधरं श्रीवरप्रदम्। श्रीवत्सलधरं सौम्यं तं वन्दे श्रीसुरेश्वरम् ॥ १२ ॥ योगीश्वरं यज्ञपतिं यशोदानन्ददायकम्। यमुनाजलकल्लोलं तं वन्दे यदुनायकम् ॥ १३ ॥ शालिग्रामशिलाशुद्धं शङ्खचक्रोपशोभितम्। सुरासुरसदासेव्यं तं वन्दे साधुवल्लभम् ॥ १४ ॥ त्रिविक्रमं तपोमूर्तिं त्रिविधाघौघनाशनम्। त्रिस्थलं तीर्थराजेन्द्रं तं वन्दे तुलसीप्रियम् ॥१५॥ अनन्तमादिपुरुषमच्युतं च वरप्रदम्। आनन्दं च सदानन्दं तं वन्दे चाघनाशनम् ॥१६॥ लीलया धृतभूभारं लोकसत्त्वैकवन्दितम्। लोकेश्वरं च श्रीकान्तं तं वन्दे लक्ष्मणप्रियम् ॥१७॥ हरिं च हरिणाक्षं च हरिनाथं हरिप्रियं। हलायुधसहायञ्च तं वन्दे हनुमत्पतिम् ॥ १८ ॥ हरिनामकृता माला पवित्रा पापनाशिनी। बलिराजेन्द्रेण चोक्ता कण्ठे धार्या प्रयत्नतः ॥ १९ ॥

॥ इति बलिराजेन्द्रेणोक्तं हरिनाममालास्तोत्रम् सम्पूर्णम् ॥

# श्रीभविष्यपुराणोक्तं शालिग्रामस्तोत्रम्

अस्य श्रीशालिग्रामस्तोत्रमन्त्रस्य श्रीभगवानृषिः। नारायणो देवता अनुष्टुप्छन्दः (देवी गायत्रीच्छन्दः) श्रीशालिग्रामस्तोत्रमन्त्रजपे विनियोगः।

युधिष्ठिर उवाच। श्रीदेवदेव! देवेश! देवतार्चनमुत्तमम्। तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम! ॥ १ ॥ श्रीभगवानुवाच। गण्डक्यां चोत्तरे तीरे गिरिराजस्य दक्षिणे। दशयोजनविस्तीर्णा महाक्षेत्रवसुन्धरा ॥ २ ॥ शालिग्रामो भवेद्देवो देवी द्वारावती भवेत्। उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ ३ ॥ शालिग्रामशिला यत्र यत्र द्वारावती शिला। उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ ४ ॥ आजन्मकृतपापानां प्रायश्चित्तं य इच्छति। शालिग्रामशिलावारि पापहारि नमोऽस्तु ते ॥ ५ ॥ अकालमृत्युहरणं सर्वव्याधिविनाशनम्। विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ ६ ॥ शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि। अङ्गलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ॥ ७ ॥ स्नानोदकं पिबेन्नित्यं चक्राङ्कितशिलोद्भवम्। प्रक्षाल्य शुद्धं तत्तोयं ब्रह्महत्या व्यपोहति ॥ ८ ॥ अग्निहोमसहस्राणि वाजपेयशतानि च। सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ॥ ९ ॥ नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः। योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥१०॥ खण्डिता स्फुटिता भिन्ना अग्निदग्धा तथैव च। शालिग्रामशिला यत्र तत्र दोषो न विद्यते ॥ ११ ॥ न मन्त्रः पूजनं नैव न तीर्थं न च भावना। न स्तुतिर्नोपचारश्च शालिग्रामशिलार्चने ॥ १२ ॥ ब्रह्महत्यादिकं पापं मनोवाक्कायसम्भवम्। शीघ्रं नश्यति तत्सर्वं शालिग्रामशिलार्चनात् ॥१३॥ नानावर्णमयं चैव नानाभोगेन वेष्टितम्। तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥१४॥ नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा। तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥१५॥ कृष्णो शिलातले यत्र सूक्ष्मं चक्रं च दृश्यते। सौभाग्यं सन्ततिं धत्ते सर्वसौख्यं ददाति च ॥१६॥ वासुदेवस्य चिह्नानि दृष्ट्वा पापैः प्रमुच्यते। श्रीधरः सुकरे वामे हरिद्वर्णस्तु

दृश्यते ॥१७॥ वाराहरूपिणं देवं कूर्माङ्गैरपि चिह्नितम् । गोपदं तत्र दृश्येत वाराहं वामनं तथा ॥ १८ ॥ पीतवर्णन्तु देवानां रक्तवर्णं भयावहम् । नारसिंहो भवेद्देवो मोक्षदं च प्रकीर्तितम् ॥ १९ ॥ शङ्खचक्रगदाकूर्माः शङ्खो यत्र प्रदृश्यते । शङ्खवर्णस्य देवानां वामे देवस्य लक्षणम् ॥२०॥ दामोदरं तथा स्थूलं मध्ये चक्रं प्रतिष्ठितम् । पूर्णद्वारेण सङ्कीर्णा पीतरेखा च दृश्यते ॥२१॥ छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः । चपटे च महादुःखं शूलाग्रे तु रणं ध्रुवम् ॥२२॥ ललाटे शेषभोगस्तु शिरोपरि सुकाञ्चनम् । चक्रकाञ्चनवर्णानां वामदेवस्य लक्षणम् ॥२३॥ वामपार्श्वे च वै चक्रे कृष्णवर्णन्तु पिङ्गलम् । लक्ष्मीनृसिंहदेवानां पृथग्वर्णन्तु दृश्यते ॥२४॥ लम्बोष्ठे च दरिद्रं स्यात्पिङ्गले हानिरेव च । लग्नचक्रे भवेद्व्याधिर्विदारे मरणं ध्रुवम् ॥ २५ ॥ पादोदकं च निर्माल्यं मस्तके धारयेत्सदा । विष्णोर्दृष्टं भक्षितव्यं तुलसीदलमिश्रितम् ॥२६॥ कल्पकोटिसहस्राणि वैकुण्ठे वसते सदा । शालिग्रामशिलाबिन्दुर्हत्याकोटिविनाशनः ॥२७॥ तस्मात्सम्पूजयेद्ध्यात्वा पूजितं चापि सर्वदा । शालिग्रामशिला स्तोत्रं यः पठेच्च द्विजोत्तम ॥ २८ ॥ स गच्छेत्परमं स्थानं यत्र लोकेश्वरो हरिः सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २९ ॥ दशावतारदेवानां पृथग्वर्णं दृश्यते । ईप्सितं लभते राज्यं विष्णुपूजामनुक्रमात् ॥३०॥ कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः । ताः सर्वा नाशमायान्ति विष्णुनैवेद्यभक्षणात् ॥३१॥ विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् । तस्मादष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥ ३२ ॥ इति भविष्यपुराणे गण्डकीमाहात्म्ये श्रीकृष्णयुधिष्ठिरसम्वादे शालिग्रामस्तोत्रं समाप्तम् ॥

---

## वामनपुराणोक्तं श्रीविष्णोरष्टनामस्तोत्रम्

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्। हंसं नारायणं चैवमेतन्नामाष्टकं पठेत् ॥ १ ॥ त्रिसन्ध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति। शत्रुसैन्यं क्षयं याति दुःस्वप्नः सुखदो भवेत् ॥ २ ॥ गङ्गायां मरणं चैव दृढा भक्तिस्तु केशवे। ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥ ३ ॥

॥ इति वामनपुराणे विष्णोर्नामाष्टकस्तोत्रं सम्पूर्णम् ॥

---

## दशावतारस्तोत्रम्

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः। यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १ ॥ निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैरन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीस्ता अपः। निष्प्रत्यूहतरङ्गरिङ्ख(ङ्ग)णमिथः प्रत्यूढ(ह)पाथश्छटा डो(दो)लारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥२॥ अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः। यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतो विहरते देवस्सहैव श्रिया ॥ ३ ॥ गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृतब्रह्माण्डप्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः। यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिर्ब्रह्मस्तम्बमसौदसौ भगवतीमुस्तेव विश्वम्भरा ॥ ४ ॥ प्रत्यादिष्टपुरातनप्रहरणग्रामक्षणं पाणिजैरव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः। यत्प्रादुर्भवनादवन्ध्यजठरा याहच्छिकाद्वेधसां या काचित्सहसा महासुरगृहस्थूणापितामह्यभूत् ॥ ५ ॥ व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटस्त्रैयक्षं मुकुटं पुनन्नवतुनस्त्रैविक्रमो विक्रमः।

यत्प्रस्तावसमुच्छ्रितप्लवगटीवृत्तान्तसिद्धान्तिभिस्स्रोतोभिस्सुरसिन्धुरष्टसु दिशासौ-धेषु दोधूयते ॥ ६ ॥ क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन्क्रमादक्षत्रामिह सन्ततक्ष य इमां त्रिस्सप्तकृत्वः क्षितिम् । दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥ ७ ॥ पारावारपयोविशोषणकलापारीणकालानलज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः । सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती धर्मो विग्रहवानधर्मविरतिं धन्वी सधन्वीतु नः ॥ ८ ॥ पक्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादयस्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः । क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैराकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९ ॥ नाथायैव नमः पदं भवतु नश्चित्रैश्चरित्रक्रमैर्भूयोभिर्भुवनान्यमूनि कुहना गोपाय गोपायते । कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्याय चर्यायते ॥१०॥ भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां कल्की विष्णुयशःसुतः कलिकथाकालुष्यकूलङ्कषः । निश्शेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥११॥ इच्छामीन ! विहारकच्छप ! महापोत्रिन् ! यदृच्छाहरे ! रक्षावामन ! रोषराम ! करुणाकाकुत्स्थ ! हेलाहलिन् ! । क्रीडावल्लव ! कल्कवाहन ! दश कल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्तु भुवनं पुण्यौघपण्यापणाः ॥१२॥ विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः । वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे शुद्धिः काऽपि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३ ॥ कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥ १४ ॥

॥ इति श्रीदशावतारस्तोत्रं सम्पूर्णम् ॥

# हयग्रीवस्तोत्रम्

ज्ञानानन्दमयं देवं निर्म्मलस्फटिकाकृतिम्। आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥१॥ स्वतःसिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं सुधासध्रीचीभिर्द्युतिभिरवदात त्रिभुवनम्। अनन्तैस्त्रय्यन्तैरनुविदितहेषाहलहलं हताशेषावद्यं हयवदनमीडीमहिमहः॥ २॥ प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा। वक्त्री वेदान्भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्यमूर्त्तिः॥३॥ विशुद्धविज्ञानघन स्वरूपं विज्ञानविश्राणनबद्धदीक्षम्। दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये॥ ४॥ समाहारः साम्नां प्रतिपदमृचां धामयजुषां लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः। कथादर्प्पक्षुभ्यत्कथककुलकोलाहलभवं हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः॥ ५॥ अपौरुषेयैरपि वाक्प्रपञ्चैरद्याऽपि ते भूतिमदृष्टपाराम्। स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ! कटाक्षणीयः॥ ६॥ दाक्षिण्यरम्या गिरिशस्य मूर्त्तिर्देवीसरोजासनधर्मपत्नी। व्यासादयो दिव्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः॥ ७॥ मन्दोभविष्यन्नियतं विरिञ्चो वाचां निधेर्वञ्चितभागधेयः। दैत्यापनीतान्दययैव भूयोऽप्यध्यापयिष्यो निगमान्नचेत्त्वम्॥ ८॥ वितर्कडोलां व्यवधूयसत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम्। तेनैव देव! त्रिदशेश्वराणामस्पृष्टडोलायितमाधिराज्यम्॥ ९॥ अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान्मन्त्रमयं शरीरम्। अखण्डसारैर्हविषां प्रधानैराप्यायनं व्योमसतां विधित्से॥१०॥ यन्मूलमीदृक्प्रतिभाति तत्त्वं या मूलमाम्नायमहाद्रुमाणाम्। तत्त्वेन जानन्ति विशुद्धसत्त्वास्त्वामक्षरामक्षरमातृकान्ते॥११॥ अव्याकृताद् व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम्। शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर! त्वां त्वदुपज्ञवाचः॥१२॥ मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्त्तिं तवानन्दसुधाप्रसूतिम्। विपश्चितश्चेतसि भावयन्तो वेलामुदारामिव दुग्धसिन्धोः॥ १३॥ मनोगतं पश्यति यः सदा त्वां मनीषिणां मानसराजहंसम्। स्वयं पुरोभागविवादभाजः किं कुर्वते तस्य गिरो यथाऽ-

हम् ॥१४॥ अपि क्षणार्द्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः । वाचाम्प्रवाहै-र्निवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ १५ ॥ स्वामिंस्त्वद्ध्यानसुधाभि-षेकाद्वहन्ति धन्याः पुलकानुबन्धम् । अलक्षिते क्वाऽपि निरूढमूलमङ्गेष्विवानन्द-थुमङ्कुरन्तम् ॥१६॥ स्वामिन्! प्रतीचा हृदयेन धन्यास्त्वद्ध्यानचन्द्रोदयवर्द्धमानम् । अमान्तमानन्दपयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति ॥१७॥ स्वैरानुभावास्त्व-दधीनभावाः समृद्धवीर्यास्त्वदनुग्रहेण । विपश्चितो नाथ ! तरन्ति मायां वैहारिकीं मोहनपिच्छिकां ते ॥ १८ ॥ प्राङ्निर्मितानां तपसां विपाकात्प्रत्यग्रनिःश्रेयससम्पदो मे । समेधिषीरंस्तव पादपद्मे सङ्कल्पचिन्तामणयः प्रणामाः ॥१९॥ विलुप्तमूर्धन्य लिपिक्रमाणां सुरेन्द्रचूडापदलालितानाम् । त्वदङ्घ्रिराजीवरजःकणानां भूयात्प्र सादो मयि नाथ ! भूयात् ॥ २० ॥ परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूततमोनुप ङ्गाम् । पदद्वयीन्ते परिचिन्महेऽन्तः प्रबोधराजीव विभातसन्ध्याम् ॥२१॥ त्वत्कि-ङ्कराळङ्करणोचितानां त्वयैव कल्पान्तरपालितानाम् । मञ्जुप्रणादं मणिनूपुरन्ते मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२ ॥ सञ्चिन्तयामि प्रतिभातशास्त्रस्थधुक्षयन्तं समयप्रदीपान् । विज्ञानकल्पद्रुमपल्लवाभं व्याख्यानमुद्रामधुरं करन्ते ॥२३॥ चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ ! करं त्वदीयम् । ज्ञानामृतोदञ्चनलाळ-सानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥२४॥ प्रबोधसिन्धोररुणैः प्रकाशैः प्रवाळ-सङ्घातमिवोद्वहन्तम् । विभावये देव ! सपुस्तकन्ते वामं करं दक्षिणमाश्रितानाम् ॥२५॥ तमांसि भित्त्वा विशदैर्मयूखैः सम्प्रीणयन्तं विदुषश्चकोरान् । निशामये त्वा नव-पुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥२६॥ दिशन्तु मे देव सदा त्वदीया दया-तरङ्गानुचराः कटाक्षाः । श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ॥२७॥ विशेषवित्पारिषदेषु नाथ ! विदग्धगोष्ठीसमराङ्गणेषु । जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥ २८ ॥ त्वां चिन्तयंस्त्वन्मयतां प्रपन्नस्त्वामुद्गृणन् शब्दमयेन साम्ना । स्वामिन्समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥ २९ ॥ नानाविधानामगतिः कलानां न चाऽपि तीर्थेषु कृतावतारः । ध्रुवं तवाऽनाथ-

परिग्रहाय नवं नवं पात्रमिदं दयायाः ॥ ३० ॥ अकम्पनीयान्यपनीतिभेदैरलङ्कृ-पीरन् हृदयम्मदीयम् । शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥३१॥ व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः । अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्मामाविर्भूयादनघमहिमामानसे वागधीशः ॥३२॥ वागर्थसिद्धिहेतोः पठतो हयग्रीवसंस्तुतिम् भक्त्या । कविता-र्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥३३॥ कवितार्किकसिंहाय कल्याण-गुणशालिने । श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥ ३४ ॥

॥ इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्यकृतिषु हयग्रीवस्तोत्रं सम्पूर्णम् ॥

---

# चतुःश्लोकीभागवतम्

श्रीभगवानुवाच । ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितम्मया ॥१॥ यावानहं यथा भावो यद्रूपगुणकर्मकः । तथैव तत्त्व-विज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चा-दहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ ४ ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥ एता-वदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मना । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ६ ॥ एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ७ ॥

॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासक्यां द्वितीय-स्कन्धे भगवद्ब्रह्मसम्वादे चतुःश्लोकीभागवतं समाप्तम् ॥

# सङ्कष्टनाशनलक्ष्मीनृसिंहस्तोत्रम्

श्रीमत्पयोनिधिनिकेतन! चक्रपाणे! भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्त्ते!। योगीश! शाश्वत! शरण्य! भवाब्धिपोत! लक्ष्मीनृसिंह! मम देहि करावलम्बम्॥१॥ ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसङ्घट्टिताङ्घ्रिकमलामलकान्तिकान्त!। लक्ष्मीलसत्कुचसरोरुहराजहंस! लक्ष्मीनृसिंह!०॥२॥ संसारघोरगहने चरतो मुरारे! मारोग्रभीकरमृगप्रवरार्दितस्य। आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह!०॥३॥ संसारकूपमतिघोरमगाधमूलं सम्प्राप्य दुःखशतसर्पसमाकुलस्य। दीनस्य देव! कृपणापदमागतस्य लक्ष्मीनृसिंह!०॥ ४॥ संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य। व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह!०॥५॥ संसारवृक्षमघबीजमनन्तकर्म शाखाशतं करणपत्रमनङ्गपुष्पम्। आरुह्य दुःखफलितं पततो दयालो! लक्ष्मीनृसिंह!०॥६॥ संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्त्तेः। नागारिवाहन! सुधाब्धिनिवास! शौरे! लक्ष्मीनृसिंह!०॥७॥ संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य। त्वत्पादपद्मसरसी शरणागतस्य लक्ष्मीनृसिंह!०॥८॥ संसारजालपतितस्य जगन्निवास! सर्वेन्द्रियार्थबडिशार्थझषोपमस्य। प्रोत्खण्डितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह!०॥९॥ संसारभीकरकरीन्द्रकलाभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश!। प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह!०॥१०॥ अन्धस्य मे हृतविवेकमहाधनस्य चौरैः प्रभो! बलिभिरिन्द्रियनामधेयैः। मोहान्धकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह!०॥११॥ लक्ष्मीपते! कमलनाभ! सुरेश! विष्णो! वैकुण्ठ! कृष्ण! मधुसूदन! पुष्कराक्ष!। ब्रह्मण्य! केशव! जनार्दन! वासुदेव! देवेश! देहि कृपणस्य करावलम्बम्॥१२॥ यन्माययोर्जितवपुःप्रचुरप्रवाहमग्नार्थमत्रनिवहोरुकरावलम्बम्। लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शङ्करेण॥१३॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्कराचार्यविरचितं सङ्कष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं सम्पूर्णम्॥

# आलवन्दारस्तोत्रम्

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम्। स्तोत्रयामास योगीन्द्रस्तम्वन्दे यामुनाह्वयन्॥ १॥ नमो नमो यामुनाय यामुनाय नमो नमः। नमो नमो यामुनाय यामुनाय नमो नमः॥ २॥ नमो यामुनपादाब्जरेणुभिः पावितात्मने। विदिताखिलवेद्याय गुरवे विदितात्मने॥ ३॥ नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये। नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे॥ ४॥ तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयातिसीम्ने। नाथाय नाथमुनयेऽत्र परत्र चाऽपि नित्यं यदीयचरणौ शरणम्मदीयम्॥ ५॥ भूयो नमोऽपरिमिताच्युत भक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः। लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिने वराय॥ ६॥ तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः। सन्दर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय॥७॥ माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम्। आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलम्प्रणमामि मूर्ध्ना॥८॥ यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथः सकलः समेति। स्तोष्यामि नः कुलधनं कुलदैवतं तत्पादारविन्दमरविन्दविलोचनस्य॥ ९॥ तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः। कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय॥१०॥ यद्वा श्रमावधि यथामति वाऽप्यशक्तः स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः। वेदाश्चतुर्मखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः॥११॥ किञ्चैष शक्त्यतिशये ननु तेऽनुकम्प्यः स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण। तत्र श्रमस्तु सुलभो मम मन्दबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र!॥१२॥ नाऽवेक्षसे यदि ततो भुवनान्यमूनि नाऽलं प्रभो! भवितुमेव कुतः प्रवृत्तिः। एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम्॥१३॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण!

भेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्यते जनैः ॥ ४३ ॥ दासः सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः । उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिना ॥ ४४ ॥ त्वदीयभुक्तोज्झितशेषभोजिना त्वया विसृष्टात्मभरेण यद्यथा । प्रियेण सेनापतिना निवेदितं तथाऽनुजानन्तमुदारवीक्षणैः ॥ ४५ ॥ हताखिलक्लेशमलैः स्वभावतः सदाऽनुकूल्यैकरसैस्तवोचितैः । गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥ ४६ ॥ अपूर्वनानारसभावनिर्भरप्रबुद्धया मुग्धविदग्धलीलया । क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम ॥ ४७ ॥ अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम् । श्रियः श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ॥ ४८ ॥ भवन्तमेवाऽनुचरन्निरन्तरं प्रशान्तनिःशेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितम् ॥४९॥ धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः । विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः ॥ ५० ॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे । (अपतिं) अगतिं शरणागतं हरे ! कृपया केवलमात्मसात् कुरु ॥५१॥ अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि । भगवन् ! भवदुर्दिने पथस्खलितं मामवलोकयाच्युत ॥ ५२ ॥ न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः । यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ ! दुर्लभः ॥ ५३ ॥ तदहं त्वदृते न नाथवान् मदृते त्वं दयनीयवान्न च । विधिनिर्मितमेतदन्वयं भगवन्पालय मा स्म जीहपः ॥ ५४ ॥ वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथा तथाविधः । तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥५५॥ मम नाथ ! यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव ! । नियतस्वमिति प्रबुद्धधीरथवा किन्नु समर्पयामि ते ॥५६॥ अवबोधितवानिमां यथामयि नित्यां भवदीयतां स्वयम् । कृपयैवमनन्यभोग्यतां भगवन्भक्तिमपि प्रयच्छ मे ॥५७॥ तव दास्यसुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे । इतरावसथेषु मा स्म भूदपि मे जन्म चतुर्मुखात्मना ॥ ५८ ॥ सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्ति-

मुक्तिभिः। महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुःसहः ॥५९॥ न देहं न प्राणान्न च सुखमशेषाऽभिलषितं न चात्मानं नान्यत्किमपि तव शेषत्ववि-भवात्। बहिर्भूतं नाथ! क्षणमपि सहे यातु शतधा विनाशं तत्सत्यं मधुमथन! विज्ञा-पनमिदम् ॥६०॥ दुरन्तस्यानादेरपरिहरणीयस्य महतो विहीनाचारोऽहं नृपशुर-शुभस्याऽऽस्पदमपि। दयासिन्धो! बन्धो! निरवधिकवात्सल्यजलधे! तव स्मारं स्मारं गुणगतमितीच्छामि गतभीः ॥ ६१ ॥ अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-स्तमश्छन्नच्छद्मस्तुतिवचनभङ्गीमरचयम्। तथाऽपीत्थं रूपं वचनमवलम्ब्याऽपि कृपया त्वमेवैवम्भूतं धरणिधर! मे शिक्षय मनः ॥६२॥ पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम्। त्वदीयस्त्वद्भृत्यस्तव परि-जनस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवाऽस्मि हि भरः ॥६३॥ जनित्वाऽहं वंशो महति जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम्। निसर्गादेव त्वच्चरणकमलैकान्तमनसामधोऽधः पापात्मा शरणद निमज्जामि तमसि ॥ ६४ ॥ अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चन-परः। नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥६५॥ रघुवर! यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यस्य चैद्यस्य कृष्णः। प्रतिभवमपराद्धुर्मुग्धसायुज्यदोऽभूर्वद किमु पदमागस्तस्य तेऽस्ति क्षमायाः ॥६६॥ ननु प्रसन्नः सकृदेव नाथ! तवाऽहमस्मीति च याचमानः। तवाऽनुकम्प्यः स्मरतः प्रतिज्ञां मदेकवर्ज्यं किमिदं व्रतन्ते ॥ ६७ ॥ अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्म-वन्तम्। पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥६८॥ यत्पदा-म्भोरुहध्यानविध्वस्ताशेषकल्मषः। वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥६९॥

॥ इति श्रीयामुनाचार्यविरचितमालवन्दारस्तोत्रं समाप्तम् ॥

---

# भवमङ्गलाष्टकम्

श्रीरङ्गं करशैलमञ्जनगिरिं शेषाद्रिसिंहाचलं श्रीकूर्मं पुरुषोत्तमञ्च बदरीनारायणं नैमिषम्। श्रीमद्द्वारवती प्रयागमथुराऽयोध्यागयापुष्करं शालग्रामनिवासिना विजयते रामानुजोऽयं मुनिः ॥ १ ॥ सर्वेषा कृतिना चरन्ति गुरवः वैङ्कर्यनिष्ठा हरेः श्रीरामानुजयोगिनायकमणिश्रीपादपद्मालयाः। भोग्याष्टाक्षरमन्त्ररत्नचरम-श्लोकानुसन्धायिनो वन्द्या भागवतोत्तमाः प्रतिदिनं कुर्वन्तु मे मङ्गलम् ॥ २ ॥ स श्रीमान्परमः पुमानथ चतुर्व्यूहावतारस्ततो जाता व्यूहपरम्पराः सुरचिताः श्रीकेशवाद्याः पराः। एकाम्भोनिधिशेषभोगशयनन्यग्रोधपत्राश्रयक्षीरोदन्वदनन्ततल्प-सुखदाः कुर्वन्तु मे मङ्गलम् ॥ ३ ॥ श्रीरामानुजयोगिपूर्णयमुनावास्तव्यमाला धरानाथः कारितनूजसैन्यपरमः श्रीभाश्च नारायणः। चण्डाद्याः कुमुदादयः परिजना नित्याश्च मुक्ताश्च ये श्रीवैकुण्ठनिवासिनोऽमरवराः कुर्वन्तु मे मङ्गलम् ॥४॥ मत्स्यः कूर्मवराहमानवहरिश्रीवामना भार्गवः श्रीरामो बलदेवदेवकिसुतौ कल्की दशैते क्रमात्। अन्तर्याम्यथ योगिनां हृदयगोऽप्यर्चावताराः शुभाः श्रीरङ्गादि-समस्तधामनिलयाः कुर्वन्तु मे मङ्गलम् ॥ ५ ॥ श्रीभूमिर्विमलादयो नवसुधापद्मा-धराः शक्तयो वेदावेदवती धराऽपि च महालक्ष्मीः सुकेशालया। देवी भार्गवगामिनी जनकजा मा रेवती रुक्मिणी वेदाद्या प्रभयान्विता दश रमाः कुर्वन्तु मे मङ्गलम् ॥६॥ शत्रुध्वंसि सुदर्शनं सुखकरं श्रीपाञ्चजन्यः सदा बाणाः शार्ङ्गसमर्ष-हर्षजनकं कौमोदकी नन्दकः। सत्पद्मं मुसलं हलञ्च परशुर्दिव्यायुधानि प्रभोः सेनाधीशखगेशभोगिपतयः कुर्वन्तु मे मङ्गलम् ॥ ७ ॥ हंसो धर्मनिदर्शनो हरि-मुखो यज्ञश्च धन्वन्तरिः पाथोजो मिथुनोदितो हरिरलङ्कारः पृथिव्याः पृथुः। आद्यो वेदमुखश्च जन्मनिलयो नारायणो वै विराट् श्वेतद्वीपनिवासिजीवहृदयः कुर्वन्तु नो मङ्गलम् ॥ ८ ॥ विष्वक्सेनमुनिर्ह्यनन्तमुनयः श्रीसम्प्रदायादिमा येऽन्ये

भूतभविष्यद्दश्य समये श्रीरङ्गभूभूषणाः। ये वै भागवताः सुखा दशगणा भृत्या नरा वानराः श्वेतद्वीपनिवासिनो नरवराः कुर्वन्तु नो मङ्गलम् ॥ ९ ॥ इत्युक्तं भवमङ्गलाष्टकमिदं सुश्लोकसङ्कीर्त्तनं श्रीमद्भागवतप्रसादजनकं श्रीवेङ्कटेशेन यत्। भक्ता ये प्रपठन्ति शुद्धमनसः प्रोत्फुल्लहृत्पङ्कजास्तेषां वाञ्छितमङ्गलं प्रकुरुते भक्तिप्रियो माधवः ॥ १० ॥

॥ इति श्रीभवमङ्गलाष्टकस्तोत्रं सम्पूर्णम् ॥

---

# पञ्चायुधस्तोत्रम्

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम्। सुरद्विषां प्राणविनाशि विष्णोश्चक्रं सदाऽहं शरणम्प्रपद्ये ॥ १ ॥ विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ता। तम्पाञ्चजन्यं शशिकोटिशुभ्रं शङ्खं सदाऽहं शरणम्प्रपद्ये ॥ २ ॥ हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहन्त्रीम्। वैकुण्ठवामाग्रकराभिमृष्टां गदां सदाऽहं शरणम्प्रपद्ये ॥३॥ रक्षोऽसुराणां कठिनोग्रकण्ठच्छेदक्षरच्छोणितदिग्धधारम्। तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाऽहं शरणम्प्रपद्ये ॥४॥ यज्ज्यानिनादश्रवणात्सुराणां चेतांसि निर्मुक्तभयानि सद्यः। भवन्ति दैत्याशनिबाणवर्षि शार्ङ्गं सदाऽहं शरणम्प्रपद्ये ॥ ५ ॥ इमं हरेः पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनम्प्रभाते। समस्तदुःखानि भयानि सद्यः पापानि नश्यन्ति सुखानि सन्ति ॥६॥ वने रणे शत्रुजलाग्निमध्ये यदृच्छयाऽऽपत्सु महाभयेषु। इदम्पठन् स्तोत्रमनाकुलात्मा सुखी भवेत्तत्कृतसर्वरक्षः ॥ ७ ॥ भोगे रोगभयं सुखे क्षयभयं वित्ते च राज्ञोभयं विद्यायां कलिभीस्तपे करणभीरूपाद्भयं योषिति। इष्टे शोकभयं रणे रिपुभयं काये कृतान्ताद्भयं चेत्थं जन्मनिरर्थकं क्षितितले विष्णोः पदं निर्भयम् ॥ ८ ॥

॥ इति पञ्चायुधस्तोत्रं सम्पूर्णम् ॥

# श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

श्रीभूमिरुवाच । अलङ्कृतं जन्म पुंसामपि नन्दव्रजौकसाम् । यस्य देवस्य कृष्णस्य लीलाविग्रहधारिणः ॥ १ ॥ यानि यानि प्रयुक्तानि सन्ति नामान्यनेकशः । मुख्यानि तेषु नामानि श्रोतुकामा चिरादहम् ॥ २ ॥ एतानि ब्रूहि नामानि वासुदेवस्य वासुके । नातः परतरम्पुण्यं त्रिषुलोकेषु मे भवेत् ॥ ३ ॥ शेष उवाच । वसुन्धरे ! वरारोहे ! सर्वकामसुखप्रदम् । सर्वमङ्गलमूर्द्धन्यमणिमाद्यष्टसिद्धिदम् ॥४॥ महापातककोटिघ्नं सर्वतीर्थफलप्रदम् । शृणु देवि ! प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ॥ ५ ॥ सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या च यत्फलम् । एकावृत्त्या च कृष्णस्य नामैकं तत्प्रयच्छति ॥ ६ ॥ तस्मात्पुण्यतमं चैतत्स्तोत्रं शृणु वसुन्धरे ! ।

ॐ अस्य श्रीकृष्णाष्टोत्तरशतनामामृतस्तोत्रमन्त्रस्य श्रीशेषो भगवानृषिः अनुष्टुप् छन्दः श्रीकृष्णः परमात्मा देवता श्रीकृष्णप्रसादसिद्ध्यर्थं जपे विनियोगः ।

अथ ध्यानम् । बालाय नीलवपुषे नवकिङ्किणीकजालाभिरामजघनाय दिगम्बराय । शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय नवनीतमुषे नमस्ते ।

ॐ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः । वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ ७ ॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः । चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ॥ ८ ॥ देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ९ ॥ पूतनाजीवितहरः शकटासुरभञ्जनः नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ १० ॥ नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः । नवनीतनवाहारो मुचुकुन्दप्रसादकः ॥ ११ ॥ षोडशस्त्रीसहस्रेशस्त्रिभङ्गललिताकृतिः । शुकवागमृताब्धीन्दुर्गोविन्दो योगिनाम्पतिः ॥१२॥ वत्सवाटचरोऽनन्तो धेनुकासुरभञ्जनः । तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥१३॥ उत्तालतालभेत्ता च तमालश्यामलाकृतिः । गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥१४॥ इलापतिः परञ्ज्योतिर्यादवेन्द्रो यदूद्वहः । वनमाली पीतवासाः पारिजातापहारक

॥ १५ ॥ गोवर्द्धनाचलोद्धर्त्ता गोपालः सर्वपालकः । अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥१६॥ मधुहा मथुरानाथो द्वारिकानायकोबली । वृन्दावनान्तःसञ्चारी तुलसीदामभूषणः ॥१७॥ स्यमन्तकमणेर्हर्त्ता नरनारायणात्मकः । कुब्जाकृष्टाम्बरधरो मायी परमपूरुषः ॥ १८ ॥ मुष्टिकासुरचाणूरमल्लयुद्धविशारदः । संसारवैरीकंसारिर्मुरारिर्नरकान्तकः ॥१९॥ अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः । शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥ २० ॥ विदुराक्रूरवरदो विश्वरूपप्रदर्शकः । सत्यवाक्सत्यसङ्कल्पः सत्यभामारतोजयी ॥२१॥ सुभद्रापूर्वजो जिष्णुर्भीष्ममुक्तिप्रदायकः । जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः ॥२२॥ वृषभासुरविध्वंसी बाणासुरकरान्तकः । युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ २३ ॥ पार्थसारथिरव्यक्तो गीतामृतमहोदधिः । कालीयफणमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ २४ ॥ दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः । नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥२५॥ जलक्रीडासमासक्तगोपीवस्त्रापहारकः । पुण्यश्लोकस्तीर्थपदो वेदवेद्यो दयानिधिः ॥२६॥ सर्वभूतात्मकः सर्वग्रहरूपी परात्परः । एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥२७॥ कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतम्पुरा । स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया श्रुतम् ॥२८॥ कृष्णनामामृतं नाम परमानन्दकारणम् । अनुपद्रवदुःखघ्नं परमायुर्विवर्द्धनम् ॥ २९ ॥ दानं व्रतं तपस्तीर्थं यत्कृतेत्विहजन्मनि । पठतां शृण्वतां चैव फलं कोटिगुणम्भवेत् ॥३०॥ पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् । धनावहं दरिद्राणां जयेप्सूनां जयावहम् ॥३१॥ शिशूनां गोकुलानाञ्च पुष्टिदम्पूर्णपुण्यदम् । समस्तकामदं दिव्यं कोटिजन्माघनाशनम् ॥ ३२ ॥ अन्ते च कृष्णस्मरणं भवतापत्रयापहम् । कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने ॥ ३३ ॥ नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने । इमं मन्त्रं महादेवि ! ब्रह्मनिष्ठो दिवानिशम् ॥३४॥ मनसा चिन्तयन्नित्यं जपन् शुद्धशरीरभाक् । सर्वग्रहानुग्रहभाक् सर्वप्रियतमोनरः ॥ ३५ ॥ पुत्रपौत्रैः परिवृतः समृद्धं फलमाप्नुयात् । शङ्खचक्रगदापाणे ! द्वारकानिलयाच्युत ! । गोविन्द ! पुण्डरीकाक्ष ! रक्ष मां शरणागतम् ॥३६॥

॥ इति श्रीशेषधरणीसम्वादेश्रीकृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

# विष्णुपादादिकेशान्तवर्णनस्तोत्रम्

लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्बं विभाति। पायान्नः पाञ्चजन्यः स सकलदितिजत्रासनैः पूरयन्स्वैर्निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कम्बुराजः॥ १॥ आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं ध्वान्तस्यैकान्तमन्तं यदपि च परमं सर्वधाम्नां च धाम। चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं शश्वन्नो विश्ववन्द्यं वितरतु विपुलं शर्म घर्मांशुशोभम्॥ २॥ अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्तेरस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः। सर्वं संहर्तुमिच्छोररिकुलभुवनस्फारविस्फारनादः संयत्कल्पान्तसिन्धौ शरसलिलघटावार्मुचः कार्मुकस्य॥ ३॥ जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोह्यन्ती युद्धेषूद्धूयमाना झटिति तडिदिवाऽऽलक्ष्यते यस्य मूर्तिः। सोऽसिस्त्रासाकुलाक्षत्रिदशवपुरिपुः शोणितास्वाददृप्तो नित्यानन्दाय भूयान्मधुमथनमनोनन्दको नन्दको नः। कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता सम्यग्वृत्ता स्थिताऽग्रे सपदि न सहते दर्शनं या परेषाम्। राजन्ती दैत्यजीवासवमदमुदिता लोहिता लेपनार्द्रा कामं दीप्तांशुकान्ता प्रदिशतु दयितेवाऽस्य कौमोदकी नः॥५॥ यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो यं सञ्चिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति। चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं वन्दे छन्दोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम्॥६॥ विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता सोऽनन्तः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः। पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः॥ ७॥ वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः सम्पदः स्युः समग्राः। कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम्॥ ८॥ या सूते सत्त्वजालं सकलमपि सदा सन्निधानेन पुंसो धत्ते

या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम्। धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥ ९ ॥ येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैर्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः। नित्यं निर्मूलनेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥१०॥ रेखा लेखाभिवन्द्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षौमसूत्रायमाणाः। दद्युर्नो मङ्गलानि भ्रमरभरजुषा कोमलेनाऽब्धिजायाः कम्रेणाऽऽम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥११॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानादाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता। भूमिष्ठो यस्यान्यो भुवनगृहबृहत्स्तम्भशोभां दधानः पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥१२॥ आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्सम्पदोरेकधाम। ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्याञ्चिताभ्यामुभाभ्यां प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपङ्केरुहाभ्याम् ॥१३॥ येभ्यो वर्णश्चतुर्थश्चरणत उदभूदादिसर्गे प्रजानां साहस्री चाऽपि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम्। व्याप्ता विश्वम्भरा यैरतिविततनोर्विश्वमूर्तेर्विराजो विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वङ्घ्रिपङ्केरुहेभ्यः ॥ १४ ॥ विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या राजीवस्येव रम्या हिमजलकणिकालङ्कृताग्रा दलाली। अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थनीयानि सेयं दद्यादाद्यानवद्या ततिरतिरुचिरा मङ्गलान्यङ्गुलीनाम् ॥ १५ ॥ यस्यां दृष्ट्वाऽमलायां प्रतिकृतिममराः स्वां भवन्त्यानमन्तः सेन्द्राः सान्द्रीकृतेर्ष्याः स्वपरसुरकुलाशङ्कयाऽऽतङ्कवन्तः। सा सद्यः सातिरेकां सकलसुखकरीं सम्पदं साधयेन्नश्चञ्चच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥१६॥ पादाम्भोजन्मसेवासमवनतसुरव्रातभास्वत्किरीटप्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रितं यद्विभाति। नम्राङ्गाणां हरेर्नो हरिदुपलमहाकूर्मसौन्दर्यहारिच्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमन्तम् ॥ १७ ॥ श्रीमत्यौ चारुवृत्ते

करपरिमलनानन्दहृष्टे रमाया सौन्दर्याढ्येन्द्रनीलोपलरचितमहादण्डयोः कान्तिचौरे। सूरीन्द्रैः स्तूयमाने सुरकुलसुखदे मूदितारातिसङ्घे जङ्घे नारायणीये मुहुरपि जयतामस्मदंहो हरन्त्यौ ॥ १८ ॥ सम्यक् साह्यं विधातुं सममपि सततं जङ्घयोः खिन्नयोर्यं भारीभूतोरुदण्डद्वयभरणकृतोत्तम्भभावं भजेते। चित्तादर्शं निधातुं महितमिव सता ते समुद्गायमाने वृत्ताकारे विधत्तां हृदि मुदमजितस्याऽनिशं जानुनी नः ॥१९॥ देवो भीतिं विधातुः सपदि विदधतौ कैटभाख्यं मधुं यावारोप्यारूढगर्वावधिजलधि ययोरेव दैत्यौ जघान। वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलावूरू चारू दृशस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥२०॥ पीतेन द्योततं यच्चतुरपरिहितेनाम्बरेणात्युदारं जातालङ्कारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः। एतत्पातित्यदात्रीं जघनमनिघनादेनसां माननीयं सालस्येनैव चेतो विषयमघतरस्यातु पीताम्बरस्य ॥ २१ ॥ यस्या दाम्न्या त्रिधाम्नो जघनकलितया भ्राजतेऽङ्गं यथाऽब्धेर्मध्यस्थो मन्दराद्रिर्भुजगपतिमहाभोगसन्नद्धमध्यः। काञ्ची सा काञ्चनाभा, मणिवरकिरणैरुद्गमद्भिः प्रदीप्ता कल्यां कल्याणदात्री मम मतिमनिशं कम्ररूपां करोतु ॥२२॥ उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम्। तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥ २३ ॥ पातालं यस्य नालं वलयमपि दिशां पत्रपङ्क्तिं नगेन्द्रान्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम्। भूयाद्वायत्स्वयम्भूमधुकरभवनं भूमयं कामदं नो नालीकं नाभिपद्माकरभवमुरु तन्नागशय्यस्य शौरेः ॥ २४ ॥ कान्त्यम्भः पूरपूर्णे लसदसितवलीभङ्गभास्वत्तरङ्गे गम्भीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे। क्रीडत्वानद्धहेमोदरनलिनमहावाडवाग्निप्रभाढ्ये कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥२५॥ नाभीनालीकमूलादधिकपरिमलोन्मोदितानामलीनां माला नीलेव यान्ती स्फुरति रुचिमती वक्षसो न्मुखी या। रम्या सा रोमराजिर्महितरुचिमती मध्यभागस्य विष्णोश्चित्तस्था मा विरंसीच्चिरतरमुचिता साधयन्ती श्रियं नः ॥ २६ ॥

आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पैः कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च। अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥२७॥ संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं श्रीवत्सोल्लासि फुल्लप्रतिवनवनमालांशुराजद्भुजान्तम्। वक्षः श्रीवृक्षकान्तं मधुकरनिकरश्यामलं शार्ङ्गपाणेः संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥२८॥ कान्तं वक्षो नितान्तं विदधदिव गलं क(का)लिमा कालशत्रोरिन्दोर्बिम्बं यथाङ्को मधुप इव तरोर्मञ्जरीं राजते यः। श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः श्रीवत्सः श्रीपतेः स श्रिय इव दयितोवत्स उच्चैः श्रियं नः॥ २९॥ सम्भूयाम्भोधिमध्यात्सपदि सहजया यः श्रिया सन्निधत्ते नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये। आशाः सर्वाः प्रकाशा विदधदपि दधत्यात्मभासान्यतेजांस्याश्चर्यस्याकरो नो द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ।३०॥ या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना साकं साकम्पमंसे वसति विदधती वासुभद्रं सुभद्रम्। सारं साराङ्गसङ्घैर्मुखरितकुसुमा मेचकान्ता च कान्ता माला मालालितास्मान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥३१॥ हारस्योरुप्रभाभिः प्रतिवनवनमालांशुभिः प्रांशुभिर्यच्छ्रीभिश्चाप्यङ्गदानां शबलितरुचिभिर्निष्कभाभिश्च भाति। बाहुल्येनैव बद्धाञ्जलिपुटमजितस्याभियाचामहे तद्बन्धार्तिं बाधतां नो बहुविहितकरीं बन्धुरं बाहुमूलम्॥ ३२॥ विश्वत्राणैकदीक्षास्तदनुगुणगणक्षत्त्रनिर्माणदक्षाः कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम्। शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशङ्खौ सहस्रं बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम्॥ ३३॥ कण्ठाकल्पोद्गतैर्यः कनकमयलसत्कुण्डलोत्थैरुदारैरुद्द्योतैः कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति। कण्ठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे वैकुण्ठीयेऽत्र कण्ठे वसतु मम मतिः कुण्ठभावं विहाय ॥ ३४॥ पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभागः काले काले च कम्बुप्रवरशशधरापूरणे यः प्रवीणः। वक्त्राकाशान्तरस्थरितरयति नितरां दन्ततारौघशोभां

श्रीमद्दन्तत्विषांशुमणिरघतमोनाशनायास्तु सौ न ॥३५॥ नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमाया वक्त्रेन्दोरन्तराले कृतवसतिरिवाभाति नक्षत्रराजिः। लक्ष्मीकान्तस्य कान्ताकृतिरतिविलसन्मुग्धमुक्ताफलश्रीर्दन्ताली सन्ततं सा नतिनुतिनिरतान्रक्षतादक्षता नः ॥३६॥ ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव! सम्भावये त्वां शम्भो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः। इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्नस्यास्येन्दोरास्रवन्ती वरवचनसुधा ह्लादयेन्मानसं नः ॥३७॥ कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुण्डलप्रोतदीप्यन्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत्। प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारेर्गाढामागामिनीं नो गमयतु विपदं गण्डयोर्मण्डलं तत् ॥३८॥ वक्त्राम्भोजे लसन्तं मुहुरधरमणिं पक्वबिम्बाभिरामं दृष्ट्वा द्रष्टुं शुकस्य स्फुटमवतरतस्तुण्डदण्डायते नः। घोणः शोणीकृतात्मा श्रवणयुगलसत्कुण्डलोस्रैर्मुरारे, प्राणाख्यस्यानिलस्य प्रसरणसरणि प्राणदानाय नः स्तात् ॥ ३९ ॥ दिक्कालौ वेदयन्तौ जगति मुहुरिमौ सञ्चरन्तौ रवीन्दू त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनीन्द्राः। अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥ ४० ॥ लक्ष्माकारालकालिस्फुरदलिकशशाङ्कार्धसन्दर्शमीलन्नेत्राम्भोजप्रबोधोत्सुकनिभृततरालीनभृङ्गच्छदाभे। लक्ष्मीनाथस्य लक्षीकृतविबुधगणापाङ्गबाणासनार्धच्छाये नो भूतिभूरिप्रसवकुशले भ्रूलते पालयेताम् ॥ ४१ ॥ पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसङ्घाः। नृत्यल्लालाटरङ्गे रजनिकरतनोरर्धखण्डावदाते कालव्यालद्वयं वा विलसति समया बालिका मातरं नः ॥ ४२ ॥ लक्ष्यस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्षप्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिङ्गम्। भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्यादुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमः खण्डनं मण्डनं च ॥ ४३ ॥ पीठीभूतालकान्ते कृतमुकुटमहादेवलिङ्गप्रतिष्ठे लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय। प्रोद्घाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्तीं स्फुटाङ्गं पटीयं भाव-

नाट्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥४४॥ मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुन्तलाली कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरः स्वर्धुनीस्पर्धया नु। राहुर्वा याति वक्त्रं सकलशशिकलाभ्रान्तिलोलान्तरात्मा लोकैरालोच्यते या प्रदिशतु सकलैः साखिलं मङ्गलं नः ॥४५॥ सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा व्याप्तव्योमान्तरालास्तरलरुचिजलारञ्जिताः स्पष्टभासः। देहच्छायोद्गमाभा रिपुवपुरगुरुप्लोषरोषाग्निधूम्याः केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥४६॥ यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिः प्रतानस्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या। कुर्वत्पारेपयोधि ज्वलदकृत महाभास्वदौर्वाग्निशङ्कां शश्वन्नः शर्म दिश्यात्कलिकलुषतमः पाटनं तत्किरीटम् ॥ ४७ ॥ भ्रान्त्वा भ्रान्त्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेका गन्तुं नाऽन्तं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात्। उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं देहाम्भोभिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः ॥ ४८ ॥ मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्की भविष्यन्। विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥४९॥ यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणास्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः। नित्यानन्दं स्वसम्विन्निरवधिममृतं स्वान्तसङ्क्रान्तबिम्बच्छायापत्याऽपि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥ ५० ॥ आपादादाच शीर्ष्णो वपुरिदमनघं वैष्णवं यः स चित्ते धत्ते नित्यं निरस्ताखिलकलिकलुषे सन्ततान्तः प्रमोदः। जुह्वज्जिह्वाकृशानौ हरिचरितहविः स्तोत्रमन्त्रानुपाठैस्तत्पादाम्भोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥५१॥ इति श्रीशङ्कराचार्यकृतं विष्णुपादादिकेशान्तवर्णनस्तोत्रं सम्पूर्णम् ॥

---

# श्रीविष्णुमहिम्नःस्तोत्रम्

महिम्नस्ते पारं विधिहरफणीन्द्रप्रभृतयो विदुर्नाद्याप्यज्ञश्चलमतिरहं नाथ ! नु कथम् । विजानीयामद्धा नलिननयनात्मीयवचसो विशुद्ध्यै वक्ष्यामीषदपि तु तथाऽपि स्वमतितः ॥ १ ॥ यदाहुर्ब्रह्मैके पुरुषमितरे कर्म च परेऽपरे बुद्धं चाऽन्ये शिवमपि च धातारमपरे । तथा शक्तिं केचिद्गणपतिमुतार्कं च सुधियो मतीनां वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २ ॥ शिवः पादाम्भस्ते शिरसि धृतवानादरयुतं तथा शक्तिश्चाऽसौ तव तनुजतेजोमयतनुः । दिनेशं चैवाऽमुं तव नयनमूचुस्तु निगमास्त्वदन्यः को ध्येयो जगति किल देवो वद विभो ! ॥ ३ ॥ क्वचिन्मत्स्यः कूर्मः क्वचिदपि वराहो नरहरिः क्वचित्खर्वो रामो दशरथसुतो नन्दतनयः । क्वचिद्बुद्धः कल्किर्विहरसि कुभारापहृतये स्वतन्त्रोऽजो नित्यो विभुरपि तवाऽऽक्रीडनमिदम् ॥४॥ हताम्नायेनोक्तं स्तवनवरमाकर्ण्य विधिना द्रुतं मात्स्यं धृत्वा वपुरजरशङ्खासुरमथो क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेरशेषं सन्त्रातं जगदपि च वेदैकशरणम् ॥ ५ ॥ निमज्जन्तं वार्धौ नगवरमुपालोक्य सहसा हितार्थं देवानां कमठवपुषाऽऽविश्य गहनम् । पयोराशिं पृष्ठे तमजित सलीलं धृतवतो जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ॥ ६ ॥ हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं समादायाऽऽमर्त्यैः कमलजमुखैरम्बरगतैः । नुतेनाऽनन्तात्मन्नचिरमवभाति स्म विधृता त्वया दंष्ट्राग्रेऽसाववनिरखिला कन्दुक इव ॥ ७ ॥ हरिः काऽस्तीत्युक्ते दनुजपतिनाऽऽपूर्य निखिलं जगन्नादैः स्तम्भान्नरहरिशरीरेण करजैः । समुत्पत्याशूरावसुरवरमादारितवतस्तवाख्याता भूमन्किमु जगति नोसर्वगतता ॥ ८ ॥ त्रिलोक्याजं द्रागां कपटलघुकायं सुररिपुर्निषिद्धोऽपि प्रादादसुरगुरुणाऽऽत्मीयमखिलम् । प्रसन्नस्तद्भक्त्या त्यजसि किल नाद्याऽपि भवनं बलेर्भक्ताधीन्यं तव विदितमेवाऽमरपते ! ॥ ९ ॥ समाधावासक्तं नृपतिनतयैर्वीक्ष्य पितरं हतं वाणै रोषादुरुतरमुपादाय परशुम् । विना क्षत्रं विष्णो ! क्षितितलमशेषं कृतवतोऽसकृत्किं भूभारोद्धरणपटुता ते न विदिता ॥१०॥ समा-

राध्योमेशं त्रिभुवनमिदं वासवमुखं वशे चक्रे चक्रिन्नगणयदनीशं जगदिदम्। गतोऽसौ लङ्केशस्त्वचिरमथ ते बाणविषयं न केनाऽऽप्तं त्वत्तः फलमविनयस्याऽसुररिपो ॥११॥ क्वचिद्दिव्यं शौर्यं क्वचिदपि रणे कापुरुषता क्वचिद्गीताज्ञानं क्वचिदपि परस्त्रीविहरणम्। क्वचिन्मृत्स्नाशित्वं क्वचिदपि च वैकुण्ठविभवश्चरित्रं ते नूनं शरणद! विमोहाय कुधियाम् ॥ १२ ॥ न हिंस्यादित्येतद्ध्रुवमवितथं वाक्यमबुधैरथाग्नीषोमीयं पशुमिति तु विप्रैर्निगदितम्। तवैतन्नास्थानेऽसुरगणविमोहाय गदतः समृद्धिर्नीचानां नयकर! हि दुःखाय जगतः ॥१३॥ विभागे वर्णानां निगमनिचये चाऽवनितले विलुप्ते सञ्जातो द्विजवरगृहे शम्भलपुरे। समारुह्याऽऽश्वश्वं लसदसिकरो म्लेच्छनिकरान्निहन्तास्युन्मत्तान्किल कलियुगान्ते युगपते! ॥१४॥ गभीरे कासारे जलचरवराकृष्टचरणो रणे शक्तो मज्जन्नभयद जलेऽचिन्तयदसौ। यदा नागेन्द्रस्त्वां सपदि पदपाशादपगतो गतः स्वर्गं स्थानं भवति विपदां ते किमु जनः॥ १५ ॥ सुतैः पृष्टो वेधाः प्रतिवचनदानेऽप्रभुरसावथात्मन्यात्मानं शरणमगमत्त्वां त्रिजगताम्। ततस्तेऽस्तातङ्का ययुरथ मुदं हंसवपुषा त्वया ते सार्वज्ञं प्रथितममरेशेह किमु नो ॥१६॥ समाविद्धो मातुर्वचनविशिखैराशु विपिनं तपश्चक्रे गत्वा तव परमतोषाय परमम्। ध्रुवो लेभे दिव्यं पदमचलमल्पेऽपि वयसि किमस्त्यस्मिँल्लोके त्वयि वरद! तुष्टे दुरधिगम् ॥१७॥ वृकाद्भीतस्तूर्णं स्वजनभयभित्त्वां पशुपतिर्भ्रमँल्लोकान्सर्वाञ्छरणमुपयातोऽथ दनुजः। स्वयं भस्मीभूतस्तव वचनभङ्गोद्गतमती रमेशाऽहो माया तव दुरनुमेयाऽखिलजनैः॥ १८ ॥ हृतं दैत्यैर्दृष्ट्वाऽमृतघटमजय्यैस्तु नयतः कटाक्षैः सम्मोहं युवतिवरवेषेण दितिजान्। समग्रं पीयूषं सुभग! सुरपूगाय ददतः समस्याऽपि प्रायस्तव खलु हि भृत्येष्वभिरतिः ॥१९॥ समाकृष्टा दुष्टैर्द्रुपदतनयाऽलब्धशरणा सभायां सर्वात्मंस्तव शरणमुच्चैरुपगता। समक्षं सर्वेषामभवदचिरं चीरनिचयः स्मृतेस्ते साफल्यं नयनविषयं नो किमु सताम् ॥२०॥ वदन्त्येके स्थानं तव वरद वैकुण्ठमपरे गवां लोकं लोकं फणिनिलयपातालमितरे। तथाऽन्ये क्षीरोदं हृदयनलिनं चाऽपि तु सतां न मन्ये तत्स्थानं त्वहमिह च यत्राऽसि न विभो ॥२१॥ शिवोऽहं रुद्राणाम-

# श्रीविष्णुमहिम्नःस्तोत्रम्

महिम्नस्ते पारं विधिहरफणीन्द्रप्रभृतयो विदुर्नाद्याप्यज्ञश्चलमतिरहं नाथ ! नु कथम्। विजानीयामद्धा नलिननयनात्मीयवचसो विशुद्धयै वक्ष्यामीषदपि तु तथाऽपि स्वमतितः ॥ १ ॥ यदाहुर्ब्रह्मैके पुरुषमितरे कर्म च परेऽपरे बुद्धं चाऽन्ये शिवमपि च धातारमपरे। तथा शक्तिं केचिद्गणपतिमुताऽर्कं च सुधियो मतीनां वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २ ॥ शिवः पादाम्भस्ते शिरसि धृतवानादरयुतं तथा शक्तिश्चाऽसौ तव तनुजतेजोमयतनुः। दिनेशं चैवाऽयं तव नयनमृत्युतु तिम-साम्यवदन्यः को ध्येयो जगति किल देवो वद विभो ! ॥ ३ ॥ क्वचिन्मत्स्यः कूर्मः क्वचिदपि वराहो नरहरिः क्वचित्खर्वो रामो दशरथसुतो नन्दतनयः। क्वचिद्बुद्धः कल्किर्विहरसि कुभारापहृतये स्वतन्त्रोऽजो नित्यो विभुरपि तवाऽक्रीडनमिदम् ॥४॥ हताम्नायेनोक्तं स्तवनवरमाकर्ण्य विधिना द्रुतं मात्स्यं धृत्वा वपुरजरशङ्खासुरमथो। क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेरशेषं सन्त्रातं जगदपि च येनैव शरणम् ॥ ५ ॥ निमज्जन्तं वार्धौ नगवरमुपालोक्य सहसा हितार्थं देवानां कमठवपुषाऽऽविश्य गह-नम्। पयोराशिं पृष्ठे तमजित सलीलं धृतवतो जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ॥ ६ ॥ हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं समादायाऽऽमर्त्यैः कम-जमुखैरम्बरगतैः। स्तुतेनाऽनन्तात्मन्नचिरमवभाति स्म विधृता त्वया दंष्ट्राग्रेऽसाव-वनिरखिला कन्दुक इव ॥ ७ ॥ हरिः क्वाऽस्तीत्युक्ते दनुजपतिनाऽऽपूर्य निखिलं जगन्नादैः स्तम्भान्नरहरिशरीरेण करजैः। समुत्पत्याशूरावसुरवरमादारितवतस्त-वाऽऽख्याता भूमन्किमु जगति नो सर्वगतता ॥ ८ ॥ विलोक्याज्ञं द्वारं वपटलघुकायं सुररिपुर्निषिद्धोऽपि प्रादादसुरगुरुणाऽऽत्मीयमखिलम्। प्रसन्नस्तद्भक्त्या त्यजसि किल नाद्याऽपि भवनं बलेर्भक्ताधीनत्वं तव विदितमेवाऽमरपते ॥ ९॥ समाधावासक्तं नृप-तितनयैर्वीक्ष्य पितरं हतं वाणैः कोपादुत्तरमुपादाय परशुम्। विना क्षत्रं विष्णो ! क्षितितलमशेषं कृतवतोऽसकृत्किं भूभारोद्धरणपटुता ते न विदिता ॥१०॥ समा-

हिमनगराजो स्थिरपदां मुनीनां व्यासोऽहं सुरवर ! समुद्रोऽस्मि सरसाम् । कुबेरो यक्षाणामिति तव वचो मन्दमतये न जाने तज्जानन् जगति ननु यत्रासि भगवन् ! ॥ २२ ॥ शिरो नाको नेत्रे शशिदिनकरावम्बरमुरो दिशः श्रोत्रे वाणी निगमनिकरस्ते कटिरिला । अकूपारो बस्तिश्चरणमपि पातालमिति यं स्वरूपं तेऽज्ञात्वा नृतनुमवजानन्ति कुधियः ॥२३॥ शरीरं वैकुण्ठं हृदयनलिनं धामसदनं मनोवृत्तिस्तार्क्ष्यो मतिरियमथो सागरसुता । विहारस्तेऽवस्थात्रितयमसवः पार्षदगणो न पश्यत्यज्ञा त्वामिह बहिरहो यान्ति जनता ॥ २४ ॥ सुघोरं कान्तारं विशति च तडागं सुगहनं तथोत्तुङ्गं शृङ्गं सपदि समारोहति गिरेः । प्रसूनार्थं चेतोम्बुजममलमेकं त्वयि विभो ! समर्प्याऽज्ञस्तूर्णं वत न च सुखं विन्दति जनः ॥२५॥ कृतैकान्तावासा विगतनिखिलाशा शमपरा जितश्वासोच्छ्वासास्त्रुटितभवपाशाः सुयमिनः । परं ज्योतिः पश्यन्त्यनघ यदि पश्यन्तु मम तु प्रियाऽऽश्लिष्टं भूयान्नयनविषयं ते किल वपुः ॥२६॥ कदा गङ्गोत्तुङ्गामलतरतरङ्गाच्छपुलिने वसन्नाशापाशादखिलखलदाशादपगतः । अये लक्ष्मीकान्ताम्बुजनयन तातामरपते ! प्रसीदेत्याजल्पन्नमरवर ! नेष्यामि समयम् ॥२७॥ कदा शृङ्गैः स्फीते मुनिगणपरीते हिमनगे द्रुमावीते वीते सुरमधुरगीते प्रतिवसन् । क्वचिद्ध्यानासक्तो विषयसुविरक्तो भवहरं स्मरंस्ते पादाब्जं जनिहर ! समेष्यामि विलयम् ॥२८॥ सुधापानं स्नानं न च विपुलदानं न निगमो न यागो नो योगो न च निखिलभोगोपरमणम् । जपो नो नो तीर्थं व्रतमिह न चोऽग्रं त्वयि तपो विना भक्तिं तेऽलं भवभयविनाशाय मधुहन् ! ॥ २९ ॥ नमः सर्वेष्टाय श्रुतिशिखरदृष्टाय च नमो नमोऽसंश्लिष्टाय त्रिभुवननिविष्टाय च नमः । नमो विस्पष्टाय प्रणवपरिमृष्टाय च नमो नमस्ते सर्वात्मन्पुनरपि पुनस्ते मम नमः ॥ ३० ॥ कणान्कश्चिद्वृष्टेर्गणननिपुणस्तूर्णमवनेस्तथाशेषान्पांसूनमिन कलयेच्चापि तु जनः । नभः पिण्डीकुर्याद्चिरमपि चेच्चर्मवदिदं तथाऽपीशाऽसौ ते कलयितुमलं नाऽखिलगुणान् ॥३१॥ क्व माहात्म्यं सीमोज्झितमविषयं वेदवचसां विभो ! ते मे चेतः क्व च विविधतापाहतमिदम् । मयेदं यत्किञ्चिद्गदितमथ वाल्येन तु

गुरो! गृहाणैतच्छुद्धार्पितमिह न हेयं हि महताम् ॥३२॥ इति हरिस्तवनं सुमनोहरं परमहंसजनेन समीरितम्। सुगमसुन्दरसारपदास्पदं तदिदमस्तु हरेरनिशं मुदे ॥३३॥ गदारथाङ्गाम्बुजकम्बुधारिणो रमासमाश्लिष्टतनोस्तनोतु नः। बिलेशयाधीशशरीरशायिनः शिवं स्तवोऽजस्रमयं परं हरेः ॥३४॥ पठेदिमं यस्तु नरः परं स्तवं समाहितोघौघघनप्रभञ्जनम्। स विन्दतेऽत्राखिलभोगसम्पदो महीयते विष्णुपदे ततो ध्रुवम् ॥ ३५ ॥

॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीविष्णुमहिम्नःस्तोत्रं समाप्तम् ॥

---

# श्रीहरिस्तोत्रम्

जगज्जालपालं कचत्कण्ठमालं शरच्चन्द्रभालं महादैत्यकालम्। नमोनीलकायं दुराधारमायं सुपद्मासहायं भजेऽहं भजेऽहम् ॥ १ ॥ सदाम्भोधिवासं गलत्पुष्पहासं जगत्सन्निवासं शतादित्यभासम्। गदाचक्रशस्त्रं लसत्पीतवस्त्रं हसच्चारुवक्त्रं भजे० ॥ २ ॥ रमाकण्ठहारं श्रुतिव्रातसारं जलान्तर्विहारं धराभारहारम्। चिदानन्दरूपं मनोज्ञस्वरूपं धृतानेकरूपं भजे० ॥ ३ ॥ जराजन्महीनं परानन्दपीनं समाधानलीनं सदैवानवीनम्। जगज्जन्महेतुं सुरानीककेतुं त्रिलोकैकसेतुं भजे० ॥ ४ ॥ कृताम्नायगानं खगाधीशयानं विमुक्तेर्निदानं हरारातिमानम्। स्वभक्तानुकूलं जगद्वृक्षमूलं निरस्तार्तशूलं भजे० ॥ ५ ॥ समस्तामरेशं द्विरेफाभकेशं जगद्विम्बलेशं हृदाकाशदेशम्। सदा दिव्यदेहं विमुक्ताखिलेहं सुवैकुण्ठगेहं भजे० ॥ ६ ॥ सुरालीवलिष्ठं त्रिलोकीवरिष्ठं गुरूणां गरिष्ठं स्वरूपैकनिष्ठम्। सदा युद्धधीरं महावीरवीरं भवाम्भोधितीरं भजे० ॥ ७ ॥ रमावामभागं तलानग्ननागं कृताधीनयागं गतारागरागम्। मुनीन्द्रैः सुगीतं सुरैः सम्परीतं गुणौघैरतीतं भजे० ॥ ८ ॥ इदं यस्तु नित्यं समाधाय चित्तं पठेदष्टकं कष्टहारं मुरारेः। स विष्णोर्विशोकं ध्रुवं याति लोकं जराजन्मशोकं पुनर्विन्दते नो ॥ ९ ॥

॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीहरिस्तोत्रं सम्पूर्णम् ॥

न जनको जननी न जाया नैवाऽऽत्मजो न च कुलं विपुलं बलं वा। सन्दृश्यते न किल कोऽपि सहायको मे तस्मा० ॥ २ ॥ नोपासिता मदमपास्य मया महान्तस्तीर्थानि चाऽऽस्तिकधिया नहि सेवितानि। देवार्चनं च विधिवन्न कृतं कदाऽपि तस्मा० ॥ ३ ॥ दुर्वासना मम सदा परिकर्षयन्ति चित्तं शरीरमपि रोगगणा दहन्ति। सञ्जीवनं च परहस्तगतं सदैव तस्मा० ॥ ४ ॥ पूर्वं कृतानि दुरितानि मया तु यानि स्मृत्वाऽखिलानि हृदयं परिकम्पते मे। ख्याता च ते पतितपावनता तु यस्मात्तस्मा० ॥ ५ ॥ दुःखं जराजननजं विविधाश्च रोगाः काकश्वसूकरजनिर्निरये च पातः। त्वद्विस्मृतेः फलमिदं विततं हि लोके तस्मा० ॥ ६ ॥ नीचोऽपि पापवलितोऽपि विनिन्दितोऽपि ब्रूयात्तवाऽहमिति यस्तु किलैकवारम्। तं यच्छसीश निजलोकमिति व्रतं ते तस्मा० ॥ ७ ॥ वेदेषु धर्मवचनेषु तथाऽऽगमेषु रामायणेऽपि च पुराणकदम्बके वा। सर्वत्र सर्वविधिना गदितस्त्वमेव तस्मात्त्वमेव शरणं मम शङ्खपाणे! ॥ ८ ॥

॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीहरिशरणाष्टकं सम्पूर्णम् ॥

---

## श्रीदीनबन्ध्वष्टकम्

यस्मादिदं जगदुदेति चतुर्मुखाद्यं यस्मिन्नवस्थितमशेषमशेषमूले। यत्रोपयाति विलयं च तमस्तमन्ये दृग्गोचरो भवतु मेऽद्य स दीनबन्धुः ॥ १ ॥ चक्रं सहस्रकरचारु करारविन्दे गुर्वी गदा दरवरश्च विभाति यस्य। पक्षीन्द्रपृष्ठपरिरोपितपादपद्मो दृग्गो० ॥ २ ॥ येनोद्धृता वसुमती सलिले निमग्ना नग्ना च पाण्डववधूः स्थगिता दुकूलैः। सम्मोचितो जलचरस्य मुखाद्गजेन्द्रो दृग्गो० ॥ ३ ॥ यस्यार्द्रदृष्टिवशतस्तु सुराः समृद्धिं कोपेक्षणेन दनुजा विलयं व्रजन्ति। भीताश्चरन्ति च यतोऽर्कयमानिलाद्या दृग्गो० ॥ ४ ॥ गायन्ति सामकुशला यमजं मखेषु ध्यायन्ति

धीरमतयो यतयो विविक्ते । पश्यन्ति योगिपुरुषाः पुरुषं शरीरे इगो० ॥ ५ ॥ आकाररूपगुणयोगविवर्जितोऽपि भक्तानुकम्पननिमित्तगृहीतमूर्त्तिः । यः सर्वगोऽपि कृतशेषशरीरशय्यो इगो० ॥ ६ ॥ यस्याङ्घ्रिपङ्कजमनिद्रमुनीन्द्रवृन्दैराराध्यते भवदवानलदाहशान्त्यै । सर्वापराधमविचिन्त्य ममाखिलात्मा इगो० ॥ ७ ॥ यन्नामकीर्त्तनपरः श्वपचोऽपि नूनं हित्वाऽखिलं कलिमलं भुवनं पुनाति । दग्ध्वा ममाघमखिलं करुणेक्षणेन इगो० ॥ ८ ॥ दीनबन्ध्वष्टकं पुण्यं ब्रह्मानन्देन भाषितम् । यः पठेत्प्रयतो नित्यं तस्य विष्णुः प्रसीदति ॥ ९ ॥

॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीदीनबन्ध्वष्टकं सम्पूर्णम् ॥

---

# श्रीरमापत्यष्टकम्

## सङ्कष्टनाशनविष्णुस्तोत्रम्

नारद उवाच। पुनर्दैत्यं समायान्तं दृष्ट्वा देवाः सवासवाः। भयप्रकम्पिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १ ॥ देवा ऊचुः। नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायाऽऽर्तिहर्त्रे। विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदाशङ्खपद्मारिहस्ताय तेऽस्तु ॥२॥ रमावल्लभायाऽसुराणां निहन्त्रे भुजङ्गारियानाय पीताम्बराय। मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताःस्मो नताः स्मः ॥३॥ नमो दैत्यसन्तापितामर्त्यदुःखाचलध्वंसदम्भोलये विष्णवे ते। भुजङ्गेशतल्पेशयायार्कचन्द्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ॥ ४ ॥ नारद उवाच। सङ्कष्टनाशनं नाम स्तोत्रमेतत्पठेन्नरः। स कदाचिन्न सङ्कष्टैः पीड्यते कृपया हरेः ॥ ५ ॥

॥ इति श्रीपद्मपुराणे सुरनारदसम्वादे सङ्कष्टनाशनं नाम विष्णुस्तोत्रं सम्पूर्णम् ॥

---

## रामहृदयम्

श्रीमहादेव उवाच। ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम्। शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥ १ ॥ आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान्। जलाशये महाकाशस्तदवच्छिन्न एव हि। प्रतिविम्वाख्यमपरं दृश्यते त्रिविधं नभः ॥ २ ॥ वुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम्। आभासस्त्वपरं विम्वभूतमेवं त्रिधा चितिः ॥ ३ ॥ साभासवुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि। साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽवुधैः ॥ ४ ॥ आभासस्तु मृषावुद्धिरविद्याकार्यमुच्यते। अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः ॥ ५ ॥ अविछिन्नस्य

पूर्णेन एकत्वं प्रतिपद्यते। तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥ ६ ॥ ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चाऽऽत्मनोः। तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥ ७ ॥ एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥ ८ ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम्। न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ९ ॥ इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात्कथितं तवानघ। मद्भक्तिहीनाय शठाय न त्वया दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥१०॥

॥ इति श्रीमदध्यात्मरामायणे बालकाण्डे श्रीरामहृदयं सम्पूर्णम् ॥

---

## रामस्तवराजः

अस्य श्रीरामचन्द्रस्तवराजस्तोत्रमन्त्रस्य सनत्कुमार ऋषिः। श्रीरामो देवता। अनुष्टुप् छन्दः। सीता बीजम्। हनूमान् शक्तिः। श्रीरामप्रीत्यर्थे जपे विनियोगः।

सूत उवाच। सर्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम्। धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् ॥ १ ॥ युधिष्ठिर उवाच। भगवन्योगिनां श्रेष्ठ ! सर्वशास्त्रविशारद।। किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम् ॥२॥ श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम।। वेदव्यास उवाच। धर्मराज! महाभाग! शृणु वक्ष्यामि तत्त्वतः ॥ ३ ॥ यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम्। तदेव परमं तत्त्वं कैवल्यपदकारणम् ॥ ४ ॥ श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्। ब्रह्महत्यादिपापघ्नमिति वेदविदो विदुः ॥ ५ ॥ श्रीराम रामेति जना ये जपन्ति च सर्वदा। तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ ६ ॥ स्तवराजं पुरा प्रोक्तं नारदेन च धीमता। तत्सर्वं सम्प्रवक्ष्यामि हरिध्यानपुरःसरम् ॥ ७ ॥ तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम्। दारिद्र्यदुःखशमनं सर्वसम्पत्करं शिवम् ॥ ८ ॥ विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम्। नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम् ॥ ९ ॥

अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे। स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥१०॥ तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम्। स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम् ॥११॥ पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम्। कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् ॥१२॥ भानुकोटिप्रतीकाशं किरीटेन विराजितम्। रत्नग्रैवेयकेयूररत्नकुण्डलमण्डितम् ॥१३॥ रत्नकङ्कणमञ्जीरकटिसूत्रैरलङ्कृतम्। श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम् ॥१४॥ दिव्यरत्नसमायुक्तमुद्रिकाभिरलङ्कृतम्। राघवं द्विभुजं बालं राममीषत्स्मिताननम् ॥१५॥ तुलसीकुन्दमन्दारपुष्पमाल्यैरलङ्कृतम्। कर्पूरागरुकस्तूरीदिव्यगन्धानुलेपनम् ॥ १६ ॥ योगशास्त्रेष्वभिरतं योगेशं योगदायकम्। सदा भरतसौमित्रिशत्रुघ्नैरुपशोभितम् ॥१७॥ विद्याधरसुराधीशसिद्धगन्धर्वकिन्नरैः। योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् ॥ १८ ॥ विश्वामित्रवशिष्ठादिमुनिभिः परिसेवितम्। सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्च सेवितम् ॥ १९ ॥ रामं रघुवरं वीरं धनुर्वेदविशारदम्। मङ्गलायतनं देवं रामं राजीवलोचनम् ॥२०॥ सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुन्दरम्। कौसल्यानन्दनं रामं धनुर्बाणधरं हरिम् ॥२१॥ एवं सञ्चिन्तयन्विष्णुं यज्ज्योतिरमलं विभुम्। प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥ २२ ॥ सर्वलोकहितार्थाय तुष्टाव रघुनन्दनम्। कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम् ॥ २३ ॥ यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम्। यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम् ॥ २४ ॥ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्। श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि ॥२५॥ कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम्। अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श ॥२६॥ नारद उवाच। नारायणं जगन्नाथमभिरामं जगत्पतिम्। कविं पुराणं वागीशं रामं दशरथात्मजम् ॥२७॥ राजराजं रघुवरं कौसल्यानन्दवर्धनम्। भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् ॥ २८ ॥ सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम्। सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम् ॥ २९ ॥ आदित्यं रविमीशानं घृणिं सूर्यमनामयम्। आनन्दरूपिणं सौम्यं राघवं करुणामयम् ॥३०॥

जामदग्न्यं तपोमूर्त्तिं रामं परशुधारिणम्। वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ॥३१॥ श्रीशार्ङ्गधारिणं रामं चिन्तयानन्दविग्रहम्। हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥३२॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्। मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥३३॥ वासुदेवं जगद्योनिमनादिनिधनं हरिम्। गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम् ॥३४॥ गोगोपालपरीवारं गोपकन्यासमावृतम्। विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम् ॥३५॥ गोगोपिकासमाकीर्णं वेणुवादनतत्परम्। कामरूपं कलावन्तं कामिनीकामदं विभुम् ॥ ३६ ॥ मन्मथं मथुरानाथं माधवं मकरध्वजम्। श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् ॥ ३७ ॥ भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम्। सर्वदुःखहरं वीरं दुष्टदानववैरिणम् ॥३८॥ श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम्। चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम् ॥३९॥ आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम्। भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥४०॥ कौसल्येयं कलामूर्त्तिं काकुत्स्थं कमलाप्रियम्। सिंहासने समासीनं नित्यव्रतमकल्मषम् ॥४१॥ विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम्। यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥ ४२ ॥ सत्यसन्धं जितक्रोधं शरणागतवत्सलम्। सर्वक्लेशापहरणं विभीषणवरप्रदम् ॥ ४३ ॥ दशग्रीवहरं रौद्रं केशवं केशिमर्दनम्। वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ॥४४॥ नरवानरदेवैश्च सेवितं हनुमत्प्रियम्। शुद्धं सूक्ष्मं परं शान्तं तारकब्रह्मरूपिणम् ॥४५॥ सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम्। सर्वकारणकर्तारं निदानं प्रकृतेः परम् ॥ ४६ ॥ निरामयं निराभासं निरवद्यं निरञ्जनम्। नित्यानन्दं निराकारमद्वैतं तमसः परम् ॥ ४७ ॥ परात्परतरं तत्त्वं सत्यानन्दं चिदात्मकम्। मनसा शिरसा नित्यं प्रणमामि रघूत्तमम् ॥ ४८ ॥ सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम्। नमामि पुण्डरीकाक्षममेयं गुरुतत्परम् ॥ ४९ ॥ नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः। नमोऽस्तु रामदेवाय जगदानन्दरूपिणे ॥५०॥ नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने। मायामयनिरासाय प्रपन्नजनसेविने ॥५१॥ वन्दामहे महेशानचण्डकोदण्डखण्डनम्। जानकीहृदया-

नन्दवर्धनं रघुनन्दनम् ॥५२॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय ते कामाय प्रमदामनोहरगुणग्रामाय रामात्मने। योगारूढमुनीन्द्रमानससरोहंसाय संसार-विध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः॥५३॥ भवोद्भवं वेदविदां वरिष्ठमादित्यचन्द्रानलसुप्रभावम्। सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः परस्तात्॥ ५४ ॥ निरञ्जनं निष्प्रतिमं निरीहं निराश्रयं निष्कलमप्रपञ्चम्। नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं राममहं भजामि॥५५॥ भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम्। भूतत्रिनाथं भुवनाधिपं तं भजामि रामं भवरोगवैद्यम् ॥५६॥ सर्वाधिपत्यं समराङ्गधीरं सत्यं चिदानन्दमयस्वरूपम्। सत्यं शिवं शान्तिमयं शरण्यं सनातनं राममहं भजामि॥५७॥ कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम्। कुमारवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि॥५८॥ त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्द्वविनाशहेतुम्। महाबलं वेदविधिं सुरेशं सनातनं राममहं भजामि॥५९॥ वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम्। अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात्॥६०॥ अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनन्तमाद्यम्। अपारसम्वित्सुखमेकरूपं परात्परं राममहं भजामि॥ ६१ ॥ तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम्। राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि॥६२॥ लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम्। अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात्॥ ६३ ॥ योगीन्द्रसङ्घैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम्। नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात् ॥ ६४ ॥ विभूतिदं विश्वसृजं विरामं राजेन्द्रमीशं रघुवंशनाथम्। अचिन्त्यमव्यक्तमनन्तमूर्त्तिं ज्योतिर्मयं राममहं भजामि ॥ ६५ ॥ अशेषसंसारविहारहीनमादित्यगं पूर्णसुखाभिरामम्। समस्तसाक्षिं तमसः परस्तान्नारायणं विष्णुमहम्भजामि॥ ६६ ॥ मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम्। परात्परं यत्परमं पवित्रं नमामि रामं महतो महान्तम्॥ ६७ ॥ ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवता-

स्तथा। आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन! ॥ ६८ ॥ तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा। विप्रा वेदास्तथा यज्ञाः पुराणधर्मसंहिताः ॥ ६९ ॥ वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च। यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादयः ॥७०॥ सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव!। वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः ॥ ७१ ॥ तारका दश दिक् चैव त्वमेव रघुनन्दन!। सप्तद्वीपाः समुद्राश्च नगा नद्यस्तथा द्रुमाः ॥७२॥ स्थावरा जङ्गमाश्चैव त्वमेव रघुनायक!। देवतिर्यङ्मनुष्याणां दानवानां तथैव च ॥७३॥ माता पिता तथा भ्राता त्वमेव रघुवल्लभ!। सर्वेषां त्वं परम्ब्रह्म त्वन्मयं सर्वमेव हि ॥७४॥ त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम!। त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किञ्चन ॥ ७५ ॥ शान्तं सर्वगतं सूक्ष्मं परब्रह्म सनातनम्। राजीवलोचनं रामं प्रणमामि जगत्पतिम् ॥ ७६ ॥ व्यास उवाच। ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुङ्गवम्। तुष्टोऽस्मि मुनिशार्दूल! वृणीष्व वरमुत्तमम् ॥७७॥ नारद उवाच। यदि तुष्टोऽसि सर्वज्ञ! श्रीराम! करुणानिधे!। त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वदा ॥ ७८ ॥ धन्योऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम!। अद्य मे सफलं जन्म जीवितं सफलं च मे ॥ ७९ ॥ अद्य मे सफलं ज्ञानमद्य मे सफलं तपः। अद्य मे सफलं कर्म त्वत्पादाम्भोजदर्शनात्। अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा ॥८०॥ त्वत्पादाम्भोरुहद्वन्द्वसद्भक्तिं देहि राघव!। ततः परमसम्प्रीतः स रामः प्राह नारदम् ॥८१॥ श्रीराम उवाच। मुनिवर्य! महाभाग मुने त्विष्टं ददामि ते। यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति ॥८२॥ नारद उवाच। वरं न याचे रघुनाथ! युष्मत्पदाब्जभक्तिः सततं ममाऽस्तु। इदं प्रियं नाथ! वरं प्रयाचे पुनः पुनस्त्वामिदमेव याचे ॥८३॥ व्यास उवाच। इत्येवमीडितो रामः प्रादात्तस्मै वरान्तरम्। वीरो रामो महातेजाः सच्चिदानन्दविग्रहः ॥८४॥ अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा। अन्तर्दधौ जगन्नाथः पुरतस्तस्य राघवः ॥ ८५ ॥ इति श्रीरघुनाथस्य स्तवराजमनुत्तमम्। सर्वसौभाग्यसम्पत्तिदायकं मुक्तिदं शुभम् ॥ ८६ ॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्। गुह्याद्गुह्यतमं दिव्यं तव स्नेहा-

त्प्रकीर्त्तितम् ॥ ८७ ॥ यः पठेच्छृणुयाद्वाऽपि त्रिसन्ध्यं श्रद्धयान्वितः। ब्रह्महत्यादि-पापानि तत्समानि वहूनि च ॥८८॥ स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा। गोवधाद्युपपापानि अनृतात्सम्भवानि च ॥८९॥ सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः। मानसं वाचिकं पापं कर्मणा समुपार्जितम् ॥९०॥ श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्। इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ॥९१॥ रामं सत्यं परब्रह्म रामात्किञ्चिन्न विद्यते। तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत् ॥ ९२ ॥ श्रीरामचन्द्र! रघुपुङ्गव! राजवर्य! राजेन्द्र! राम! रघुनायक! राघवेश!। राजाधिराज! रघुनन्दन! रामचन्द्र! दासोऽहमद्य भवतः शरणागतोऽस्मि ॥९३॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्ये पुष्पकृतासने मणिमये वीरासने संस्थितम्। अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनीन्द्रैः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ९४ ॥ रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं सीतालङ्कृतवामभागममलं सिंहासनस्थं विभुम्। सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम् ॥ ९५ ॥ सकलगुणनिधानं योगिभिः स्तूयमानं भुजविजितसमानं राक्षसेन्द्रादिमानम्। महित(अहित)नृपभयानं सीतया शोभमानं स्मर हृदय विमानं ब्रह्म रामाभिधानम् ॥९६॥ रघुवर! तव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नामधेयं मुखे मे। अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भवजलनिधिमग्नं रक्षमामार्त्तवन्धो! ॥९७॥ रामरत्नमहं वन्दे चित्रकूटपतिं हरिम्। कौसल्याभक्तिसम्भूतं जानकीकण्ठभूषणम् ॥९८॥

॥ इति श्रीसनत्कुमारसंहितायां नारदोक्तं श्रीरामस्तवराजस्तोत्रं समाप्तम् ॥

---

# रामगीता

श्रीमहादेव उवाच । ततो जगन्मङ्गलमङ्गलात्मना विधाय रामायणकीर्तिमुत्तमाम् । चचार पूर्वाचरितं रघूत्तमो राजर्षिवर्यैरभिसेवितं यथा ॥ १ ॥ सौमित्रिणा पृष्ट उदारबुद्धिना रामः कथाः प्राह पुरातनीः शुभाः । राज्ञः प्रमत्तस्य नृगस्य शापतो द्विजस्य तिर्यक्त्वमथाऽऽह राघवः ॥२॥ कदाचिदेकान्त उपस्थितं प्रभुं रामं रमालालितपादपङ्कजम् । सौमित्रिरासादितशुद्धभावनः प्रणम्य भक्त्या विनयान्वितोऽब्रवीत् ॥ ३ ॥ सौमित्रिरुवाच । त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्माऽस्यधीशोऽसि निराकृतिः स्वयम् । प्रतीयसे ज्ञानदृशां महामते ! पादाब्जभृङ्गाहितसङ्गसङ्गिनाम् ॥४॥ अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो ! भवापवर्गं तव योगिभावितम् । यथाञ्जसाऽज्ञानमपारवारिधिं सुखं तरिष्यामि तथानुशाधि माम् ॥ ५ ॥ श्रुत्वाऽथ सौमित्रिवचोऽखिलं तदा प्राह प्रपन्नार्तिहरः प्रसन्नधीः । विज्ञानमज्ञानतमोपशान्तये श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६ ॥ श्रीराम उवाच । आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः । समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥ क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः । धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ॥ ८ ॥ अज्ञानमेवाऽस्य हि मूलकारणं तद्धानमेवाऽत्र विधौ विधीयते । विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितम् ॥ ९ ॥ नाज्ञानहानिर्न च रागसङ्क्षयो भवेत्ततः कर्म सदोषमुद्भवेत् । ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत् ॥ १० ॥ ननु क्रिया वेदमुखेन चोदिता यथैव विद्या पुरुषार्थसाधनम् । कर्तव्यता प्राणभृतः प्रचोदिता विद्यासहायत्वमुपैति सा पुनः ॥ ११ ॥ कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात्सदा कार्यमिदं मुमुक्षुणा । ननु स्वतन्त्रा ध्रुवकार्यकारिणी विद्या न किञ्चिन्मनसाऽप्यपेक्षते ॥१२॥ न सत्यकार्योऽपि हि यद्वदध्वरः प्रकाङ्क्षतेऽन्यानपि कारकादिकान् । तथैव विद्या विधितः प्रकाशितैर्विशिष्यते कर्मभिरेव मुक्तये ॥१३॥

केचिद्वदन्तीति वितर्कवादिनस्तदप्यसद्दृष्टविरोधकारणात्। देहाभिमानादभिवर्धते क्रिया विद्यागताहङ्कृतितः प्रसिध्यति ॥ १४ ॥ विशुद्धविज्ञानविरोचनाञ्चिता विद्यात्मवृत्तिश्चरमेति भण्यते। उदेति कर्माखिलकारकादिभिर्निहन्ति विद्याऽखिलकारकादिकम् ॥ १५ ॥ तस्मात्त्यजेत्कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो भवेत्। आत्मानुसन्धानपरायणः सदा निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥१६॥ यावच्छरीरादिषु माययाऽऽत्मधीस्तावद्विधेयो विधिवादकर्मणाम्। नेतीति वाक्यैरखिलं निषिध्य तज्ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥१७॥ यदा परात्मात्मविभेदभेदकं विज्ञानमात्मन्यवभाति भास्वरम्। तदैव माया प्रविलीयतेऽञ्जसा सकारका कारणमात्मसंसृतेः ॥ १८ ॥ श्रुतिप्रमाणाभिविनाशिता च सा कथं भविष्यत्यपि कार्यकारिणी। विज्ञानमात्रादमलाद्वितीयतस्तस्मादविद्या न पुनर्भविष्यति ॥१९॥ यदि म नष्टा न पुनः प्रसूयते कर्ताऽहमस्येति मतिः कथं भवेत्। तस्मात्स्वतन्त्रा न किमप्यपेक्षते विद्या विमोक्षाय विभाति केवला ॥२०॥ सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम्। एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१ ॥ विद्यासमत्वेन तु दर्शितस्त्वया क्रतुर्न दृष्टान्त उदाहृतः समः। फलैः पृथक्त्वाद्बहुकारकैः क्रतुः संसाध्यते ज्ञानमतो विपर्ययम् ॥२२॥ सप्रत्यवायो ह्यहमित्यनात्मधीरज्ञप्रसिद्धा न तु तत्त्वदर्शिनः। तस्माद्बुधस्त्याज्यमपि क्रियात्मभिर्विधानतः कर्म विधिप्रकाशितम् ॥२३॥ श्रद्धान्वितस्तत्त्वमसीति वाक्यतो गुरोः प्रसादादपि शुद्धमानसः। विज्ञाय चैकात्म्यमथात्मजीवयोः सुखी भवेन्मेरुरिवाप्रकम्पनः ॥२४॥ आदौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः। तत्त्वम्पदार्थौ परमात्मजीवकावसीति चैकात्म्यमथानयोर्भवेत् ॥२५॥ प्रत्यक्षपरोक्षादिविरोधमात्मनोर्विहाय सङ्गृह्य तयोश्चिदात्मताम्। संशोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥२६॥ एकात्मकत्वाज्जहती न सम्भवेत्तथाऽजहल्लक्षणता विरोधतः। सोऽयम्पदार्थाविव भागलक्षणा युज्येत तत्त्वम्पदयोरदोषतः ॥ २७ ॥ रसादिपञ्चीकृतभूतसम्भवं भोगालयं दुःखसुखादिकर्मणाम्।

शरीरमाद्यन्तवदादिकर्मजं मायामयं स्थूलमुपाधिमात्मनः ॥२८॥ सूक्ष्मं मनोबुद्धि-
दशेन्द्रियैर्युतं प्राणैरपञ्चीकृतभूतसम्भवम् । भोक्तुः सुखादेरनुसाधनं भवेच्छरीरमन्य-
द्विदुरात्मनो बुधः ॥२९॥ अनाद्यनिर्वाच्यमपीह कारणं मायाप्रधानं तु परं शरीर-
कम् । उपाधिभेदात्तु यतः पृथक्स्थितं स्वात्मानमात्मन्यवधारयेत्क्रमात् ॥३०॥ कोशेषु
पञ्चस्वपि तत्तदाकृतिर्विभाति सङ्गात्स्फटिकोपलो यथा । असङ्गरूपोऽयमजो यतो-
ऽद्वयो विज्ञायतेऽस्मिन्परितो विचारिते ॥३१॥ बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते स्वप्ना
दिभेदेन गुणत्रयात्मनः । अन्योन्यतोऽस्मिन्व्यभिचारतो मृषा नित्ये परे ब्रह्मणि
केवले शिवे ॥ ३२ ॥ देहेन्द्रियप्राणमनश्चिदात्मनां सङ्घादजस्रं परिवर्त्तते धियः
वृत्तिस्तमोमूलतयाऽज्ञलक्षणा यावद्भवेत्तावदसौ भवोद्भवः ॥ ३३ ॥ नेति प्रमाणेन
निराकृताखिलो हृदा समास्वादितचिद्घनामृतः । त्यजेदशेषं जगदात्तसद्रसं पीत्वा
यथाऽम्भः प्रजहाति तत्फलम् ॥३४॥ कदाचिदात्मा न मृतो न जायते न क्षीयते
नाऽपि विवर्धते नवः । निरस्तसर्वातिशयः सुखात्मकः स्वयम्प्रभः सर्वगतोऽयमद्वयः
॥३५॥ एवंविधे ज्ञानमये सुखात्मके कथं भवो दुःखमयः प्रतीयते । अज्ञानतोऽ
ध्यासवशात्प्रकाशते ज्ञाने विलीयेत विरोधतः क्षणात् ॥३६॥ यदन्यदन्यत्र विभा
व्यते भ्रमादध्यासमित्याहुरमु विपश्चितः । असर्पभूतेऽहिविभावनं यथा रज्ज्वादि
तद्वदपीश्वरे जगत् ॥३७॥ विकल्पमायारहिते चिदात्मकेऽहंकार एषः प्रथमः प्रक
ल्पितः । अध्यास एवात्मनि सर्वकारणे निरामये ब्रह्मणि केवले परे ॥३८॥ इच्छा
दिरागादिसुखादिधर्मिकाः सदा धियः संसृतिहेतवः परे । यस्मात्प्रसुप्तौ तदभा
वतः परः सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥ अनाद्यविद्योद्भवबुद्धिबि
म्बितो जीवः प्रकाशोऽयमितीर्यते चितः । आत्मा धियः साक्षितया पृथक् स्थितो
बुद्ध्या परिच्छिन्नपरः स एव हि ॥ ४० ॥ चिद्बिम्बसाक्षात्मधियां प्रसङ्गत
स्त्वेकत्र वासादनलाक्तलोहवत् । अन्योन्यमध्यासवशात्प्रतीयते जडाजडत्वं
चिदात्मचेतसोः ॥ ४१ ॥ गुरोः सकाशादपि वेदवाक्यतः सञ्जातविद्यानुभवं
निरीक्ष्य तम् । स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥ ४२

प्रकाशरूपोऽहमजोऽहमद्वयोऽसकृद्विभातोऽहमतीव निर्मलः विशुद्धविज्ञानघनो निरामयः सम्पूर्ण आनन्दमयोऽहमक्रियः ॥४३॥ सदैव मुक्तोऽहमचिन्त्यशक्तिमानतीन्द्रियज्ञानमविक्रियात्मकः। अनन्तपारोऽहमहर्निशं बुधैर्विभावितोऽहं हृदि वेदवादिभिः ॥४४॥ एवं सदाऽऽत्मानमखण्डितात्मना विचार्यमाणस्य विशुद्धभावना। हन्यादविद्यामचिरेण कारकै रसायनं यद्वदुपासितं रुजः ॥४५॥ विविक्त आसीन उपारतेन्द्रियो विनिर्जितात्मा विमलान्तराशयः। विभावयेदेकमनन्यसाधनो विज्ञानदृक्केवल आत्मसंस्थित.॥ ४६ ॥ विश्वं यदेतत्परमात्मदर्शनं विलापयेदात्मनि सर्वकारणे। पूर्णश्चिदानन्दमयोऽवतिष्ठते न वेदबाह्यं न च किञ्चिदान्तरम् ॥ ४७ ॥ पूर्वं समाधेरखिलं विचिन्तयेदोङ्कारमात्रं सचराचरं जगत्। तदेव वाच्यं प्रणवो हि वाचको विभाव्यते ज्ञानवशान्न बोधतः ॥ ४८ ॥ अकारसंज्ञः पुरुषो हि विश्वको ह्युकारकस्तैजस ईर्यते क्रमात्। प्राज्ञो मकारः परिपठ्यतेऽखिलैः समाधिपूर्वं न तु तत्त्वतो भवेत् ॥४९॥ विश्वं त्वकारं पुरुषं विलापयेदुकारमध्ये बहुधा व्यवस्थितम्। ततो मकारे प्रविलाप्य तैजसं द्वितीयवर्णं प्रणवस्य चान्तिमम् ॥५०॥ मकारमप्यात्मनि चिद्घने परे विलापयेत्प्राज्ञमपीह कारणम्। सोऽहं परम्ब्रह्म सदा विमुक्तिमद्विज्ञानदृङ्मुक्त उपाधितोऽमलः ॥५१॥ एवं सदा जातपरात्मभावनः स्वानन्दतुष्टः परिविस्मृताखिलः आस्ते स नित्यात्मसुखप्रकाशकः साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥५२॥ एवं सदाऽभ्यस्तसमाधियोगिनो निवृत्तसर्वेन्द्रियगोचरस्य हि। विनिर्जिताशेषरिपोरहं सदा दृश्यो भवेयं जितषड्गुणात्मनः ॥५३॥ ध्यात्वैवमात्मानमहर्निशं मुनिस्तिष्ठेत्सदा मुक्तसमस्तबन्धनः। प्रारब्धमश्नन्नभिमानवर्जितो मय्येव साक्षात्प्रविलीयते ततः ॥ ५४ ॥ आदौ च मध्ये च तथैव चान्ततो भयं विदित्वा भयशोककारणम्। हित्वा समस्तं विधिवादचोदितं भजेत्स्वमात्मानमथाखिलात्मनाम् ॥५५॥ आत्मन्यभेदेन विभावयन्निदं भवत्यभेदेन मयाऽऽत्मना तदा। यथा जलं वारिनिधौ यथा पयः क्षीरे वियद्व्योम्न्यनिले यथाऽनिलः ॥५६॥ इत्थं यदीक्षेत हि लोकसंस्थितो जगन्मृषैवेति विभावयन्मुनिः। निराकृतत्वाच्छ्रुतियुक्तिमानतो

यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥५७॥ यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् । श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥५८॥ रहस्यमेतच्छ्रुतिसारसङ्ग्रहं मया विनिश्चित्य तवोदितं प्रिय । यस्त्वेतदालोचयतीह बुद्धिमान्स मुच्यते पातकराशिभिः क्षणात् ॥५९॥ भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चेतसा । मद्भावनाभावितशुद्धमानसः सुखी भवाऽऽनन्दमयो निरामयः ॥ ६० ॥ यः सेवते मामगुणं गुणात्परं हृदा कदा वा यदि वा गुणात्मकम् । सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्पुनाति लोकत्रितयं यथा रविः ॥ ६१ ॥ विज्ञानमेतदखिलं श्रुतिसारमेकं वेदान्तवेद्यचरणेन मयैव गीतम् । यः श्रद्धया परिपठेद् गुरुभक्तियुक्तो मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥ ६२॥

॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसम्वादे उत्तरकाण्डे रामगीता समाप्ता ॥

---

# रामरक्षास्तोत्रम्

अस्य श्रीरामरक्षास्तोत्रमन्त्रस्य बुधकौशिक ऋषिः । श्रीसीतारामचन्द्रो देवता । अनुष्टुप् छन्दः । सीता शक्तिः । श्रीमद्धनुमान् कीलकम् । श्रीरामचन्द्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः ।

अथ ध्यानम् । ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् । वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम् । इति ध्यानम् ।

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम् ॥ १ ॥ ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् । जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ॥ २ ॥ सासितूणधनुर्बाणपाणिं नक्तञ्चरान्तकम् । स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम् ॥ ३ ॥ रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् । शिरो मे राघवः पातु भालं दशरथात्मजः ॥ ४ ॥ कौशल्येयो दृशौ पातु विश्वा-

त्रप्रियः श्रुती । घ्राणं पातु मखत्राता मुखं सौमित्रवत्सलः ॥ ५ ॥ जिह्वां विद्या-
धिः पातु कण्ठं भरतवन्दितः । स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥६॥
रौ सीतापतिः पातु हृदयं जामदग्न्यजित् । मध्यं पातु खरध्वंसी नाभिं जाम्बव-
ाश्रयः ॥ ७ ॥ सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः । ऊरू रघूत्तमः पातु
ःकुलविनाशकृत् ॥ ८ ॥ जानुनी सेतुकृत्पातु जङ्घे दशमुखान्तकः । पादौ
विभीषणश्रीदः पातु रामोऽखिलं वपुः ॥ ९ ॥ एतां रामबलोपेतां रक्षां यः सुकृती
ठेत् । स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥ १० ॥ पातालभूतलव्योम-
चारिणश्छद्मचारिणः । न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥ ११ ॥ रामेति
रामभद्रेति रामचन्द्रेति वा स्मरन् । नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति
॥१२॥ जगज्जैत्रैकमन्त्रेण रामनाम्नाऽभिरक्षितम् । यः कण्ठे धारयेत्तस्य करस्थाः
सर्वसिद्धयः ॥ १३ ॥ वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् । अव्याहताज्ञः सर्वत्र
लभते जयमङ्गलम् ॥ १४ ॥ आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः । तथा
लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ॥१५॥ आरामः कल्पवृक्षाणां विरामः सक-
लापदाम् । अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ॥ १६ ॥ तरुणौ रूप-
सम्पन्नौ सुकुमारौ महाबलौ । पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १७ ॥
फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ । पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ
॥१८॥ शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् । रक्षःकुलनिहन्तारौ त्रायेतां नो
रघूत्तमौ ॥१९॥ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषङ्गसङ्गिनौ । रक्षणाय मम
रामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥२०॥ सन्नद्धः कवची खड्गी चापबाणधरो
युवा । गच्छन्मनोऽरथोऽस्माकं रामः पातु सलक्ष्मणः ॥२१॥ रामो दाशरथिः शूरो
लक्ष्मणानुचरो बली । काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः ॥ २२ ॥ वेदान्त-
वेद्यो यज्ञेशः पुराणपुरुषोत्तमः । जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ॥२३॥ इत्येतानि
जपन्नित्यं मद्भक्तः श्रद्धयान्वितः । अश्वमेधाधिकं पुण्यं सम्प्राप्नोति न संशयः ॥ २४ ॥
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् । स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो

नरः ॥२५॥ रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्ति(न्त)मूर्तिं वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥२६॥ रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥२७॥ श्रीराम ! राम ! रघुनन्दन ! राम ! राम ! श्रीराम ! राम ! भरताग्रज ! राम ! राम ! । श्रीराम ! राम ! रणकर्कश ! राम ! राम ! श्रीराम ! राम ! शरणं भव राम ! राम ! ॥२८॥ श्रीरामचन्द्रचरणौ मनसा स्मरामि श्रीरामचन्द्रचरणौ वचसा गृणामि । श्रीरामचन्द्रचरणौ शिरसा नमामि श्रीरामचन्द्रचरणौ शरणं प्रपद्ये ॥ २९ ॥ माता रामो मत्पिता रामचन्द्रः स्वामी रामो मत्सखा रामचन्द्रः । सर्वस्वं मे रामचन्द्रो दयालुर्नाऽन्यं जाने नैव जाने न जाने ॥३०॥ दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा । पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ ३१ ॥ लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम् । कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये ॥ ३२ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥३३॥ कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥३४॥ आपदामपहर्तारं दातारं सर्वसम्पदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥३५॥ भर्जनं भवबीजानामर्जनं सुखसम्पदाम् । तर्जनं यमदूतानां रामरामेति गर्जनम् ॥ ३६ ॥ रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः । रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम ! मामुद्धर ॥३७॥ राम रामेति रामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने । ॥३८॥

॥ इति श्रीबुधकौशिकविरचितं रामरक्षास्तोत्रं सम्पूर्णम् ॥

---

# ब्रह्मदेवकृतरामस्तुतिः

वन्दे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम्। हेयाहेयद्वन्द्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम्॥ १॥ प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा छित्त्वा सर्वं संशयबन्धं विषयौघान्। पश्यन्तीशं यं गतमोहा यतयस्तं वन्दे रामं रत्नकिरीटं रविभासम्॥ २॥ मायातीतं माधवमाद्यं जगदादिं मानातीतं मोहविनाशं मुनिवन्द्यम्। योगिध्येयं योगविधानं परिपूर्णं वन्दे रामं रञ्जितलोकं रमणीयम्॥ ३॥ भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादाम्बुजयुग्मम्। नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं वन्दे रामं वीरमशेषासुरदावम्॥ ४॥ त्वं मे नाथो नाथितकार्याखिलकारी मानातीतो माधवरूपोऽखिलधारी। भक्त्या गम्यो भावितरूपो भवहारी योगाभ्यासैर्भावितचेतः सहचारी॥ ५॥ त्वामाद्यन्तं लोकततीनां परमीशं लोकानां नो लौकिकमानैरधिगम्यम्। भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलम्॥ ६॥ को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधवशक्तो मुनिमान्यम्। वृन्दारण्ये वन्दितवृन्दारकवृन्दं वन्दे रामं भवमुखवन्द्यं सुखकन्दम्॥ ७॥ नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिम्। मत्सेवार्थं मानुषभावं प्रतिपन्नं वन्दे रामं मरकतवर्णं मथुरेशम्॥ ८॥ श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः। रामं श्यामं कामितकामप्रदमीशं ध्यात्वा ध्याता पातकजालैर्विगतः स्यात्॥ ९॥

॥ इति श्रीमदध्यात्मरामायणे युद्धकाण्डे ब्रह्मदेवकृतं रामस्तोत्रं सम्पूर्णम्॥

# जटायुकृतरामस्तोत्रम्

जटायुरुवाच । अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम् । उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचन्द्रम् ॥ १ ॥ निरवधिसुखमिन्दिराकटाक्षं क्षपितसुरेन्द्रचतुर्मुखादिदुःखम् । नरवरमनिशं नतोऽस्मि रामं वरदमहं वरचापबाणहस्तम् ॥ २ ॥ त्रिभुवनकमनीयरूपमीड्यं रविशतभासुरमीहितप्रदानम् । शरणदमनिशं सुरागमूले कृतनिलयं रघुनन्दनं प्रपद्ये ॥ ३ ॥ भवविपिनदवाग्निनामधेयं भवमुखदैवतदैवतं दयालुम् । दनुजपतिसहस्रकोटिनाशं रवितनयासदृशं हरिं प्रपद्ये ॥४॥ अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम् । भवजलधिसुतारणाङ्घ्रिपोतं शरणमहं रघुनन्दनं प्रपद्ये ॥ ५ ॥ गिरिशगिरिसुतामनोनिवासं गिरिवरधारिणमीहिताभिरामम् । सुरवरदनुजेन्द्रसेविताङ्घ्रिं सुरवरदं रघुनायकं प्रपद्ये ॥ ६ ॥ परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम् । परहितनिरतात्मनां सुसेव्यं रघुवरमम्बुजलोचनं प्रपद्ये ॥ ७ ॥ स्मितरुचिरविकासिताननाब्जमतिसुलभं सुरराजनीलनीलम् । सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥ ८ ॥ हरिकमलजशम्भुरूपभेदात्त्वमिह विभासि गुणत्रयानुवृत्तः । रविरिव जलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ९ ॥ रतिपतिशतकोटिसुन्दराङ्गं शतपथगोचरभावनाविदूरम् । यतिपतिहृदये सदा विभातं रघुपतिमार्तिहरं प्रभुं प्रपद्ये ॥१०॥ इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः । उवाच गच्छ भद्रं ते मम विष्णोः परम्पदम् ॥११॥ शृणोति य इदं स्तोत्रं लिखेद्वा नियतः पठेत् । स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥१२॥ इति राघवभाषितं तदा श्रुतवान् हर्षसमाकुलो द्विजः । रघुनन्दनसाम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥१३॥

॥ इति श्रीमदध्यात्मरामायणे अरण्यकाण्डे जटायुकृतरामस्तोत्रं सम्पूर्णम् ॥

---

# रामाष्टकम्

भजे विशेषसुन्दरं समस्तपापखण्डनम्। स्वभक्तचित्तरञ्जनं सदैव राममद्वयम् ॥ १ ॥ जटाकलापशोभितं समस्तपापनाशकम्। स्वभक्तभीतिभञ्जनं भजे ह राममद्वयम् ॥ २ ॥ निजस्वरूपबोधकं कृपाकरं भवापहम्। समं शिवं निरञ्जनं भजे ह राममद्वयम् ॥ ३ ॥ सहप्रपञ्चकल्पितं ह्यनामरूपवास्तवम्। निराकृतिं निरामयं भजे ह राममद्वयम् ॥ ४ ॥ निष्प्रपञ्चनिर्विकल्पनिर्मलं निरामयम्। चिदेकरूपसन्ततं भजे ह राममद्वयम् ॥ ५ ॥ भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम्। गुणाकरं कृपाकरं भजे ह राममद्वयम् ॥ ६ ॥ महावाक्यबोधकैर्विराजमानवाक्पदैः। परब्रह्म व्यापकं भजे ह राममद्वयम् ॥ ७ ॥ शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम्। विराजमानदैशिकं भजे ह राममद्वयम् ॥८॥ रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेन भाषितमिदं शृणुते मनुष्यः। विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं सम्प्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥

॥ इति श्रीव्यासविरचितं रामाष्टकं सम्पूर्णम् ॥

---

# श्रीमहादेवकृता रामस्तुतिः

नमोऽस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय। किरीटहाराङ्गदभूषणाय सिंहासनस्थाय महाप्रभाय ॥ १ ॥ त्वमादिमध्यान्तविहीन एकः सृजस्यवस्यत्सि च लोकजातम्। स्वमायया तेन न लिप्यसे त्वं यत्स्वे सुखेऽजस्ररतोऽनवद्यः ॥ २ ॥ लीलां विधत्से गुणसम्वृतस्त्वं प्रसन्नभक्तानुविधानहेतोः। नानावतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यम् ॥ ३ ॥ स्वांशेन लोकं सकलं विधाय

तं बिभर्षि च त्वं तदधः फणीश्वरः। उपर्यधो भान्वनिलोडुपौषधीप्रवर्षरूपोऽवसि नैकधा जगत्॥ ४॥ त्वमिह देहभृतां शिखिरूपः पचसि भुक्तमशेषमजस्रम्। पवनपञ्चकरूपसहायो जगदखण्डमनेन बिभर्षि॥ ५॥ चन्द्रसूर्यशिखिमध्यगतं यत्तेज ईश चिदशेषतनूनाम्। प्राभवत्तनुभृतामिह धैर्यं शौर्यमात्रमखिलं तव सत्त्वम्॥ ६॥ त्वं विरिञ्चिशिवविष्णुविभेदात्कालकर्मशशिसूर्यविभागात्। वादिनां पृथगिवेश विभासि ब्रह्म निश्चितमनन्यदिहैकम्॥ ७॥ मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः। तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति॥८॥ यद्यत्समुत्पन्नमनन्तसृष्टावुत्पत्स्यते यच्च भवच्च यच्च। न दृश्यते स्थावरजङ्गमादौ त्वया विनाऽतः परतः परस्त्वम्॥ ९॥ तत्त्वं न जानन्ति परमात्मनस्ते जनाः समस्तास्तव माययातः। त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम्॥ १०॥ ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः। ततो बुधस्त्वामिदमेव रूपं भक्त्या भजन्मुक्तिमुपैत्यदुःखः॥११॥ अहं भवन्नामगुणैः कृतार्थो वसामि काश्यामनिशं भवान्या। मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव रामनाम॥ १२॥ इमं स्तवं नित्यमनन्यभक्त्या शृण्वन्ति गायन्ति लिखन्ति ये वै। ते सर्वसौख्यं परमं च लब्ध्वा भवत्पदं यान्तु भवत्प्रसादात्॥ १३॥

॥ इति श्रीमहादेवकृतरामस्तोत्रं सम्पूर्णम्॥

---

## अहल्याकृतरामस्तोत्रम्

अहल्योवाच। अहो कृतार्थाऽस्मि जगन्निवास ते पादाब्जसंलग्नरजःकणादहम्। स्पृशामि यत्पद्मजशङ्करादिभिर्विमृग्यते रन्धितमानसैः सदा॥ १॥ अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमोहितं जगत्। चलस्यजस्रं चरणादिवर्जितः सम्पूर्ण आनन्दमयोऽतिमायिकः॥ २॥ यत्पादपङ्कजपरागपवित्रगात्रा भागीरथी

भवविरिञ्चिमुखान्पुनाति। साक्षात्स एव मम दृग्विषयो यदास्ते किं वर्ण्यते मम पुराकृतभागधेयम्॥ मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनम्। धनुर्धरं पद्मविशाललोचनं भजामि नित्यं न परान्भजिष्ये॥ ४॥ यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं यन्नाभिपङ्कजभवः कमलासनश्च यन्नामसाररसिको भगवान्पुरारिस्तं रामचन्द्रमनिशं हृदि भावयामि॥ ५॥ यस्यावतारचरितानि विरिञ्चिलोके गायन्ति नारदमुखा भवपद्मजाद्याः। आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा वागीश्वरी च तमहं शरणम्प्रपद्ये॥ ६॥ सोऽयं परात्मा पुरुषः पुराण एषः स्वयञ्ज्योतिरनन्त-आद्यः। मायातनुं लोकविमोहनीयां धत्ते परानुग्रह एष रामः॥ ७॥ अयं हि विश्वोद्भवसंयमानामेकः स्वमायागुणबिम्बितो यः। विरिञ्चिविष्ण्वीश्वरनामभेदान् धत्ते स्वतन्त्रः परिपूर्ण आत्मा॥ ८॥ नमोऽस्तु ते राम तवाङ्घ्रिपङ्कजं श्रिया धृतं वक्षसि लालितं प्रियात्। आक्रान्तमेकेन जगत्त्रयं पुरा ध्येयं मुनीन्द्रैरभिमानवर्जितैः॥९॥ जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः। सर्वभूतेष्वसम्बद्ध एको भाति भवान्परः॥ १०॥ ॐकारवाच्यस्त्वं राम वाचामविषयः पुमान्। वाच्यवाचकभेदेन भवानेव जगन्मयः॥११॥ कार्यकारणकर्तृत्वफलसाधनभेदतः। एको विभासि राम! त्वं मायया बहुरूपया॥१२॥ त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः। मानुषं त्वाऽभिमन्यन्ते मायिनं परमेश्वरम्॥१३॥ आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः। असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः॥१४॥ योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो!। तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः॥१५॥ देव मे यत्रकुत्राऽपि स्थिताया अपि सर्वदा। त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे॥ १६॥ नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल। नमस्तेऽस्तु हृषीकेश नारायण नमोऽस्तु ते॥१७॥ भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं कालमेघावभासम्। कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं कमलविशदनेत्रं सानुजं राममीडे॥१८॥ स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम्। परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम्॥१९॥ अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः। स मुच्यतेऽखिलैः पापैः परं

ब्रह्माधिगच्छति ॥ २० ॥ पुत्रार्थं पठेद्भक्त्या रामं हृदि निधाय च । सम्वत्सरेण लभते वन्ध्या अपि सुपुत्रकम् ॥ २१ ॥ सर्वान्कामानवाप्नोति रामचन्द्रप्रसादतः ॥२२॥ ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धादरः । नित्यं स्तोत्रमिदं जपन्रघुपतिं भक्त्या हृदिस्थं स्मरन् ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ॥२३॥

॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसम्वादे बालकाण्डान्तर्गतमहल्याविरचितं रामचन्द्रस्तोत्रं सम्पूर्णम् ॥

---

## इन्द्रकृतरामस्तोत्रम्

इन्द्र उवाच । भजेऽहं सदा राममिन्दीवराभं भवारण्यदावानलाभाभिधानम् । भवानीहृदा भावितानन्दरूपं भवाभावहेतुं भवादिप्रपन्नम् ॥ १ ॥ सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् । परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे भारनाशम् ॥ २ ॥ प्रपन्नाखिलानन्ददोऽहं प्रपन्नं प्रपन्नार्त्तिनिःशेषनाशाभिधानम् । तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे राममित्रम् ॥ ३ ॥ सदा भोगभाजां सुदूरे विभातं सदा योगभाजामदूरे विभातम् । चिदानन्दकन्दं सदा राघवेशं विदेहात्मजानन्दरूपं प्रपद्ये ॥ ४ ॥ महायोगमायाविशेषानुयुक्तो विभासीश लीलानराकारवृत्तिः । त्वदानन्दलीलाकथापूर्णकर्णाः सदानन्दरूपा भवन्तीह लोके ॥ ५ ॥ अहं मानपानाभिमत्तप्रमत्तो न वेदाखिलेशाभिमानाभिमानः । इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः ॥ ६ ॥ स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम् । शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरावारपारं भजे राघवेशम् ॥ ७ ॥ सुराधीशनीलाभ्रनीलाङ्गकान्तिं विराधादिरक्षोवधाल्लोकशान्तिम् । किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं

घूणामधीशम् ॥ ८ ॥ लसच्चन्द्रकोटिप्रकाशादिपीठे समासीनमेकं समाधाय सीताम्। स्फुरद्धेमवर्णां तड़ितत्पुञ्जभासां भजे रामचन्द्रं निवृत्तार्त्तितन्द्रम् ॥ ९ ॥
॥ इति श्रीमदध्यात्मरामायणे युद्धकाण्डे इन्द्रकृतं रामस्तोत्रं सम्पूर्णम् ॥

---

# श्रीसीतारामाष्टकम्

ब्रह्ममहेन्द्रसुरेन्द्रमरुद्गणरुद्रमुनीन्द्रगणैरतिरम्यं क्षीरसरित्पतितीरमुपेत्य नुतं हि सतामवितारमुदारम्। भूमिभरप्रशमार्थमथ प्रथितप्रकटीकृतचिद्घनमूर्त्तिं त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम् ॥ १ ॥ पद्मदलायतलोचन हे रघुवंशविभूषण ! देव ! दयालो ! निर्मलनीरदनीलतनोऽखिललोकहृदम्बुजभासक भानो। कोमलगात्र पवित्रपदाब्जरजःकणपावितगौतमकान्त त्वां भजतो० ॥ २ ॥ र्ण परात्पर पालय मामतिदीनमनाथमनन्त सुखाब्धे प्रावृडदभ्रतडित्सुमनोहरपीतराम्बर ! राम ! नमस्ते। कामविभञ्जन कान्ततरानन काञ्चनभूषण रत्नकिरीटं वां भजतो० ॥ ३ ॥ दिव्यशरच्छशिकान्तिहरोज्ज्वलमौक्तिकमाल विशालसुमौले कोटिरविप्रभ चारुचरित्र पवित्रविचित्रधनुःशरपाणे। चण्डमहाभुजदण्डविखण्डितराक्षसराजमहागजदण्डं त्वां भजतो० ॥ ४ ॥ दोषविहिंस्रभुजङ्गसहस्रसुरोपमहानलकीलकलापे जन्मजरामरणोर्मिमनोमदमन्मथनक्रविचक्रभवाब्धौ। दुःखनिधौ च चिरं पतितं कृपयाऽद्य समुद्धर राम ! ततो मां त्वां भजतो० ॥५॥ संसृतिघोरमदोत्कटकुञ्जरतृट्क्षुदनीरदपिण्डिततुण्डं दण्डकरोन्मथितच्चरजस्तम उन्मदमोहपदोज्झितमार्त्तम्। दीनमनन्यगतिं कृपणं शरणागतमाशु विमोचय मूढं त्वं भजतो०॥६॥ जन्मशतार्जितपापसमन्वितहृत्कमले पतिते पशुकल्पे हे रघुवीर ! महारणधीर ! दयाङ्कुरु मय्यतिमन्दमनीषे। त्वं जननी भगिनी च पिता मम तावदसि त्ववितापि कृपालो त्वां भजतो० ॥ ७ ॥ त्वां तु दयालुमकिञ्चनवत्सलमुत्पलहारमपारमुदारं राम! विहाय कमन्यमनामयमीश जनं शरणं ननु यायाम्। त्वत्पदपद्ममतः श्रितमेव मुदा खलु देव सदाऽत्र ससीतं (त!) त्वां भजतो०॥८॥ यःकरुणामृतसिन्धुरनाथजनो-

समबन्धुरजोत्तमकारी भक्तभयोर्मिभयाब्धितरी सरयूतटिनीतटचारुविहारी। तरं रघुप्रवरस्य निरन्तरमष्टकमेतदनिष्टहरं वै। यस्तु पठेदमरः स नरो लभतेऽच्युतराम पदाम्बुजदास्यम् ॥ ६ ॥

॥ इति श्रीमन्मधुसूदनाश्रमशिष्याऽच्युतयतिविरचितं श्रीमत्सीतारामाष्टकं सम्पूर्णम् ॥

---

# राममहिमस्तोत्रम्

ॐ महामोहावर्ते पतितमिह मा ते शरणगं शरण्यस्त्वत्तोऽन्यः प्रभवति कोऽप्यत्र जगति। अतस्त्वत्पादाम्भोरुहयुगलमाश्रित्य निनरामितीहे संसाराद्दुष्टि ननिचयादुद्धर विभो। ॥ १ ॥ निजाव्यक्तेनेदं जगदखिलमिच्छादिकरणैः सः स्पन्नं कृत्वाऽवसि तु सततं श्रीरघुपते।। युगान्ते सर्वं वै हरसि किल रौद्रेण वपु स्त्वमेकः सर्वात्मन्विहरसि नचाऽन्यो गुणनिधे ॥ २ ॥ रमन्ते योगीन्द्रास्त्रिपुरहरमु ख्यास्त्वयि मदा समाधौ विश्वात्मन्नियमितहृषीका रघुपते। तथाऽप्येते पारं निखिलनिगमागोचर विभो महिम्नस्ते नूनं गमयितुमलं नैव कुशलाः ॥ ३ ॥ कदा चिद्भौमान्वै गणयति कणान्कोऽपि मतिमाल्लथा पारावारोदकवचयान्वै रघुपते कश्चिन्नक्षत्रौघं वयति गणनाया नयति वै गुणानां ते पारं गमयितुमलं नैव कुशला ॥ ४ ॥ कूर्न सत्यं भूमन्सगुणमगुणं रूपमुभयं चिदानन्दं तद्वै निखिलनिगमैरप्य विदितम्। समष्टिर्व्यष्टिस्ते विलसति विराड्रूपमपरं तदेतद्वै किञ्चित्स्फुरति हृदये चैव विदुषाम् ॥ ५ ॥ विरञ्चीशेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतस्त्वं भूभार व्यसनमपहर्तुं सुरपते।। विभुः कौसल्यायां दशरथगृहे स्वाकृतियुतः समुद्भूतश्चत्वं निजपदकनार्थो वसुमतीम् ॥ ६ ॥ मुनेर्विश्वामित्राच्छरणदबलां चाऽप्यतिबला महाविद्या प्राप्य प्रणतजनसौभाग्यद विभो। शरेणैकेन त्वं निशिचरवधूं चातिमहतीं

महाघोरां हत्वा विपिनमभयं चैव कृतवान् ॥ ७ ॥ करालास्यं घोरं निशिचरयुगं कौणपवरं श्रुतीनां द्वेष्टारं मुनिमखनिघाते च निरतम्। सुबाहुं मारीचं निशितविशिखांश्चोरसि दृढं निहत्यैकैकेनाहुतमिह जुगोप्थाकृतधियाम् ॥ ८ ॥ शिलाभूतां शापाच्चरणरजसा गौतमवधूं यथापूर्वां कृत्वा परमसुभगां चातिविमलाम्। महोत्तुङ्गं चापं सपदि शितिकण्ठस्य सुदृढं द्विधा खण्डं चक्रे जनकनगरीं प्राप्य मुनिना ॥ ९ ॥ शरद्राकेशास्यां विमलकलधौताङ्गरुचिरां स्फुरद्रत्नाकल्पां जनकतनयां विश्वजननीम्। शुभाहे यद्रामो विधिवदुपयेमे सुललितां महेन्द्रौघस्नेहामरमुकुटनीराजितपदाम् ॥ १० ॥ महाघोरं त्रुट्यत्त्रिपुरहरचापस्यनिनदं समाकर्ण्य क्रोधाद्भृगुकुलपतेः क्षत्रियरिपोः। पथि प्राप्तस्याऽस्य स्मयमपि जहर्थ त्वमतुलं महावीरप्रद्योतनकुलमणे पाहि नितराम् ॥ ११ ॥ सुराणां रक्षायै सपदि पितुराज्ञां सकरुणां समादाय प्रागाद्वनमनुजयुक्तो वनितया। जनस्थानं प्राप्याऽमलवटतरूणां फलवतामधश्चक्रे वासं दनुजकुलनाशाय च विभो! ॥१२॥ प्रभो! लङ्केशस्य प्रबलतमवीर्यस्य भगिनीं विरूपां कृत्वा तदनुजखरमुख्यान्निशिचरान्। सुरारातीन्हत्वा द्विजकुलनिघातेषु निरतान्निरातङ्कं चक्रे विपिनमपि सेव्यं जनपदैः ॥१३॥ दशग्रीवाज्ञप्तः कनकमृगरूपेण विचरन्विचित्रो मारीचः प्रसभमभियातः स्वनिकटे। असौ मायावीति प्रणतजनसौभाग्यद विभो त्वया ज्ञात्वा नीतः सपदि विशिखेनान्तकपुरीम् ॥ १४ ॥ मुमूर्षुः पौलस्त्यः कपटकटुवेषेण कुमतिः परोक्षं यत्सीताहरणमकरोच्छ्रीरघुपते। सुराणां रक्षायै रजनिचरनाथस्य हननं विमृष्यैतत्सर्वं खरहर! तवैवेङ्गितमभूत् ॥१५॥ वियोगे जानक्यास्त्विह मनुजभावेन विचरञ्जटायुं दृष्ट्वा वै विपिनगतमासन्नमरणम्। त्वया तस्योद्धारः स्वकरकमलेनैव विहितस्तवैतद्वात्सल्यं विलसति हि भक्तेषु नितराम् ॥ १६ ॥ कबन्धं क्रव्यादं निशितकरवालेन महता द्रुतं हत्वा पम्पातटमनुजयुक्तश्च गतवान्। युवां दृष्ट्वा ज्ञातुं प्लवगपतिना वायुतनयः समाज्ञप्तश्चागाद्धरद तव राद्धान्तमखिलम् ॥ १७ ॥ समाकर्ण्य त्वत्तः सकलमसुराराातिममलं विदित्वा निःशङ्कं दशरथसुतं त्वां रघुपते!। महोत्साहान्नीतः सपदि गिरिपृष्ठं हनुमता प्रभो सुग्रीवेण

न्स्वेषां वै मुदमतुलमागान्निजपुरीम् ।।२९।। सहस्रं वर्षाणामयुतमपि कुर्वन्वसुमतीं सनाथां वैदेहीं रमण ! कृतवान् राज्यमतुलम् । अयोध्यायां देवासुरनृपकिरीटाग्रनिहितैर्महारत्नैर्नीराजितचरणपङ्केरुह विभो ! ।।३०।। कृशानुं शेषाद्याः शशधरयुतो बीजमिति ते भजन्ति ध्यायन्वै तव चपरणपङ्केरुहयुगम् । गृहे तेषां पद्मा विहरति मुखे गीः सुललिता सुभुक्त्वा भोगान्वै तव वरपदं यान्ति परमम् ।। ३१ ।। स्वबीजं शेषाग्नी दहनमपरो चैव पवनो नमोऽन्ताः षड्वर्णाः परमपदहेतुश्च भजताम् । इमं मन्त्रं यो वै जपति गुरुवक्त्रादधिगतं जगत्पूज्यो भोगान्भुवि परमदिव्यान्स लभते ।।३२।। घनश्यामं विद्युत्प्रभवसदृशाकल्परुचिरं सरोजाक्षं चैव स्मितमदसुलावण्यसुभगम् । तडिद्वर्णां वामे जनकतनयां राघवमुखं प्रपश्यन्तीं ध्यायन्भजति परमां सिद्धिमतुलाम् ।। ३३ ।। अनन्तान्याहुर्वै तव विविधरूपाणि भगवन्न तान्विज्ञातुं वै कथमपि समर्थाश्च विबुधाः । विभूतीनामन्तस्तव विमल ! को वेत्ति नितरामतद्व्यावृत्त्या वै त्वयि सकलदेवाश्च चकिताः ।। ३४ ।। तवेदं यद्रूपं सजलजलदाभं सुललितं तदेतत्तत्त्वज्ञा मुनिवरगणा हृत्सरसिजे । मुहुर्ध्यायन्ते वै विगतविषयाः सङ्गरहिता ययुर्नित्यानन्दं पदममरवन्द्यं रघुपते ! ।।३५।। त्वमिन्द्रस्त्वं सोमस्त्वमसि वरुणस्त्वं हुतवहस्त्वमापस्त्वं भूमिस्त्वमसि पवनस्त्वं च गगनम् । विरञ्चिस्त्वं रुद्रस्त्वमसि सकलं दृश्यमिह यत्त्वदन्यद्वस्त्वेकं नहि जगति भूमन् रघुपते ! ।।३६।। त्वमेवादौ भूमिर्निगमनिचयानां जलनिधौ निमग्नानां चैवोद्धरणमकरोर्मीनवपुषा । सुधाकामैर्नीतं सलिलनिधिनिर्मन्थनविधौ गिरिं पृष्ठे त्वं च प्रमुकमठरूपेण धृतवान् ।।३७।। निहत्याऽऽज्ञौ दैत्यं प्रलयजलधौ घोरमतुलं हिरण्याक्षं कृत्वा वपुषमपि वाराहविपुलम् । समुद्धारं भूमेर्गिरिकुलयुतायाः सरभसं महादंष्ट्राग्रेणामितगुणनिधे त्वं च कृतवान् ।।३८।। स्वभक्तं प्रह्लादं परमविदुषामार्यममलं विदित्वार्त्तं पित्रा कृतविविधदण्डं कुमतिना । विधायोग्रं रूपं नरहरिविचित्रं त्रिनयनं जघन्थ त्वं दैत्येश्वरममितवीर्यं रघुपते ! ।। ३९ ।। सुनासीरैश्वर्यं हृतमतुलवीर्येण बलिना विदित्वेदं राम ! प्रणतजनवात्सल्यजलधे । स्तुतस्त्वं शक्राद्यैरमरनिवहैर्वामनवपुर्विधायोग्रं

वैरोचनमपि बबन्धाऽमररिपून् ॥ ४० ॥ कुलक्षात्रं सप्तत्रिकमपि च कृत्वा रघुपते जघन्यं त्वं राम ! प्रबलमिह शस्त्रास्त्रविशदम् । निहत्योग्रान् कंसप्रमुखदितिजान्यादवकुले स्वमाविर्भूत्वा श्रीरमण ! भुवि भारं च हृतवान् ॥४१॥ अनन्तान्येवं वै तव विविधरूपाणि च विभो ! प्रवक्तुं तानीह प्रभवति न कोऽप्यत्र जगति । परात्मञ्छ्रीराम ! त्रिगुणरहिताकार परम प्रभापारावारामितगुणनिधे चिद्घन विभो ! ॥४२॥ नमस्ते श्रीरामानियमितगुणग्राम सततं नमो भूयो भूयः पुनरपि नमस्ते रघुपते ! नमो वेदैर्वेद्याखिलमुनिगणाराध्य भगवन् ! नमो भूयो भूयस्तव चरणपद्मे रघुपते ॥४३॥ मया ते पादाम्भोरुहयुगलमाश्रित्य नितरामयोध्यायां भक्त्या विविधपदरम्यैः सुरचितम् । इदं स्तोत्रं राम ! प्रपठति नरो यः प्रतिदिनं स भुक्त्वा भोगान्वै व्रजति परमं शाश्वतपदम् ॥ ४४ ॥ महद्भिः शेषो वै प्रभवति न वक्तुं गुणगणान्स्वयम्भूः पारल्यं कथमपि च ते राम मनलम् । अतस्त्वां कः स्तोतुं भवति कुशलः श्रीरघुपते व्रजन्त्याकाशस्य क्वचिदपि च पारं हि मशकाः ॥ ४५ ॥ तुभ्यं नमो भगवते रघुनन्दनाय श्रीजानकीप्रियतमाय परात्मकाय । योगीन्द्रपूजितपदाम्बुरुहद्वयाय संसारदुःखशमनाय नमो नमस्ते ॥४६॥ कामाशा दुर्जयाश्चेन्मम भवतु पुनर्मुक्तियोगिन्तु कामः क्रोधश्चेच्चातकः ध्रुवं तव चरणयुगाम्भोरुहे स्याच्च लोभः । मोहश्चेद्ध्यानयोगे मम भवतु पुनर्मत्सरो मत्सरे वै त्वत्तोऽन्यत्सर्वसौख्यस्थितिमिह नितरां नैव पश्यामि भूमौ ॥४७॥

॥ इति श्रीमच्चतुर्भुजाचार्यचरणसरोजनियमितमनश्चञ्चरीकाश्यादितचित्त-
चन्द्रश्रीमद्विजयरामाचार्यविरचितं श्रीराममहिमस्तोत्रं सम्पूर्णम् ॥

---

# नारायणाष्टकम्

वात्सल्यादभयप्रदानसमयादार्त्तार्तिनिर्व्वाणपणादौदार्य्यादघशोपणादगणित-श्रेयःपदप्रापणात्। सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षिणः प्रह्ला(ह्ला)दश्च विभीपणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १ ॥ प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः। वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥ श्रीरामाऽत्र विभीपणोऽयमनघो रक्षोभयादागतः सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम्। इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३ ॥ नक्रग्रस्तपदं समुद्धतकरं ब्रह्मादयो भोः सुरा रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः। मा भैपीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ४ ॥ भोः कृष्णाच्युत भोः कृपालय हरे भोः पाण्डवानां सखे क्वाऽसि क्वाऽसि सुयोधनादपहृतां भो रक्ष मामातुराम्। इत्युक्तोऽक्षयवस्त्रसम्भृततनुं योऽपालयद्द्रौपदीमार्त्तत्राणपरायणः स भगवान्नारा० ॥ ५ ॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं यन्नामामृतपूरकं च पिवतां संसारसन्तारकम्। पाषाणोऽपि यदङ्घ्रिपङ्करजसा शापान्मुनेर्मोचितो ह्यार्त्तत्राणपरा० ॥ ६ ॥ पित्रा भ्रातरमुत्तमासनगतं ह्यौत्तानपादिर्ध्रुवो दृष्ट्वा तत्सममारुरुक्षुरधिकं मात्राऽवमानं गतः। यं गत्वा शरणं यदाप तपसा हेमाद्रिसिंहासनं ह्यार्त्तत्राणपरायण० ॥ ७ ॥ आर्त्ता विपण्णाः शिथिलाश्च भीता घोरेपु च व्याधिपु वर्त्तमानाः। सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥ ८ ॥

॥ इति श्रीकुरेशस्वामिविरचितं नारायणाष्टकं सम्पूर्णम् ॥

---

# वेङ्कटेशमङ्गलस्तोत्रम्

श्रीरम्यजामातृमुनीन्द्रधामनाथो मङ्गलाशासनसौप्रभातिके । चक्रे प्रपत्तिं च कृपाचलेशितुस्तं वादिभीकृद्गुरुमाश्रयाम्यहम् ॥ १ ॥ श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् । श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १ ॥ लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे । चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ॥ २ ॥ श्रीवेङ्कटाद्रिशृङ्गाग्रमङ्गलाभरणाङ्घ्रये । मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ॥ ३ ॥ सर्वावयवसौन्दर्यसम्पदा सर्वचेतसाम् । सदा सम्मोहनायाऽस्तु वेङ्कटेशाय मङ्गलम् ॥ ४ ॥ नित्याय निरवद्याय सत्यानन्दचिदात्मने । सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ५ ॥ स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे । सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ॥ ६ ॥ परस्मै ब्रह्मणे पूर्णकामाय परमात्मने । प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ॥ ७ ॥ अकारतत्त्वमश्रान्तमात्मनामनुपश्यताम् । अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम् ॥ ८ ॥ प्राय स्वचरणौ पुंसां शरण्यत्वेन पाणिना । कृपया दिशतः श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ९ ॥ दयामृततरङ्गिण्यास्तरङ्गैरपि शीतलैः । अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम् ॥ १० ॥ स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये । सर्वार्तिशमनायाऽस्तु वेङ्कटेशाय मङ्गलम् ॥ ११ ॥ श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे । रमया रममाणाय वेङ्कटेशाय मङ्गलम् ॥ १२ ॥ श्रीमत्सुन्दरजामातृमुनिमानसवासिने । सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १३ ॥ वासुदेवाय शान्ताय शुद्धज्ञानस्वरूपिणे । नमः श्रीवेङ्कटेशाय श्रीनिवासाय मङ्गलम् ॥ १४ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैस्सत्कृतायाऽस्तु मङ्गलम् ॥ १५ ॥ इति वेङ्कटेशस्य मङ्गलस्तोत्रं सम्पूर्णम् ॥

---

# श्रीवेङ्कटेशसुप्रभातम्

कौशल्या सुप्रजा राम! पूर्वा सन्ध्या प्रवर्त्तते। उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्॥ १॥ उत्तिष्ठोत्तिष्ठ गोविन्द! उत्तिष्ठ गरुडध्वज!। उत्तिष्ठ कमलाकान्त! त्रिलोक्या मङ्गलं कुरु॥ २॥ मातः समस्तजगतां मधुकैटभारेर्वक्षोविहारिणि मनोहरदिव्यरूपे। श्रीस्वामिनि श्रितजनप्रियदानशीले! श्रीवेङ्कटेशदयिते! तव सुप्रभातम्॥ ३॥ तव सुप्रभातमरविन्दलोचने भवतु प्रसन्नमुखचन्द्रमण्डले। विधिशङ्करेन्द्रवनिताभिरर्चिते वृषशैलनाथदयिते दयानिधे!॥ ४॥ अत्र्यादिसप्तऋषयस्समुपास्य सन्ध्यामाकाशसिन्धुकमलानि मनोहराणि। आदाय पादयुगमर्चयितुं प्रसन्नाः शेषाद्रिशेखरविभो! तव सुप्रभातम्॥ ५॥ पञ्चाननाब्जभवषण्मुखवासवाद्यास्त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति। भाषापतिः पठति वासरशुद्धिमारात् शेषाद्रिशेखरविभो! तव सुप्रभातम्॥ ६॥ ईषत्प्रफुल्लसरसीरुहनारिकेलपूगद्रुमादिसुमनोहरपालिकानाम्। आवाति मन्दमनिलः सह दिव्यगन्धैः शेषाद्रिशेखर विभो! तव सुप्रभातम्॥ ७॥ उन्मील्य नेत्र युगमुत्तमपञ्जरस्थाः पात्रावशिष्टकदलीफलपायसानि। भुक्त्वा सलीलमथ केलिशुकाः पठन्ति शेषाद्रिशेखर विभो तव सुप्रभातम्॥ ८॥ तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या गायत्यनन्तचरितं तव नारदोऽपि। भाषासमग्रमसकृत्कर चारुरम्यात् शेषाद्रिशेखर! विभो तव सुप्रभातम्॥९॥ भृङ्गावली च मकरन्दरसानुविद्धझङ्कारगीतनिनदैः सह सेवनाय। निर्यात्युपान्तसरसीकमलोदरेभ्यः शेषाद्रिशेखर! विभो तव सुप्रभातम्॥ १०॥ योषागणेन वरदध्नि विमथ्यमाने घोषालयेषु दधिमन्थनतीव्रघोषाः। रोषात्कलिं विदधते ककुभश्च कुम्भाः शेषाद्रिशेखर!०।११। पद्मेशमित्रबहुपत्रकृतालिवर्गा हर्तुं श्रियं कुवलयस्य सितारुणाङ्गाः भेरीनिनादमिव बिभ्रतितीव्रघोषं शेषाद्रिशेखर!०।१२। श्रीमन्नभीष्टवरदाऽखिललोकबन्धो! श्रीश्रीनिवास जगदेकदयैकसिन्धो!। श्रीदेवतागृहभुजान्तरदिव्यमूर्त्ते श्रीवेङ्कटाच-

लपते । तव सुप्रभातम् ॥१३॥ श्रीशेषशैलगरुडाचलवेङ्कटाद्रिनारायणाद्रिवृषभाद्रिवृषाद्रिमुख्याम् । आख्यां त्वदीयवसतेरनिशं वदन्ति श्रीवेङ्कटाचलपते ! तव सुप्रभातम् ॥१४॥ श्रीस्वामिपुष्करिणिकाप्लवनिर्मलाङ्गा. श्रेयोऽर्थिनो हरविरिञ्चिसनन्दनाद्याः । द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १५ ॥ सेवापराः शिवसुरेशकृशानुधर्मरक्षोम्बुनाथपवमानधनाऽधिनाथाः । बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ १६ ॥ धाटीषु ते विहगराजमृगाधिराजनागाधिराजगजराजहयाधिराजाः । स्वस्वाधिकारमहिमाधिकमर्थयन्ति श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥१७॥ सूर्येन्दुभौमबुधवाक्पतिकाव्यसौरिस्वर्भानुकेतुदिविषत्परिषत्प्रधानाः । त्वद्दासदासचरमावधिदासदासाः श्रीवेङ्कटाचलपते ! तव सुप्रभातम् ॥१८॥ त्वत्पादधूलिभरितस्फुरितोत्तमाङ्गाः स्वर्गापवर्गनिरपेक्षनिजान्तरङ्गाः । कल्पागमाकलितया कलिना लभन्ते श्रीवेङ्कटाचलपते० ॥१९॥ त्वद्गोपुराग्रशिखराणिनिरीक्षमाणाः स्वर्गापवर्गपदवीपदमाश्रयन्ते । मर्त्या मनुष्यभवने मतिमाश्रयन्ते श्रीवेङ्कटा० ॥ २० ॥ श्रीभूमिनायक दयादिगुणामृताढ्ये देवाधिदेव जगदेकशरण्यमूर्ते । श्रीमन्ननन्त गरुडादिभिरर्चिताङ्घ्रे ! श्रीवेङ्कटा० ॥२१॥ श्रीपद्मनाभ पुरुषोत्तम वासुदेव वैकुण्ठ माधव जनार्दन चक्रपाणे । श्रीवत्सचिह्न शरणागतपारिजात ! श्रीवेङ्कटा० ॥२२॥ कन्दर्पदर्पहर सुन्दरदिव्यमूर्ते ! कान्ताकुचाम्बुरुहकुड्मललोलदृष्टे । कल्याणनिर्मलगुणाकर दिव्यकीर्ते श्रीवेङ्कटा० ॥२३॥ मीनाकृते कमठकोल नृसिंह वर्णिन् स्वामिन्परश्वथ तपोधन रामचन्द्र । शेषांशराम यदुनन्दन कल्किरूप श्रीवेङ्कटा० ॥ २४ ॥ एलालवङ्गघनसारसुगन्धतीर्थं दिव्यं वियत्सरसि हेमघटेषु पूर्णम् । धृत्वाद्य वैदिकशिखामणयः प्रहृष्टास्तिष्ठन्ति वेङ्कटपते तव सुप्रभातम् ॥ २५ ॥ भास्वानुदेति विकचानि सरोरुहाणि सम्पूरयन्ति निनदैः ककुभो विहङ्गाः । श्रीवैष्णवाः सततमर्थितमङ्गलास्ते धामाश्रयन्ति तव वेङ्कट ! सुप्रभातम् ॥२६॥ ब्रह्मादयः शिवसुरेशमहर्षयस्ते सन्तस्सनन्दनमुखास्त्वथ योगिवर्याः । धामान्तिके तव हि मङ्गलवस्तुहस्ताः श्रीवेङ्कटाचलपते तव सुप्रभातम् ॥ २७ ॥ लक्ष्मीनि-

वास निरवद्यगुणैकसिन्धो! संसारसागरसमुत्तरणैकसेतो!। वेदान्तवेद्यनिजवैभत्र-भक्तभोग्य! श्रीवेङ्कटाचलपतेरिह सुप्रभातम् ॥२८॥ इत्थं वृषाचलपते! तव सुप्रभातं ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः। तेषां प्रभातसमये स्मृतिरङ्गभाजां प्रज्ञां परार्थ-सुलभां परमां प्रसूते ॥ २६ ॥

॥ इति श्रीवेङ्कटेशसुप्रभातं सम्पूर्णम् ॥

---

# श्रीवेङ्कटेशस्तोत्रम्

कमलाकुचचूचुककुङ्कुमतो नियतारुणतातुलनीलतनो। कमलायतलोचन लोक-पते विजयी भव वेङ्कटशैलपते! ॥ १ ॥ सचतुर्मुखषण्मुखपञ्चमुखप्रमुखाऽखिलदैवत-मौलिमणे!। शरणागतवत्सल सारनिधे परिपालय मां वृषशैलपते ॥ २ ॥ अति-वेलतया तव दुर्विषयैरतिवेलकृतैरपराधशतैः। भरितं त्वरितं वृषशैलपते परया कृपया परिपाहि हरे !॥३॥ अधिवेङ्कटशैलमुदारमते जनताभिमताधिकदानर-तात्। परदेवतया कथितान्निगमैः कमलादयितान्न परं कलये! ॥४॥ कलवेणुर-वावशगोपवधूशतकोटिवृतात् स्मरकोटिसमात्। प्रतिवल्लविचाभिमतात् सुहृदो वसुदेवसुतान्न परं कलये ॥ ५ ॥ अभिरामगुणाकर दाशरथे जगदेकधनुर्धर धीर-मते। रघुनायक राम रमेश विभो वरदो भव देव दयाजलधे ॥ ६ ॥ अवनीत-नयाकमनीयवरं रजनीकरचारुमुखाम्बुरुहम्। रजनीचरराजितमोमिहिरं महनीयमहं रघुराममये ॥ ७ ॥ सुमुखं सुहृदं सुलभं सुखदं सुजनं वसुजातममोघशरम्। अपहा-यरघूद्वहमन्यमहं न कथञ्चन कञ्चन जातु भजे॥८॥ विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि। हरे वेङ्कटेश! प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९ ॥ अहं दूरतस्थः पदाम्भोजयुग्मप्रणामेच्छया नित्यसेवां करोमि। सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश! ॥ १० ॥ अज्ञानिना

मया दीपानशेषान विहितान हरे। । क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे! ॥११॥ ईशाना जगतोऽस्य वेङ्कटपतेर्विष्णोः प्रिया प्रेयसी तद्वक्षःस्थलनित्यवासरसिका तत्क्षान्तिसम्वर्धिनीम्। पद्मालङ्कृतपाणिपल्लवयुगा पद्मासनस्था श्रियं वात्सल्यादि गुणोज्ज्वला भगवती वन्दे जगन्मातरम् ॥ १२ ॥

॥ इति श्रीवेङ्कटेशस्तोत्रं सम्पूर्णम् ॥

---

# सुमङ्गलस्तोत्रम्

सुमङ्गलं मङ्गलमीश्वराय ते सुमङ्गलं मङ्गलमच्युताय ते। सुमङ्गलं मङ्गलमन्तरात्मने सुमङ्गलं मङ्गलमब्जनाभ ते ॥ १ ॥ सुमङ्गलं श्रीनिलयोरुवक्षसे सुमङ्गलं पद्मभवादिसेविते। सुमङ्गलं पद्मजगन्निवासिने सुमङ्गलं चाश्रितमुक्तिदायिने ॥ २ ॥ चाणूरदर्पघ्नसुबाहुदण्डयोः सुमङ्गलं मङ्गलमादिपूरुषे। बालार्ककोटिप्रतिमाय ते विभो चक्राय दैत्येन्द्रविनाशहेतवे ॥ ३ ॥ शङ्खाय कोटीन्दुसमानतेजसे शार्ङ्गाय रत्नोज्ज्वलदिव्यरूपिणे। खड्गाय विद्यामयविग्रहाय ते सुमङ्गलं मङ्गलमस्तु ते विभो ॥ ४ ॥ सदाऽवयोरन्त्यविशिष्टशेषिणे शेषित्वसम्बन्धनिबोधनाय ते। यन्मङ्गलानां च सुमङ्गलाय ते पुनः पुनर्मङ्गलमस्तु सन्ततम् ॥ ५ ॥

॥ इति श्रीविष्णुचित्तस्वामिकृतं मङ्गलस्तोत्रं सम्पूर्णम् ॥

---

# गोपालविंशतिस्तोत्रम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्य्यवर्यो मे सन्निधत्तां सदा हृदि॥ १॥ वन्दे वृन्दावनचरं वल्लवीजनवल्लभम्। जयन्तीसम्भवं धाम वैजयन्तीविभूषणम्॥ २॥ वाचं निजाङ्करसिकां प्रसमीक्षमाणो वक्त्रारविन्दविनिवेशितपाञ्चजन्यः। वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति वल्लवचक्रवर्त्ती ॥ ३॥ आम्नायगन्धरुचिरस्फुरिताधरोष्ठमास्नाविलेक्षणमनुक्षणमन्दहासम्। गोपालडिम्भवपुषं कुहनाजनन्याः प्राणस्तनन्धयमवैमि परं पुमांसम्॥४॥ आविर्भवत्यनिभृताभरणं पुरस्तादाकुञ्चितैकचरणं निहितान्यपादम्। दध्ना निबद्धमुकुरेण निबद्धतालं नाथस्य नन्दभवने नवनीतनाट्यम्॥ ५॥ कुन्दप्रसूनविशदैर्दशनैश्चतुर्भिः सन्दश्य मातुरनिशङ्कचचूचुकाग्रम्। नन्दस्य वक्त्रमवलोकयतो मुरारेर्मन्दस्मितं मम मनीषितमातनोतु॥ ६॥ हर्त्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम्। पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता॥ ७॥ व्रजयोषिदपाङ्गवेदनीयं मधुराभाग्यमनन्यभोग्यमीडे। वसुदेववधूस्तनन्धयं तत् किमपि ब्रह्म किशोरभावदृश्यम्॥ ८॥ परिवर्त्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि। विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलकर्षकं कुमारम्॥ ९॥ निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम्॥ १०॥ पदवीमदवीयसीं विमुक्तेरटवीसम्पदमम्बुवाहयन्तीम्। अरुणाधरसाभिलाषवंशां करुणां कारणमानुषं भजामि॥ ११॥ अनिमेषनिषेवणीयमक्ष्णोरजहद्यौवनमाविरस्तु चित्ते। कलहायितकुन्तलं कलापैः करुणोन्मादकविभ्रमं मनो मे॥१२॥ अनुयायिमनोज्ञवंशनालैरवतु स्पर्शितवल्लवीविमोघैः। अनघस्मितशीतलैरसौमामनुकम्पासरिदम्बुजैरपाङ्गैः॥१३॥ अधराऽहितचारुवंशनाला मुकुटालम्बिमयूरपिच्छमालाः। हरिनीलशिलाविहङ्गलीलाः प्रति-

भास्वन्तु ममाऽन्तिमप्रयाणे ॥ १४ ॥ अखिलानवलोकयामि कालान्महिलादीनभुजान्तरस्य यूनः । अभिलापपदं व्रजाङ्गनानामभिलापक्रमदूरमाभिरूप्यम् ॥ १५ ॥ महसे महिताय मौलिना विनतेनाऽञ्जलिमञ्जनत्विषे । कलयामि विमुग्धवल्लवीवलयाभाषितमञ्जुवेणवे ॥ १६ ॥ जयतु ललितनृत्यं शिक्षको वल्लवीनां शिथिलवलयसिञ्जाशीतलैर्हस्ततालैः । अखिलभुवनरक्षागोपवेषस्य विष्णोरधरमणिसुधाया वंशवान्वंशनालः ॥ १७ ॥ चित्राकल्पश्रवसि कलयंल्लाङ्गलीकर्णपूरं बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः । गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥१८॥ लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यामंसे देव्याः पुलकनिचिडे सन्निविष्टान्यबाहुः । मेघश्यामो जयति ललितं मेखलादत्तवेणुर्गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १९ ॥ पत्यालीढस्मृतिमधिगतां प्राप्तगाढाङ्कपालीं पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः । भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्याद्वारिक्रीडानिबिडवमनो वल्लवीवल्लभो नः ॥ २० ॥ वासो हृत्वा दिनकरसुतासन्निधौ वल्लवीनां लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् । सव्रीडाभिस्तदनु वसनं ताभिरभ्यर्थ्यमानः कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २१ ॥ इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् । दिव्यवेणुरसिकैः समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २२ ॥

॥ इति श्रीगोपालविंशतिस्तोत्रं सम्पूर्णम् ॥

---

## विष्णोरष्टोत्तरशतस्थाननिरूपणस्तोत्रम्

अष्टोत्तरशतस्थानेष्वाविर्भूतं जगत्पतिम् । नमामि जगतामीशं रामायणमनन्यधीः ॥ १ ॥ श्रीवैकुण्ठे वासुदेवमामोदे कर्षणाह्वयम् । प्रद्युम्नं च प्रमोदाख्ये सम्मोदे चानिरुद्धकम् ॥ २ ॥ सत्यलोके तथा विष्णुं पद्माक्षं सूर्यमण्डले । क्षीराब्धौ

शेषशयनं श्वेतद्वीपे तु तारकम् ॥ ३ ॥ नारायणं बदर्याख्ये नैमिषे हरिमव्ययम् । शालग्रामं हरिक्षेत्रे अयोध्यायां रघूत्तमम् ॥ ४ ॥ मथुरायां बालकृष्णं मायायां मधुसूदनम् । काश्यां तु भोगशयनमवन्त्यामवनीपतिम् ॥ ५ ॥ द्वारवत्यां यादवेन्द्रं व्रजे गोपीजनप्रियम् । वृन्दावने नन्दसूनुं गोविन्दं कालियह्रदे ॥ ६ ॥ गोवर्धने गोपवेषं भवघ्नं भक्तवत्सलम् । रोमन्थपर्वते शौरिं हरिद्वारे जगत्पतिम् ॥ ७ ॥ प्रयागे माधवं चैव गयायां तु गदाधरम् । गङ्गासागरगे विष्णुं चित्रकूटे तु राघवम् ॥ ८ ॥ नन्दिग्रामे राक्षसघ्नं प्रभासे विश्वरूपिणम् । श्रीकूर्मे कूर्ममचलं नीलाद्रौ पुरुषोत्तमम् ॥ ९ ॥ सिंहाचले महासिंहं गदिनं तुलसीवने । घृतशैले पापहरं श्वेताद्रौ सिंहरूपिणम् ॥१०॥ योगानन्दं धर्मपुर्यां काकुले त्वान्ध्रनायकम् । अहोबले गारुडाद्रौ हिरण्यासुरमर्दनम् ॥११॥ विट्ठलं पाण्डुरङ्गे तु वेङ्कटाद्रौ रमासखम् । नारायणं यादवाद्रौ नृसिंहं घटिकाचले ॥१२॥ वरदं वारणगिरौ काञ्च्यां कमललोचनम् । यथोक्तकारिणं चैव परमेशपुराश्रयम् ॥ १३ ॥ पाण्डवानां तथा दूतं त्रिविक्रममथोन्नतम् । कामासिक्यां नृसिंहं च तथाष्टभुजसंज्ञकम् ॥१४॥ मेघाकारं शुभाकारं शेषाकारं तु शोभनम् । अन्तरा शितिकण्ठस्य कामकोष्ठ्यां शुभप्रदम् ॥१५॥ कालमेघं खगारूढं कोटिसूर्यसमप्रभम् । दिव्यं दीपप्रकाशं च देवानामधिपं मुने! ॥१६॥ प्रवालवर्णं दीपाभं काञ्च्यामष्टादशस्थितम् । श्रीगृध्रसरसस्तीरे भान्तं विजयराघवम् ॥ १७ ॥ वीक्षारण्ये महापुण्ये शयानं वीरराघवम् । तोताद्रौ तुङ्गशयनं गजार्तिघ्नं गजस्थले ॥१८॥ महाबलिं बलिपुरे भक्तिसारे जगत्पतिम् । महावराहं श्रीमुष्णे महीन्द्रे पद्मलोचनम् ॥१९॥ श्रीरङ्गे तु जगन्नाथं श्रीधामे जानकीप्रियम् । सारक्षेत्रे सारनाथं खण्डने हरचापहम् ॥२०॥ श्रीनिवासस्थले पूर्णं सुवर्णं स्वर्णमन्दिरे । व्याघ्रपुर्यां महाविष्णुं भक्तिस्थाने तु भक्तिदम् ॥२१॥ श्वेतह्रदे शान्तमूर्तिमग्निपुर्यां सुरप्रियम् । भर्गाख्यं भार्गवस्थाने वैकुण्ठाख्ये तु माधवम् ॥ २२ ॥ पुरुषोत्तमे भक्तसखं चक्रीतीर्थे सुदर्शनम् । कुम्भकोणे चक्रपाणिं भूतस्थाने तु शार्ङ्गिणम् ॥२३॥ कपिस्थले गजार्तिघ्नं गोविन्दं चित्रकूटके । अनुत्तमं चोत्तमायां श्वेताद्रौ

पद्मलोचनम् ॥२४॥ पार्थस्थले परब्रह्म कृष्णकोट्या मधुद्विपम् । नन्दपुर्यां महानन्दं वृद्धपुर्यां वृषाश्रयम् ॥२५॥ असङ्गमङ्गमग्रामे शरण्ये शरणं महत् । दक्षिणद्वारकायां तु गोपालं जगतां पतिम् ॥२६॥ सिंहक्षेत्रे महासिंहं मल्लारिं मणिमण्डपे । निबिडे निबिडाकारं धानुष्के जगदीश्वरम् ॥२७॥ मौहूरे कालमेघं तु मधुरायां तु सुन्दरम् । वृषभाद्रौ महापुण्ये परमस्वामिसंज्ञकम् ॥२८॥ श्रीमद्वरगुणे नाथं कुरुकायां रमासखम् । गोष्ठीपुरे गोष्ठपतिं शयानं दर्भसंस्तरे ॥ २९ ॥ धन्वी मङ्गलके शौरिं बलाढ्यं भ्रमरस्थले । कुरङ्गे तु तथा पूर्णं कृष्णमेकं वटस्थले ॥ ३० ॥ अच्युतं क्षुद्रनद्यां तु पद्मनाभमनन्तके । एतानि विष्णोः स्थानानि पूजितानि महात्मभिः ॥३१॥ अधिष्ठितानि देवेश। तत्रासीनं च माधवम् । यः स्मरेत्सततं भक्त्या चेतसाऽनन्यगामिना ॥३२॥ स विधूयाऽतिसंसारबन्धं याति हरेः पदम् । अष्टोत्तरशतं विष्णोः स्थानानि पठति स्वयम् ॥ ३३ ॥ अधीताः सकला वेदाः कृताश्च विविधा मखाः । सम्पादिता तथा मुक्तिः परमानन्ददायिनी ॥ ३४ ॥ अवगाहानि तीर्थानि ज्ञातः स भगवान् हरिः । आद्यमेतत्स्वयं व्यक्तं विमानं रङ्गसंज्ञकम् । श्रीमुष्णं वेङ्कटाद्रिं च शालग्रामं च नैमिषम् ॥३५॥ तोताद्रिं पुष्करं चैव नरनारायणाश्रमम् । अष्टौ मे मूर्तयः सन्ति स्वयं व्यक्ता महीतले ॥ ३६ ॥

॥ इति श्रीविष्णोरष्टोत्तरशतस्थाननिरूपणंस्तोत्रं समाप्तम् ॥

---

# कल्किस्तोत्रम्

सुशान्तोवाच । जय हरेऽमराधीश सेवितं तव पदाम्बुजं भूरिभूषणम् । कुरु ममाऽग्रतः साधुसत्कृतं त्यज महामते । मोहमात्मनः ॥१॥ तव वपुर्जगद्रूपसम्पदा विरचितं सता मानसे स्थितम् । रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ॥ २ ॥ तव यशो जगच्छोकनाशनं मृदुकथामृतप्रीतिदायकम् । स्मितसुधोक्षितं

चन्द्रवन्मुखं तव करोत्वलं लोकमङ्गलम् ॥ ३ ॥ मम पतिस्त्वयं सर्वदुर्जयो यदि तवाऽप्रियं कर्मणाऽऽचरेत् । जहि तदात्मनः शत्रुमुद्यतं कुरु कृपां न चेदीदृगीश्वरः॥४॥ महदहंयुतं पञ्चमात्रया प्रकृतिजायया निर्मितं वपुः । तव निरीक्षणाल्लीलया जगत्स्थितिलयोदयं ब्रह्मकल्पितम् ॥ ५ ॥ भूवियन्मरुद्वारितेजसां राशिभिः शरीरेन्द्रियाश्रितैः । त्रिगुणया स्वया मायया विभो ! कुरु कृपां भवत्सेवनार्थिनाम् ॥ ६ ॥ तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये । भवभयक्षयं तापतापिता मुहुरहो जनाः संसरन्ति नो ॥ ७ ॥ तव जनुः सतां मानवर्धनं जिनकुलक्षयं देवपालकम् । कृतयुगार्पकं धर्मपूरकं कलिकुलान्तकं शं तनोतु मे ॥ ८ ॥ मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः । मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयन्ति किम् ॥ ९ ॥ तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् । यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विति ॥ १० ॥ हयचरभयहरकरहरशरणखरतरवरशरदशवलमदन ! । जय हतपरभरभववरनशनशशधरशतसमरसभरवदन ! ॥ ११ ॥

॥ इति श्रीकल्किपुराणे सुशान्ताकृतं कल्किस्तोत्रं सम्पूर्णम् ॥

---

## विष्णुस्तवराजः

पद्मोवाच । योगेन सिद्धविबुधैः परिभाव्यमानं लक्ष्म्यालयं तुलसिकाचितभक्तभृङ्गम् । प्रोत्तुङ्गरक्तनखराङ्गुलिपत्रचित्रं गङ्गारसं हरिपदाम्बुजमाश्रयेऽहम् ॥ १ ॥ गुम्फन्मणिप्रचयघट्टितराजहंससिञ्जत्सुनूपुरयुतं पदपद्मवृन्तम् । पीताम्बराञ्चलविलोलवलत्पताकं स्वर्णत्रिवक्रवलयं च हरेः स्मरामि ॥ २ ॥ जङ्घे सुपर्णगलनीलमणिप्रवृद्धे शोभास्पदारुणमणिद्युतिचञ्चुमध्ये । आरक्तपादतललम्बनशोभमाने लोकेक्षणोत्सवकरे च हरेः स्मरामि ॥ ३ ॥ ते जानुनी मखपतेर्भुजमूलसङ्गरङ्गोत्सवा-

वृन्तडिद्वसने विचित्रे। चञ्चत्पतत्त्रमुखनिर्गतसामगीतविस्तारितात्मयशसी च हरेः स्मरामि ॥ ४ ॥ विष्णोः कटिं विधिकृतान्तमनोजभूमिजीवाण्डकोषगणसङ्गदुकूलमध्याम्। नानागुणप्रकृतिपीतविचित्रवस्त्रां ध्यायेन्निबद्धवसनां खगपृष्ठसंस्थाम् ॥५॥ शातोदरं भगवतस्त्रिवलिप्रकाशं आवर्तनाभिविकसद्विधिजन्मपद्मम्। नाडीनदीगणरसोत्थसितान्त्रसिन्धुं ध्यायेऽण्डकोषनिलयं तनुलोमरेखम् ॥ ६ ॥ वक्षः पयोधितनयाकुचकुङ्कुमेन हारेण कौस्तुभमणिप्रभया विभातम्। श्रीवत्सलक्ष्महरिचन्दनजप्रसूनमालोचितं भगवतः सुभगं स्मरामि ॥ ७ ॥ बाहू सुवेषसदनौ वलयाङ्गदादिशोभास्पदौ दुरितदैत्यविनाशदक्षौ। तौ दक्षिणौ भगवतश्च गदासुनाभतेजोर्जितौ सुललितौ मनसा स्मरामि ॥ ८ ॥ वामौ भुजौ मुररिपोर्धृतपद्मशङ्खौ श्यामौ करीन्द्रकरवन्मणिभूषणाढ्यौ। रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ पद्मालयाप्रियकरौ रुचिरौ स्मरामि ॥ ९ ॥ कण्ठं मृणालममलं मुखपङ्कजस्य लेखात्रयेण वनमालिकया निवीतम्। किम्वा विमुक्तिवशमन्त्रकसत्फलस्य वृन्तं चरं भगवतः सुभगं स्मरामि ॥ १० ॥ रक्ताम्बुजं दशनहासविकासरम्यं रक्ताधरौष्ठवरकोमलवाक्सुधाढ्यम्। सन्मानसोद्भवचलेक्षणपत्रचित्रं लोकाभिराममलं च हरेः स्मरामि ॥११॥ सूरात्मजावसथगन्धविदं सुनासं भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम्। कामोत्सवं च कमलाहृदयप्रकाशं सञ्चिन्तयामि हरिवक्त्रविलासदक्षम् ॥ १२ ॥ कर्णौ लसन्मकरकुण्डलगण्डलोलौ नानादिशां च नभसश्च विकासगेहौ। लोलालकप्रचयचुम्बनकुञ्चिताग्रौ लग्नौ हरेर्मणिकिरीटतटे स्मरामि ॥१३॥ भालं विचित्रतिलकं प्रियचारुगन्धगोरोचनारचनया ललनाक्षिसख्यम्। ब्रह्मैकधाम मणिकान्तकिरीटजुष्टं ध्यायेन्मनोनयनहारकमीश्वरस्य ॥१४॥ श्रीवासुदेवचिकुरं कुटिलं निबद्धं नानासुगन्धिकुसुमैः स्वजनादरेण। दीर्घं रमाहृदयगाशमनं धुनन्तं ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥१५॥ मेघाकारं सोमसूर्यप्रकाशं सुभ्रूभ्रामं शक्रचापैकमानम्। लोकातीतं पुण्डरीकायताक्षं विद्युच्चेलं चाश्रयेऽहं त्वपूर्वम् ॥ १६ ॥ दीनं हीनं सेवया देववत्या पापैस्तापैः पूरितं मे शरीरम्। लोभाक्रान्तं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां

वासुदेव ! ॥१७॥ ये भक्त्याद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोक-पुष्पैः । स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति ॥ १८ ॥ पद्मेरितमिदं पुण्यं शिवेन परिभाषितम् । धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ १९ ॥ पठन्ति ये महाभागास्ते मुच्यन्तेंऽहसोऽखिलात् । धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥ २० ॥

॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पद्माप्रोक्तो विष्णुस्तवराजः सम्पूर्णः ॥

---

## श्रीकृष्णस्तवराजः

श्रीमहादेव उवाच । शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभम् । यज्ज्ञात्वा न पुनर्गच्छेन्नरो निरययातनाम् ॥ १ ॥ कवचं च महेशानि ! त्रैलोक्यमङ्गलादिकम् । नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता । सनत्कुमारेण पुरा योगीन्द्रगुरुवर्त्मना ॥२॥ श्रीनारद उवाच । प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने । तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥ ३ ॥ अज प्रसीद भगवन्नमितद्युतिपञ्जर ! । अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ! ॥४॥ स्वसम्वेद्यप्रसीदाऽस्मदानन्दात्मन्ननामय । अचिन्त्य-सारविश्वात्मन्प्रसीद परमेश्वर ! ॥ ५ ॥ प्रसीद तुङ्गतुङ्गानां प्रसीद शिवशोभन ! । प्रसीद गुणगम्भीर गम्भीराणां महाद्युते ! ॥ ६ ॥ प्रसीद व्यक्तविस्तीर्ण विस्तीर्णा-मामगोचर ! । प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम् ॥ ७ ॥ गुरोर्गरीयः सर्वेश ! प्रसीदानन्तदेहिनाम् । जय माधव मायात्मञ्जय शाश्वतशङ्खभृत् ॥ ८ ॥ जय शङ्खधर श्रीमञ्जय नन्दकनन्दन । जय चक्रगदापाणे जय देव जनार्दन ॥ ९ ॥ जय रत्नवराबद्धकिरीटाक्रान्तमस्तक । जय पक्षिपतिच्छायानिरुद्धार्ककरारुण ! ॥१०॥ नमस्ते नरकाराते नमस्ते मधुसूदन । नमस्ते ललितापाङ्ग नमस्ते नरकान्तक ! ॥११॥

नमः पापहरेशान ! नमः सर्वभयापह ! । नमः सम्भूतसर्वात्मन्नमः सम्भृतकौस्तुभ! ॥१२॥ नमस्ते नयनातीत नमस्ते भयहारक ! । नमो विभिन्नवेशाय नमः श्रुतिपथा-तिग! ॥ १३ ॥ नमस्त्रिमूर्त्तिभेदेन स्वर्गस्थित्यन्तहेतवे । विष्णवे त्रिदशारातिजिष्णवे ! परमात्मने ॥१४॥ चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभे । विश्वाय विश्ववन्द्याय विश्वभूतानुवर्तिने ॥१५॥ नमोऽस्तु योगिध्येयात्मन्नमोऽस्त्वध्यात्मरूपिणे । भक्ति-प्रदाय भक्तानां नमस्ते भक्तिदायिने ॥ १६ ॥ पूजनं हवनं चेज्या ध्यानं पश्चान्नम-स्क्रिया । देवेश कर्म सर्वं मे भवेदाराधनं तव ॥ १७ ॥ इतिहवनजपार्चाभेदतो विष्णुपूजानियतहृदयकर्मा यस्तु मन्त्री चिराय । स खलु सकलकामान्प्राप्य कृष्णा-न्तरात्मा जननमृतिविमुक्तोऽत्युत्तमां भक्तिमेति ॥१८॥ गोगोपगोपिकावीतं गोपालं गोषु गोप्रदम् । गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकम् ॥ १९ ॥ प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम् । धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥२०॥

॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे श्रीकृष्णस्तवराजः सम्पूर्णः ॥

---

## ब्रह्मदेवकृतकृष्णस्तोत्रम्

ब्रह्मोवाच । रक्ष रक्ष हरे मां च निमग्नं कामसागरे । दुष्कीर्त्तिजलपूर्णे च दुष्पारे बहुसङ्कटे ॥ १ ॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे । अतीवनिर्मलज्ञान-चक्षुःप्रच्छन्नकारणे ॥ २ ॥ जन्मोर्मिसङ्गसहिते योषिन्नक्रौघसङ्कुले । रतिस्रोतः-समायुक्ते गम्भीरे घोर एव च ॥ ३ ॥ प्रथमामृतरूपे च परिणामविषालये । यमा-लयप्रवेशाय मुक्तिद्वारातिविस्मृते ॥ ४ ॥ बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् । स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन ! ॥ ५ ॥ मद्विधाः कतिचिन्नाथ ! नियोज्या भवकर्मणि । सन्ति विश्वेश विधयो हे विश्वेश्वर ! माधव ! ॥ ६ ॥ न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः । तथाऽपि न स्पृहा कामे त्वद्भक्तिव्यवधायके॥७॥

हे नाथ ! करुणासिन्धो ! दीनबन्धो ! कृपां कुरु । त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८ ॥ इत्युक्त्वा जगतां धाता विरराम सनातनः । ध्यायन् ध्यायन् मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । स चैवाकर्णविषये न निमग्नो भवेद्ध्रुवम् ॥१०॥ मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम् । इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११ ॥

॥ इति श्रीब्रह्मदेवकृतं कृष्णस्तोत्रं सम्पूर्णम् ॥

---

## जगन्नाथाष्टकम्

कदाचित्कालिन्दीतटविपिनसङ्गीतकरवो मुदाऽऽभीरीनारीवदनकमलास्वादमधुपः । रमाशम्भुब्रह्मासुरपतिगणेशार्चितपदो जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ १ ॥ भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रान्ते सहचरिकटाक्षं विदधते । सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो जगन्नाथः स्वामी नयनपथगामी० ॥२॥ महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे वसन्प्रासादान्तः-सहजबलभद्रेण बलिना । सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथः स्वामी० ॥ ३ ॥ कथापारावारः सजलजलदश्रेणिरुचिरो रमावाणीरामस्फुरदमलपद्मेक्षण-मुखैः । सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नाथः स्वामी० ॥४॥ रथाऽऽरूढो गच्छन्पथि मिलितभूदेवपटलैः स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः । दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया जगन्नाथः स्वामी० ॥ ५ ॥ परब्रह्मापीड्यः कुवलयदलोत्फुल्लनयनो निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि । रसानन्दो राधासरसवपुरालिङ्गनसुखो जगन्नाथः स्वामी० ॥ ६ ॥ न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् । सदा काले काले प्रमथपतिना गीतचरितो जगन्नाथः स्वामी० ॥ ७ ॥ हर त्वं

संसारं दुततरमसारं सुरपते। हर त्वं पापानां विततिमपरां यादवपते! । अहो दीना-
नाथं निहितमचलं निश्चितपदं जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

॥ इति श्रीजगन्नाथाष्टकं सम्पूर्णम् ॥

---

## भावविज्ञप्तिस्तवः

श्रियः पतिं तत्पदपङ्कजस्पृहातृणीकृतान्यं यतिशेखरं तथा। श्रीरङ्गसूरिं मम देशिकेन्द्रं श्रीमच्छठारिं च निजान्नमाश्रये ॥ १ ॥ यद्वक्षःस्थलमन्दिरं प्रविलसन्माणिक्यमुक्तावलीदोलान्दोलनरागलोलहृदया निःसीमभाग्योदया। श्रीदेवी समलङ्करोति करुणापीयूषपाथोनिधिश्चेतः सद्मनि सर्वदा विजयतां श्रीरङ्गराजः स मे ॥ २ ॥ भागं यस्य च दक्षिणं भगवती सौभाग्यसौशील्यभूर्भूदेवी सततं विभूषयति यद्वामं च लीलाभिधा। देवी नीलसरोजसुन्दररुचिः सौन्दर्यलीलागृहं चेतः सद्मनि सर्व० ॥ ३ ॥ निर्लोभैरपि निःस्पृहैरपि परानन्दैकमग्नैरपि प्रेम्णा सस्पृहमात्तलोभमसकृद्यद्रूपमालोक्यते। नैतावन्न भवन्त्यनुक्षणमभिप्रेक्ष्याऽपि तृप्तास्ततश्चेतः सद्मनि० ॥४॥ श्रीदेवीपरिशोभिताच्छहृदया भूभूषिता दक्षिणे लीलास्वीकृतवामभागरुचिरा मूर्त्तिः परा राजते। यस्यैवोत्सवमूर्त्तिरित्यभिधया चेतश्चमत्कारिणी चेतः सद्मनि० ॥ ५ ॥ यस्याङ्घ्रिस्मरणं समस्तविपदामुन्मूलनं सम्पदां सर्वासामभिवृद्धिदं स्वजनतोद्धारप्रवृद्धाग्रहम्। सद्विद्योदयदं जवादभयदं श्रेयः समूहप्रदं चेतः सद्मनि० ॥ ६ ॥ भ्रान्त्वा भूवलयं निशोऽपि निखिला लोकानधस्तांस्तथैवोर्ध्वस्थानभिवीक्ष्य नात्ममदृशं लावण्यलक्ष्मीः स्वयम्। प्रेम्णाऽमुं समुपाश्रितेति जनधीर्यद्दर्शने जायते चेतः सद्मनि० ॥ ७ ॥ इन्दौ शारदरात्रिकैरवसभासौभाग्यशोभाकरे पद्मे पद्मनिवासिनी मुखनिभेऽप्यत्यन्तमन्दादरा। यस्मिन्नीक्षणगोचरे सति नृणां दृष्टिः सदा जायते चेतः सद्मनि० ॥८॥ रेवत्या स्वजनाभिलापचयधुक्पादाब्ज-

युष्मानतः श्रीदेवीविलसत्सुवक्षस इलालीलाश्रितस्य प्रभोः। यात्रा यस्य विमानगस्य नगरे सञ्जायते सर्वतःश्चेतः सद्मनि० ॥९॥ कति कति न विलोकितानि लोके हरिसदनानि मनोमनोहराणि। तदपि मम रतिः सुरासुरार्च्ये प्रतिदिनमेधत एव रङ्गराजे॥ १०॥ पुर्य्यः सप्त नमोऽस्तु वः प्रतिदिनं मोक्षाख्यभिक्षाप्रदा यूयं वः शुभकीर्त्तयः प्रतिमहाशास्त्रं प्रसिद्धाश्चिरात्। क्षन्तव्यं मम मानसं तु चपलं संसेव्य युष्मानपि प्रेम्णा शान्तिमुपैति नैव हि विना श्रीरङ्गराजप्रभुम्॥११॥ दृष्टैव काशी मथुरा च काञ्चीयुगं प्रभो! द्वारवती तथैव। पुर्य्यप्ययोध्या न मयानुभूतं कुत्राऽपि युष्मत्पुरवाससौख्यम्॥ १२॥ तर्कव्याकरणामृताब्धिविरता साहित्यमन्दादरा वेदान्तेष्वपि निःस्पृहाऽपि च महाकोशेषु मुक्तादरा। चेतोवृत्तिरियं प्रभो विरहिणी कान्तेव सदुंशाजा त्यक्त्वा ते चरणाम्बुजं न रमते श्रीरङ्गभर्त्तुः प्रभो!॥१३॥ प्रभो! गङ्गायां वा सरिति यमुनायामपि मुदा प्रयागे वा तिष्ठन् शयनमशनं वाऽप्यनुभवन्। कदा श्रीरङ्गेशप्रभुचरणसेवासुखमहं पुनः प्राप्स्यामीति प्रतिलवमनुध्याननिरतः ॥ १४ ॥ भक्ताभीप्सितपूर्तिपण्डितपदाम्भोजैकवारस्मृतेर्विश्वापत्प्रशमप्रवीणहृदय! श्रीरङ्गराजप्रभो!। आयासः कलसस्तवाऽस्ति भगवन् भावत्कपादाम्बुजद्वन्द्वाऽदूरनिवासवाञ्छितफलं दातुं दयाब्धेऽद्य मे ॥१५॥ इन्द्रायेन्द्रपदं निधीश्वरपदं यक्षाधिराजाय वा दारिद्र्यापरमूर्त्तये निरुपमैश्वर्यं सुदाम्ने मुदा। दातुं गाढनिबद्धसत्परिकरस्यासीन्न लोभाङ्कुरो मद्वाञ्छापरिपूरणे कथमहो क्षोभोऽस्ति लोभस्तव ॥ १६॥ नैन्द्रे पदे न निधिनाथपदे पदे न क्ष्मापालकस्य न परत्र च मेऽस्ति वाञ्छा। श्रीरङ्गराज! भवदेकसमीपवासवाञ्छाऽस्ति साऽपि भवता नहि पूर्यते किम्॥१७॥ जिह्वे निरर्गलतराऽसि विचारय त्वं किं जल्पसि प्रणतवत्सल एष ईशः। यद्यत्करोति स विभुस्तदसंशयांशां विद्धि स्वकीयजनतोभयलोकपथ्यम्॥ १८॥ युष्मत्पादाम्बुरुहविरहव्याधितप्ताशयोऽयं दासो जल्पेत्किमपि यदिह श्रीपते तत्र चिन्त्यम्। जाने यद्यप्यखिलजगतां श्रेयसे ते प्रवृत्तिं बद्धोत्साहां त्यजति न मनोऽथाऽपि वाचालतां मे ॥१९॥ श्रीरङ्गराज हृदयं भवदङ्घ्रियुग्मे देहस्तु सञ्चरति सम्प्रति यत्र कुत्र।

इच्छा भवेत्तव यदा भगवंस्तदाऽयं कायस्त्वदीयपदपङ्कजसन्निधिस्थः ॥२०॥ श्रीरङ्ग-
राज। तदलं बहुजल्पनेन यत्र क्व वा भवतु भाग्यवशात्स्थितिर्मे। चेतःस्थितिस्तु भव-
दीयपदाब्जयुग्मे भूयादहर्निशमियं चरमाऽर्थना मे ॥ २१ ॥ श्रीविष्णुगोपालशठारि-
नाथ श्रीभाष्यकारा अपि चारुरूपाः। श्रीसौम्यजामातृमुनिश्च नित्यं यद्दक्षिणे
भान्ति कृतप्रतिष्ठाः ॥२२॥ श्रीमद्रमारमणवेङ्कटशैलनाथाऽनाथं जनं विविधताप-
भियाऽभियातम्। यद्वामभागपरिशोभितदिव्यरूप सम्पश्य मां निजकटाक्षविचि-
त्रपातैः ॥२३॥ समस्तलोकस्य मनो हरन्ती निःसीमसौन्दर्यभरेण नित्यम्। मूर्त्ति-
र्मनो मोहयति स्म सा मे श्रीरङ्गनाथस्य दयासुधाब्धेः ॥२४॥ हे वेणुगोपाल! मदी-
यगोगणः समर्पितोऽस्त्येव भवत्पदान्तिके। स चेद्विमार्गं श्रयिता तदा तु तद्गोपाल-
तालाञ्छनकृत्तव प्रभोः ॥२५॥ ततः प्रणामान् शतशः सहस्रशः समर्प्य विज्ञापय-
तीह किङ्करः। एष त्वदीयः स मदीयगोगणो विमार्गगो नैव भवेत्तथा कुरु ॥२६॥
शठारे स्वामिन् हे मम तव पदाम्भोरुहयुगं श्रितस्याऽपीहैते हठतरहठादिन्द्रियशठाः।
तुदन्ति स्वान्तन्तत्किमिति शठशत्रोस्तव जगत्पवित्रां कीर्त्तिं नो हरति तदिमान्
दण्डय विभो! ॥२७॥ वेदान्ताम्बुधिमन्थने नहि सुरा नैवाऽसुरा नाऽचलो नाऽहि-
र्नाऽऽत्मनि कूर्मता विषभिया शम्भुश्च नाऽपेक्षितः। यस्याऽशेषमनुष्यपेयमकरोद्वेदार्थ-
सारामृतं वरं त्वद्भुतविष्णुभावसमनो रामानुजार्यं मुहुः ॥२८॥ येऽपारसंसारस-
मुद्रमग्नजनान् विलोक्याऽनिशयार्द्रचित्ताः। सन्दर्शयामासुरमुं सुमार्गं श्रीलक्ष्मणा-
र्यान्नम मे मनस्तान् ॥ २९ ॥ श्रीभाष्यनिर्माणयशः शरीरमद्याऽपि येषामतिचित्र-
मस्ति। अमृत्युमार्यं जरसाऽप्यजीर्यं श्रीलक्ष्मणार्यान् नमनान् मनो मे ॥ ३० ॥
आरभ्यप्रवर्त्तितमनुत्तमसम्प्रदायं द्रष्टुं पुनर्घृतजनीनिव लक्ष्मणार्यान्। मन्यन्त उत्तम-
जनानिह यान्मनस्तान् जामातृसंज्ञकमुनीन्नम सौम्यपूर्वान् ॥ ३१ ॥ अञ्जनाचल-
शृङ्गारे श्रीनिवासे रतिर्मम। कालत्रये निराबाधा भूयादित्यर्थ्यतेऽनिशम् ॥ ३२ ॥
वैश्या धार्मिककर्ममग्नमनसो यत्पादपद्मद्वयीभक्तिं प्रेमरसप्रभिन्नमनसः कुर्वन्ति
निर्हैतुकीम्। यस्तेषां परिपूर्णतां नयति हृद्वाञ्छाः क्षणेनाऽखिलाश्चेतः सद्मनि

सर्वदा विजयतां श्रीरङ्गराजःप्रभुः ॥ ३३ ॥ काले नेत्रधराङ्कभूमितशुभे वर्षेऽथ मासे शुभे विद्वद्वन्दितकृष्णमिश्रतनयैः श्रीरङ्गपादाश्रयैः। रामाचार्यपुरःसरैर्विरचिता यस्य प्रतिष्ठा मुदा चेतः सद्मनि सर्वदा विजयतां श्रीरङ्गराजः प्रभुः ॥३४॥ श्रीमदीय-पद्पङ्कजसम्पत्कृष्णमिश्रकुलजेष्वखिलेषु। अस्ति ते निरुपमा करुणादृक् तत्कृतेऽत्र पुनरुक्तिरियं मे ॥३५॥ आर्या रामाचार्याः स्वोचरणारामशरणाश्च। विश्वख्यात-सुयशसः सोऽयं श्रीरङ्गनाथ! ते महिमा ॥३६॥ पराङ्कुशा वादिविद्वद्गजराजपरा-ङ्कुशाः। आसन् यत् पितृपादा मे महिमा सोऽपि तावकः ॥ ३७ ॥ भक्तिसारा भक्तिसारा भक्तिसारोपमानकाः। भवन्ति भ्रातरो मे यन्महिमा सोऽपि तावकः ॥ ३८ ॥ मत्कनिष्ठान् श्रीनिवासमधुसूदनसंज्ञकान्। घनश्यामं च गोपालं पाहि श्रीरङ्ग! सर्वदा ॥३६॥ श्रीरङ्गराज! करुणावरुणालय त्वत्पादाब्जयुग्मशरणः किल वासुदेवः। स्वप्नेऽपि नाऽन्यशरणोऽस्ति ततोऽत्र कार्या नित्यं दयादृगिह दासजने दयाब्धे! ॥ ४० ॥ नारायणात्मजनुषो मम वासुदेवेत्याख्यस्य रामगुरुवर्य्यकृपाप्त-नीतेः। एषा कृतिर्विजयतामुपपुण्डरीकं श्रीमत्फतेपुरजनैर्हितरङ्गधाम्नः ॥४१॥ विहा-णीपत्तनीयश्रीरङ्गधामैकजीविना। श्रीमता वासुदेवेन कृता श्रीरङ्गराट्स्तुतिः ॥४२॥

॥ इति श्रीभावविज्ञप्तिनामास्तवः सम्पूर्णः ॥

---

# श्रीवेङ्कटेशाष्टकं स्तोत्रम्

श्रीवेङ्कटेशपदपङ्कजधूलिपङ्क्तिः संसारसिन्धुतरणे तरणिर्नवीना। सर्वाघपु-ञ्जहरणाय च धूमकेतुः पायादनन्यशरणं स्वयमेव लोकम् ॥ १ ॥ शेषाद्रिगेह! तव कीर्त्तितरङ्गपुञ्ज आभूमिनाकमभितः सकलान्पुनानः। मत्कर्णयुग्मविवरे परिगम्य सम्यक्कुर्यादशेषमनिशं खलु तापभङ्गम् ॥ २ ॥ वैकुण्ठराज! सकलोऽपि धनेशवर्गो नीतोऽपमानसरणिं त्वयि विश्वसित्रा। तस्मादयं न समयः परिहासवाचामिष्टं

प्रपूर्य कुरु मां कृतकृत्यसद्म ॥३॥ श्रीमन्नरांस्तु कतिचिद्धनिकांश्च केचित्क्षोणीपतीन्कतिचिदत्र च राजलोकान्। आराधयन्तु मलशून्यमहं भवन्तं कल्याणलाभजननाय समर्थमेकम् ॥४॥ लक्ष्मीपतिस्त्वमखिलेश तव प्रसिद्धमत्रप्रसिद्धमवनौ मदकिञ्चनत्वम्। तस्योपयोगकरणाय मया त्वया च कार्यः समागम इदं मनसि स्थितं मे ॥५॥ शेषाद्रिनाथ। भवताऽयमहं सनाथः सत्यं वदामि भगवंस्त्वमनाथ एव। तस्मात्कुरुष्व मदभीप्सितकृत्यजालमेव त्वदीप्सितकृतौ तु भवान्समर्थः ॥६॥ क्रुद्धो यदा भवसि तत्क्षणमेव भूपो रङ्कायते त्वमसि चेत्खलु नोपयुक्तः। भूपायतेऽथ निखिलश्रुतिवेद्य रङ्क इच्छाम्यतस्तव दयाजलवृष्टिपातम् ॥७॥ अङ्गीकृतं सुविरुदं भगवंस्त्वयेति मद्भक्तपोषणमहं सततं करोमि। आविष्कुरुष्व मयि सत्सततं प्रदीने चिन्ताप्रहारसमयमेव हि योग्यकालः ॥८॥ सर्वासु जातिषु मया तु समत्वमेव निश्चीयते तव विभो। करुणाप्रवाहात्। प्रह्लादपाण्डुसुतबल्लवगृध्रकादौ नीचो न भाति मम कोऽप्यत एव हेतोः ॥९॥ सम्भाविताऽस्तु परिभूतिमथ प्रयान्ति धूर्ता जयं हि कपटैकपरा जगत्याम्। प्राप्ते तु वेङ्कट विभो। परिणामकाले स्याद्वैपरीत्यमिव कौरवपाण्डवानाम् ॥१०॥ श्रीवेङ्कटेश। तव पादसरोजयुग्मे संसारदुःखशमनाय समर्पयामि। भास्वत्सदष्टकमिदं रचितं रसात्तं प्रभाकरोऽहमनिशं विनयेन युक्तः ॥११॥ श्रीशालिवाहनशके शरकाष्टभूमि (१८१५) सङ्ख्यामितेऽथ विजयाभिधवत्सरेऽयम्। श्रीकेशवात्मज इदं व्यतनोत्समल्पं स्तोत्रं प्रभाकर इति प्रथिताभिधानः ॥१२॥

॥ इति गार्ग्यकुलोत्पन्न-यशोदागर्भजकेशवात्मजप्रभाकरकृतिषु श्रीवेङ्कटेशाष्टकं स्तोत्रं समाप्तम् ॥

---

# त्रैलोक्यमङ्गलकवचम्

नारद उवाच। भगवन्सर्वधर्मज्ञ ! कवचं यत्प्रकाशितम्। त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो ! ॥ १ ॥ सनत्कुमार उवाच। शृणु वक्ष्यामि विप्रेन्द्र ! कवचं परमाद्भुतम्। नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥ ब्रह्मणा कथितं मह्यं परं स्नेहाद्वदामि ते। अतिगुह्यतरं तत्त्वं ब्रह्ममन्त्रौघविग्रहम् ॥ ३ ॥ यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवम्। यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयम् ॥ ४ ॥ पठनाद्धारणाच्छंभुः संहर्ता सर्वमन्त्रवित्। त्रैलोक्यजननी दुर्गा महिषादिमहासुरान् ॥ ५ ॥ वरदृप्तान् जघानैव पठनाद्धारणाद्यतः। एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ६ ॥ इदं कवचमत्यन्तगुप्तं कुत्रापि नो वदेत्। शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ७ ॥ शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात्। त्रैलोक्यमङ्गलस्याऽस्य कवचस्य प्रजापतिः ॥८॥ ऋषिश्छन्दश्च गायत्री देवो नारायणः स्वयम्। धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ ९ ॥ प्रणवो मे शिरः पातु नमो नारायणाय च। भालं मे नेत्रयुगलमष्टार्णो भुक्तिमुक्तिदः ॥१०॥ क्लीं पायाच्छ्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः। श्री कृष्णाय सदा घ्राणं गोविन्दायेति जिह्विकाम् ॥ ११ ॥ गोपीजनपदवल्लभाय स्वाहाऽऽननं मम। अष्टादशाक्षरो मन्त्रः कण्ठं पातु दशाक्षरः ॥ १२ ॥ गोपीजनपदवल्लभाय स्वाहा भुजद्वयम्। क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमः स्कन्धौ दशाक्षरः ॥ १३ ॥ क्लीं कृष्णः क्लीं करौ पायात् क्लीं कृष्णायाङ्गतोऽवतु। हृदयं भुवनेशानः क्लीं कृष्णाय क्लीं स्तनौ मम ॥१४॥ गोपालायाग्निजायान्तं कुक्षियुग्मं सदाऽवतु। क्लीं कृष्णाय सदा पातु पार्श्वयुग्ममनुत्तमः ॥ १५ ॥ कृष्णगोविन्दकौ पातां स्मराद्यौ ङेयुतौ मनुः। अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥१६॥ पृष्ठं क्लीं कृष्णकं गालं क्लीं कृष्णाय द्विठान्तकः(म्)। सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्णठद्वयम् ॥१७॥ ऊरू सप्ताक्षरः पायात्त्रयोदशाक्षरोऽवतु। श्रीं ह्रीं क्लीं

पदतो गोपीजनवल्लेनदन्तत ॥१८॥ भाय स्वाहेति पायुं वै क्लीं ह्रीं श्रीं सदशार्णकः। जानुनी च सदा पातु ह्रीं श्रीं क्लीं च दशाक्षरः ॥ १९ ॥ त्रयोदशाक्षरः पातु जङ्घे चक्रायुदायुध.। अष्टादशाक्षरो ह्रीं-श्रीं-पूर्वको विशदर्णकः ॥२०॥ सर्वाङ्गं मे सदा पातु द्वारकानायको बली। नमो भगवते पश्चाद्वासुदेवाय तत्परम् ॥२१॥ ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्वदाऽवतु। श्रीं ह्रीं क्लीं च दशार्णस्तु ह्रीं क्लीं श्रीं षोडशार्णकः ॥ २२ ॥ गदायुदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु। ह्रीं श्रीं दशार्णमन्त्रोऽयं दक्षिणे मां सदाऽवतु ॥ २३ ॥ तारो नमो भगवते रुक्मिणीवल्लभाय च स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ॥ २४ ॥ क्लीं हृषीकेशाय पदं नमो मां वारुणोऽवतु। अष्टादशार्ण. कामान्तो वायव्ये मां सदाऽवतु ॥२५॥ श्रीं(श्री) मायाकामकृष्णाय गोविन्दाय द्विठो मनु'। द्वादशार्णात्मको विष्णुरुत्तरे मां सदाऽवतु ॥२६॥ वाग्भवं कामकृष्णाय ह्रीं गोविन्दाय तत्परम्। श्रीं गोपीजनवल्लभान्ताय स्वाहा हस्तौ ततः ॥२७॥ द्वात्रिंशदक्षरो मन्त्रो मामैशान्ये सदाऽवतु। कालियस्य फणामध्ये दिव्यं नृत्यं करोति तम् ॥ २८ ॥ नमामि देवकीपुत्रं नृत्यराजानमच्युतम्। द्वात्रिंशदक्षरो मन्त्रोऽप्यधो मां सर्वदाऽवतु ॥२९॥ कामदेवाय विद्महे पुष्पबाणाय धीमहि। तन्नोऽनङ्गः प्रचोदयादेपा मां पातु चोर्ध्वतः ॥३०॥ इति ते कथितं विप्र! ब्रह्ममन्त्रौघविग्रहम्। त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपकम् ॥३१॥ ब्रह्मणा कथितं पूर्वं नारायणमुखाच्छ्रुतम्। तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥३२॥ गुरुं प्रणम्य विधिवत्कवचं प्रपठेत्ततः। सकृद्द्विस्त्रिर्यथाज्ञानं स हि(सोऽपि)सर्वतपोमयः ॥ ३३ ॥ मन्त्रेषु सकलेष्वेव देशिको नात्र संशयः। शतमष्टोत्तरं चास्य पुरश्चर्याविधि' स्मृतः ॥३४॥ हवनादीन्दशांशेन कृत्वा तत्साधयेद्ध्रुवम्। यदि स्यात्सिद्धकवचो विष्णुरेव भवेत्स्वयम् ॥ ३५ ॥ मन्त्रसिद्धिर्भवेत्तस्य पुरश्चर्याविधानतः। स्पर्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ॥३६॥ पुष्पाञ्जल्यष्टकं दत्वा मूलेनैव पठेत्सकृत्। दशवर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥३७॥ भूर्जे विलिख्याऽङ्गुलिकां स्वर्णस्थां धारयेद्यदि। कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ॥ ३८ ॥

अश्वमेधसहस्राणि वाजपेयशतानि च। महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ॥३९॥ कलां नार्हन्ति तान्येव सकृदुच्चारणात्ततः। कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥४०॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत्। इदं कवचमज्ञात्वा यजेद्यः पुरुषोत्तमम्। शतलक्षप्रजप्तोऽपि न मन्त्रस्तस्य सिध्यति ॥४१॥

॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे त्रैलोक्यमङ्गलं नाम कवचं सम्पूर्णम् ॥

---

# श्रीबालरक्षा

अव्यादजोऽङ्घ्रिर्मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः। हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ १ ॥ चक्र्यग्रतः सह गदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च। कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २ ॥ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु। श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ ३ ॥ पृश्निगर्भश्च ते बुद्धिमात्मानं भगवान्परः। क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ ४ ॥ व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियःपतिः। भुञ्जानं यज्ञभुक् पातु सर्वग्रहभयङ्करः ॥ ५ ॥ डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः। भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥६॥ कोटरारेवतीज्येष्ठापूतनामातृकादयः। उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥ ७ ॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये। सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ८ ॥

॥ इति श्रीमद्भागवते दशमस्कन्धे गोपीकृतबालरक्षा सम्पूर्णा ॥

---

# भगवन्मानसपूजनम्

हृदम्भोजे कृष्णः सजलजलदश्यामलतनुः सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान्। शरद्राकानाथप्रतिमवदनः श्रीमुरलिकां वहन्ध्येयो गोपीगणपरिवृतः कुङ्कुमचितः ॥ १ ॥ पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन् मणिव्रातभ्राजत्कनकवरपीठं भज हरे। सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैर्गृहाणेदं दूर्वाफलजलवदर्घ्यं मुररिपो ! ॥२॥ त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिरं भजस्वेमं पञ्चामृतरचितमाप्लावमघहन्। द्युनद्याः कालिन्द्या अपि कनककुम्भस्थितमिदं जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ३ ॥ तडिद्वर्णे वस्त्रे भज विजयकान्ताधिहरण प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले। ललाटे पाटीरं मृगमदयुतं धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥ दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेन्दुप्रभवरजसा देव कलये। इमौ पाणी वाणीपतिनुतसकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे! ॥५॥ सदा तृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम्। यशोदासूनो! तत्परमदययाऽशान सखिभिः प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥ सचन्द्रं ताम्बूलं मुखरुचिकरं भक्षय हरे फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम्। सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ७ ॥ विजातीयैः पुष्पैरभिसुरभिभिर्बिल्वतुलसीयुतैश्चेमं पुष्पाञ्जलिमजित ते मूर्ध्नि निदधे। तव प्रादक्षिण्यक्रमणमघविध्वंसि रचितं चतुर्वारं विष्णो जनिपथगतिश्रान्तविदुषा ॥ ८ ॥ नमस्कारोऽष्टाङ्गः सकलदुरितध्वंसनपटुः कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इमम्। तव प्रीत्यै भूयादहमपि च दासस्तव विभो कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन्! ॥ ९ ॥ सदा सेव्यः कृष्णः सजलघननीलः करतले दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम्। कदाचित्कान्तानां कुचकलशपत्रालिरचनास-

मासक्तं स्निग्धैः सह शिशुविहारं विरचयन् ॥ १० ॥ मणिकर्णीच्छया जातमिदं मानसपूजनम् । यः कुर्वीतोपसि प्राज्ञस्तस्य कृष्णः प्रसीदति ॥ ११ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं भगवन्मानसपूजनं सम्पूर्णम् ॥

---

## देवकृता गर्भस्तुतिः

देवा ऊचुः । जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च । ज्योतिःस्वरूपो ह्यनिशः सगुणो निर्गुणो महान् ॥ १ ॥ भक्तानुरोधात्साकारो निराकारो निरङ्कुशः । निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥ २ ॥ निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः । स्वात्मारामः पूर्णकामोऽनिमिषो नित्य एव च ॥ ३ ॥ स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः । सर्वदो दुःखदो दुर्गो दुर्जनान्तक एव च ॥४॥ सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः । वेदहेतुश्च वेदश्च वेदाङ्गो वेदविद्विभुः ॥ ५ ॥ इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः । हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च ॥ ६ ॥ द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् । दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितं फलम् ॥ ७ ॥ इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः । बभूव जल-वृष्टिश्च निश्चेष्टा मथुरा पुरी ॥ ८ ॥

॥ इति श्रीदेवकृता गर्भस्तुतिः सम्पूर्णा ॥

---

## वसुदेवकृतं श्रीकृष्णस्तोत्रम्

वसुदेव उवाच । त्वामतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम् । ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ १ ॥ स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् । निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ २ ॥ स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्मम-

दर्शनम् । स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ३ ॥ शरीरवन्तं सगुणमशरीरं गुणोत्करम् । प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ४ ॥ सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम् । सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ५ ॥ अनन्त स्तवनेऽशक्तोऽशक्ता देवी सरस्वती । यं वा स्तोतुमशक्तश्च पञ्चवक्त्रः षडाननः ॥६॥ चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा । गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ ७ ॥ ऋषयो देवताश्चैव मुनीन्द्रमनुमानवाः । स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवन्ति ते ॥ ८ ॥ श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः । विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९ ॥ वसुदेवकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे ॥ १० ॥ विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम् । सङ्कटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते ॥ ११ ॥

॥ इति श्रीब्रह्मवैवर्त्ते महापुराणे वसुदेवकृतं कृष्णस्तोत्रं सम्पूर्णम् ॥

---

## बालकृतं कृष्णस्तोत्रम्

बाला ऊचुः । यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् । तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ! ॥ १ ॥ त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता । स्रष्टा पाता च संहर्त्ता जगतां च जगत्पते ॥२॥ वह्निर्वा वरुणो वाऽपि चन्द्रो वा सूर्य एव च । यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥ ३ ॥ ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः । मानवाश्च तथा दैत्या यक्षराक्षसकिन्नराः ॥ ४ ॥ ये ये चराचराश्चैव सर्वे तव विभूतयः । आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ॥ ५ ॥ अभयं देहि गोविन्द । वह्निसंहरणं कुरु । वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥ ६ ॥ इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् । दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टिनः ॥ ७ ॥ दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः । सर्वापदः प्रणश्यन्ति

हरिस्मरणमात्रतः ॥ ८ ॥ इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत्। वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ ९ ॥ शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसङ्कटे। स्तोत्रमेतत्पठित्वा तु मुच्यते नाऽत्र संशयः ॥१०॥ शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत्। इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् ॥ ११ ॥

॥ इति श्रीबालकृतं श्रीकृष्णस्तोत्रं सम्पूर्णम् ॥

---

## मोहिनीकृतं श्रीकृष्णस्तोत्रम्

मोहिन्युवाच। सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम्। तदेव कर्मणां बीजं तदुद्भव! नमोऽस्तु ते ॥ १ ॥ स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः। नमो ब्रह्मन्! जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ २ ॥ सर्वाजित! जगज्जेतर्जीवजीव मनोहर!। रतिबीज रतिस्वामिन् रतिप्रिय! नमोऽस्तु ते ॥३॥ शश्वद्योपिदधिष्ठान योपित्प्राणाधिकप्रिय!। योपिद्वाहन योपास्त्र योपिद्बन्धो नमोऽस्तु ते ॥४॥ पति-साध्यकराशेषरूपाधार गुणाश्रय!। सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥५॥ शश्वद्योनिकृताधार स्त्रीसन्दर्शनवर्धन। विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥ ६ ॥ अकृपा येषु तेऽनर्थं तेषां ज्ञानं विनाशनम्। अनूहरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७ ॥ तपस्विनां च तपसां विघ्नबीजाय लीलया। मनः सकामं मुक्तानां कर्तुं शक्त! नमोऽस्तु ते ॥ ८ ॥ तपः साध्यस्तथाराध्यः सदैव पाञ्चभौतिकः। पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते ॥ ९ ॥ मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः। विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥ १० ॥ उक्तं माध्यन्दिने कान्ते स्तोत्रमेतन्मनोहरम्। पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥ ११ ॥ स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत्। अभीष्टं लभते नूनं निष्कलङ्को भवेद्ध्रुवम् ॥ १२ ॥ चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम्। भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः। वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ १३ ॥

॥ इति श्रीमोहिनीकृतं श्रीकृष्णस्तोत्रं समाप्तम् ॥

## ब्रह्मदेवकृतं श्रीकृष्णस्तोत्रम्

ब्रह्मोवाच। रक्ष रक्ष हरे! मा च निमग्नं कामसागरे। दुष्कीर्त्तिजलपूर्णे च दुष्पारे, बहुसङ्कटे ॥ १ ॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे। अतीव निर्मलज्ञान-चक्षुःप्रच्छन्नकारणे ॥ २ ॥ जन्मोर्मिसङ्गसहिते योषिन्नक्रौघसङ्कुले। रतिस्रोतः-समायुक्ते गम्भीरे घोर एव च ॥ ३ ॥ प्रथमामृतरूपे च परिणामविषालये। यमा-लयप्रवेशाय मुक्तिद्वारातिविस्मृतौ ॥ ४ ॥ बुद्ध्या तरण्या विज्ञानैरुद्धराऽस्मानतः स्वयम्। स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन! ॥ ५ ॥ मद्विधाः कतिचिन्नाथ! नियोज्या भवकर्मणि। सन्ति विश्वेश विधयो हे विश्वेश्वर माधव! ॥ ६ ॥ न कर्म-क्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः। तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७ ॥ हे नाथ करुणासिन्धो दीनबन्धो कृपा कुरु। त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८ ॥ इत्युक्त्वा जगतां धाता विरराम सनातनः। ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्। स चैवाऽकर्मविषये न निमग्नो भवेद्ध्रुवम् ॥१०॥ मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम्। इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११ ॥

॥ इति श्रीब्रह्मदेवकृतं कृष्णस्तोत्रं सम्पूर्णम् ॥

---

## श्रीकृष्णस्तोत्रम्

वन्दे नवघनश्यामं पीतकौशेयवाससम्। सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १ ॥ राधेशं(रामेशं) राधिकाप्राणवल्लभं वल्लवीसुतम्। राधासेवितपादाब्जं राधा-वक्षःस्थलस्थितम् ॥२॥ राधानुगं राधिकेष्टं राधापहृतमानसम्। राधाधारं भवाधारं

सर्वाधारं नमामि तम् ॥ ३ ॥ राधाहृत्पद्ममध्ये च वसन्तं सन्ततं शुभम् । राधा-सहचरं शश्वद्राधाज्ञापरिपालकम् ॥ ४ ॥ ध्यायन्ते योगिनो योगात् सिद्धाः सिद्धेश्वराश्च यम् । तं ध्यायेत्सततं शुद्धं भगवन्तं सनातनम् ॥ ५ ॥ सेवन्ते सततं सन्तो ब्रह्मेशशेषसंज्ञकाः । सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनम् ॥ ६ ॥ निर्लिप्तं च निरीहं च परमात्मानमीश्वरम् । नित्यं सत्यं च परमं भगवन्तं सनातनम् ॥ ७ ॥ यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् । योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ॥ ८ ॥ बीजं नानावताराणां सर्वकारणकारणम् । वेदावेद्यं वेदबीजं वेदकारणकारणम् । योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ॥ ९ ॥ इत्येवमुक्त्वा गन्धर्वः पपात धरणीतले । ननाम दण्डवद्भूमौ देवदेवं परात्परम् ॥ १० ॥ इति तेन कृतं स्तोत्रं यः पठेत्प्रयतः शुचिः । इहैव जीवन्मुक्तश्च परं याति परां गतिम् ॥११॥ हरिभक्तिं हरेर्दास्यं गोलोके च निरामयः । पार्षदप्रवरत्वं च लभते नाऽत्र संशयः ॥ १॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे श्रीकृष्णस्तोत्रं सम्पूर्णम् ॥

---

## श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्

अस्य श्रीकृष्णाष्टोत्तरशतनामस्तोत्रस्य श्रीशेष ऋषिः । अनुष्टुप्छन्दः । श्रीकृष्णो देवता । श्रीकृष्णप्रीत्यर्थे श्रीकृष्णाष्टोत्तरशतनामजपे विनियोगः ।

शेष उवाच । श्रीकृष्णः कमलानाथो वासुदेवः सनातनः । वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १ ॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः । चतुर्भुजात्तचक्रासिगदाशङ्खाम्बुजायुधः ॥ २ ॥ देवकीनन्दनः श्रीशो नन्दगोपप्रियात्मजः । यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३ ॥ पूतनाजीवितहरः शकटासुरभञ्जनः । नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ ४ ॥ नवनीतनवाहारी मुचुकुन्दप्रसादकः । षोडशस्त्रीसहस्रेशस्त्रिभङ्गो मधुराकृतिः ॥५॥ शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां

पतिः। वत्सपालनसञ्चारी धेनुकासुरभञ्जनः ॥ ६ ॥ तृणीकृततृणावर्तो यमलार्जुनभञ्जनः। उत्तालतालभेत्ता च तमालश्यामलाकृतिः ॥ ७ ॥ गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः। इलापतिः परञ्ज्योतिर्यादवेन्द्रो यदूद्वहः ॥ ८ ॥ वनमाली पीतवासाः पारिजातापहारकः। गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः ॥ ९ ॥ अजो निरञ्जनः कामजनकः कञ्जलोचनः। मधुहा मथुरानाथो द्वारकानायको बली ॥ १० ॥ वृन्दावनान्तःसञ्चारी तुलसीदामभूषणः। स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ॥ ११ ॥ कुब्जाकृष्णाङ्गरणो मायी परमपूरुषः। मुष्टिकासुरचाणूरमहायुद्धविशारदः ॥१२॥ संसारवैरी कंसारिर्मुरारिर्नरकान्तकः। अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः ॥१३॥ शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकृत्। विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ १४ ॥ सत्यवाक् सत्यसङ्कल्पः सत्यभामारतो जयी। सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥१५॥ जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः। वृषभासुरविध्वंसी बाणासुरकरा(बला)न्तकृत् ॥ १६ ॥ युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः। पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥१७॥ कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः। दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ १८ ॥ नारायणः परब्रह्म पन्नगाशनवाहनः। जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ १९ ॥ पुण्यश्लोकस्तीर्थकरो वेदवेद्यो दयानिधिः। सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ॥ २० ॥ इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम्। कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ २१ ॥ स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया पुरा। कृष्णनामामृतं नाम परमानन्ददायकम् ॥ २२ ॥ अनुपद्रवदुःखघ्नं परमायुष्यवर्धनम्। दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ॥ २३ ॥ पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत्। पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥२४॥ धनावहं दरिद्राणां जयेच्छूनां जयावहम्। शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् ॥२५॥ वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम्। समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥ २६ ॥ अन्ते कृष्णस्मरणदं भवतापभयापहम्। कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने। नाथाय रुक्मिणी-

ाय नमो वेदान्तवेदिने ॥२७॥ इमं मन्त्रं महादेव जपन्नेव दिवानिशम्। सर्व-
हानुग्रहभाक् सर्वप्रियतमो भवेत् ॥२८॥ पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान्।
निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ २९ ॥

॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे उमामहेश्वरसम्वादे धरणीशेषस-
म्वादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

---

# इन्द्रकृतं कृष्णस्तोत्रम्

इन्द्र उवाच। अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम्। गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥ १ ॥ भक्तध्यानाय सेवायै नानारूपधरं वरम्। शुक्लरक्त-पीतश्यामं युगानुक्रमणेन च ॥ २ ॥ शुक्लतेजः स्वरूपं च सत्ये सत्यस्वरूपिणम्। त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥ ३ ॥ द्वापरे पीतवर्णं च शोभितं पीत-वाससा। कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ ४ ॥ नवधाराधरोत्कृष्टश्याम-सुन्दरविग्रहम्। नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम् ॥ ५ ॥ गोपिकाचेतनहरं राधाप्राणाधिकं परम्। विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च ॥ ६ ॥ रूपेणाऽप्रति-मेनैव रत्नभूषणभूषितम्। कन्दर्पकोटिसौन्दर्यं बिभ्रन्तं शान्तमीश्वरम् ॥ ७ ॥ क्रीडन्तं राधया सार्धं वृन्दारण्ये च कुत्रचित्। कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम् ॥ ८ ॥ जलक्रीडां प्रकुर्वन्तं राधया सह कुत्रचित्। राधिकाकवरीभारं कुर्वन्तं कुत्रचिद्वने ॥ ९ ॥ कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम्। राधाचर्विततांबूलं गृह्णन्तं कुत्रचिन्मुदा ॥१०॥ पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा। दत्तवन्तं च राधायै कृत्वा मालां च कुत्रचित् ॥ ११ ॥ कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्ड-लम्। राधादत्तां गले मालां धृतवन्तं च कुत्रचित् ॥ १२ ॥ सार्धं गोपालिकाभिश्च विहरन्तं च कुत्रचित्। राधां गृहीत्वा गच्छन्तं तां विहाय च कुत्रचित् ॥ १३ ॥

सर्वगुणातीतषाड्गुण्यायाऽनिवेधसे ॥ २९ ॥ सत्यज्ञानानन्तगुणलक्षणे चतुरात्मने । चतुःपञ्चनवव्यूहदशद्वादशमूर्तये ॥ ३० ॥ नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे । नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ! ॥ ३१ ॥ पञ्चकालैकमनसां त्वमेव गतिरव्ययः । स्वमहिम्नि स्थितं देवं निर्विकारं निरञ्जनम् ॥३२॥ अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् । गुणातीतं परं शान्तमञ्जनाभं सुरेश्वरम् ॥३३॥ तुरीयाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् । विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥३४॥ मोक्षं सालोक्यसारूप्यं प्रार्थये न धराधर ! । इच्छामि हि महाभाग कारुण्यं तव सुव्रत ॥३५॥ सकलाचरणातीत किङ्करोऽस्मि तवानघ ! । पुनः पुनः किङ्करोऽस्मि तवाऽहं पुरुषोत्तम ! ॥ ३६ ॥ आमनाद्यनुयागान्तमर्चनं यन्मया कृतम् । भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥ ३७ ॥ तत्सर्वं क्षम्यतां देव ! दीनं मामात्मसात्कुरु । इति स्तोत्रेण देवेशं स्तुत्वा मधुविघातिनम् ॥३८॥ यागावसानसमये देवदेवस्य चक्रिणः । नित्यं किङ्करभावेन स्वात्मानं विनिवेदयेत् ॥ ३९ ॥

॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे प्रथमोऽध्यायः समाप्तः ॥

जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! । नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ! ॥ १ ॥ विज्ञापनमिदं देव शृणुष्व पुरुषोत्तम ! । नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥ २ ॥ नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः । ब्रह्मेशाद्यैः सुरगणैः पञ्चकालपरायणैः ॥ ३ ॥ पूज्यसे पुण्डरीकाक्ष दिव्यैर्मन्त्रैर्महात्मभिः । पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ॥ ४ ॥ कलौ जातोऽस्मि देवेश ! सर्वधर्मबहिष्कृते । कथं त्वामसमाचारः पापप्रसवभूरहम् ॥५॥ अर्चयामि दयासिन्धो ! पाहि मां शरणागतम् । तापत्रयदवाग्नौ च दह्यमानं सदा विभो ! ॥ ६ ॥ पाहि मां पुण्डरीकाक्ष ! केवलं कृपया तव । जन्ममृत्युजराव्याधिदुःखसन्तप्तदेहिनम् । पालयाऽऽशु दृशा देव सदा कारुण्यगर्भया ॥७॥ इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ! । शरीरं मम देवेश ! व्याधिभिः परिपीडितम् ॥८॥ मनो मे पुण्डरीकाक्ष ! विषयानेव धावति । वाणी मम हृषीकेश ! मिथ्यापारुष्यदूषिता ॥ ९ ॥ एवं साधनहीनोऽहं किं करिष्यामि

केशव ! । रक्ष मां कृपया कृष्ण ! भवाब्धौ पतितं सदा ॥१०॥ अपराधसहस्राणां सहस्रमयुतं तथा । अर्बुदं चाप्यसंख्येयं करुणाब्धे ! क्षमस्व मे ॥ ११ ॥ यच्चाऽपराधं कृतवानज्ञानात्पुरुषोत्तम ! । अज्ञस्य मम देवेश ! तत्सर्वं क्षन्तुमर्हसि ॥१२॥ अज्ञ-त्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् । कृतापराधकृपणं क्षन्तुमर्हसि मां विभो ! ॥१३॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । तानि सर्वाणि मे देव ! क्षमस्व मधुसूदन ! ॥ १४ ॥ यज्जन्मनःप्रभृति मोहवशङ्गतेन नानापराधशतमाचरितं मया ते । अन्तर्बहिश्च सकलं तव पश्यतोऽपि क्षन्तुं त्वमर्हसि हरे ! करुणावशेन ॥ १५ ॥ कर्मणा मनसा वाचा या चेष्टा मम नित्यशः । केशवाराधने सा स्याज्जन्मजन्मा-न्तरेष्वपि ॥ १६ ॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे द्वितीयोऽध्यायः सम्पूर्णः ॥ जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! । नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ! ॥ १ ॥ नमस्ते वासुदेवाय शान्तानन्दचिदात्मने । अध्यक्षाय स्वतन्त्राय निरपेक्षाय शाश्वते ॥ २ ॥ अच्युतायाऽविकाराय तेजसां निधये नमः । क्लेशकर्माद्यसंस्पृष्टपूर्ण-षाड्गुण्यमूर्तये ॥ ३ ॥ त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः । त्रियुगाय नम-स्तेऽस्तु नमस्ते चतुरात्मने ॥४॥ प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ! । चतुःपञ्चन-वव्यूहदशद्वादशमूर्तये ॥५॥ अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये । नारायण ! नम-स्तेऽस्तु पुण्डरीकायतेक्षण ! ॥ ६ ॥ सुभ्रूललाट सुनस सुस्मिताधरविद्रुम ! । पीन-वृत्तायतभुज ! श्रीवत्सकृतभूषण ! ॥ ७ ॥ तनुमध्यमहावक्षः पद्मनाभ नमोऽस्तु ते । विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ! ॥ ८ ॥ नमस्ते पीतवसन ! स्फुरन्मकर-कुण्डल ! । स्फुरत्किरीटकेयूरहारकौस्तुभभूषण ! ॥९॥ पञ्चायुध ! नमस्तेऽस्तु नमस्ते पञ्चकालिक ! । पञ्चकालाय ते क्रान्तयोगक्षेमावह प्रभो ! ॥ १० ॥ नित्यज्ञानबलै-श्वर्यभोगोपकरणाच्युत ! । नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ! ॥११॥ जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते । त्वं च स्वामी गुरुर्माता पिता च मम माधव ! ॥१२॥ अपि त्वां भगवन् ब्रह्मशिवशक्रमहर्षयः । द्रष्टुं यष्टुमभिष्टोतुमद्यापीश नहीशिरे ॥१३॥ तापत्रयमहाग्राहभीषणे भवसागरे । मज्जतां नाथ ! नौरेषा प्रणतिस्तु

त्वदर्पिता ॥१४॥ अनाथाय जगन्नाथ शरण्याशरणार्थिने । प्रसीद सीदते मह्यं सुहृते भक्तवत्सल । ॥१५॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । तत् क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ॥१६॥ सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत । । किङ्करोऽस्मि हृषीकेश । भूयो भूयोऽस्मि किङ्करः ॥ १७ ॥ एकत्रिचतुरत्यन्तचेष्टज्येष्ठाकृतिस्थिते । व्यक्तषाड्गुण्यचेष्टाय चतुरात्मात्मने नमः ॥१८॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे तृतीयोऽध्यायः समाप्त ॥ जितन्ते पुण्डरीकाक्ष पूर्णषाड्गुण्यविग्रह । नमस्तेऽस्तु हृषीकेश ! महापुरुषपूर्वज ॥१॥ देवाना दानवानां च सामान्यमधिदैवतम् । सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥२॥ एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा । अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥३॥ संसारसागरं घोरमनन्तक्लेशभाजनम् । त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥४॥ न ते रूपं न चाऽऽकारो नाऽऽयुधानि न चाऽऽस्पदम् । तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥५॥ नैव किञ्चित् परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् । नैव किञ्चिदसाध्यं ते न चाऽसिद्धोऽसि कर्हिचित् ॥ ६ ॥ कार्याणां कारणं पूर्वं वचसा वाच्यमुत्तमम् । योगिनां परमां सिद्धिं परमन्ते पदं विदुः ॥७॥ अहं भीतोऽस्मि देवेश । संसारेऽस्मिन भयावहे । पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥८॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाऽच्युत ! शरीरे च गतौ चाऽस्य वर्तते मे महद्भयम् ॥ ९ ॥ त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि । निमित्तं कुशलस्याऽस्ति येन गच्छामि सद्गतिम् ॥१०॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् । जन्मान्तरेऽपि देवेश ! माभूदस्य परिक्षयः ॥११॥ दुर्गतावपि जातायां त्वद्गतो मे मनोरथः । यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥ १२ ॥ न कामकलुषं चित्तं मम ते पादयोः स्थितम् । कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ॥१३॥ अज्ञानाद्यदि वा ज्ञानादशुभं यत् कृतं मया । क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ॥१४॥ सर्वेषु देशकालेषु सर्वावस्थासु चाऽच्युत ! । किङ्करोऽस्मि हृषीकेश ! भूयोभूयोऽस्मि किङ्करः ॥ १५ ॥ इत्येवमनया स्तुत्या स्तुत्वा देवं दिनोदये । किङ्करोऽस्मीति चात्मानं देवाय विनिवेदयेत् ॥१६॥ यथाऽपराधं कृतवानज्ञानात्पुरुषो-

त्तम ! । अज्ञस्य मम देवेश ! तत्सर्वं क्षन्तुमर्हसि ॥१७॥ अहङ्कारार्थकामेषु प्रीतिरद्यैव नश्यतु । त्वां प्रसन्नस्य मे सैव वर्द्धतां श्रीमति त्वयि ॥१८॥ काऽहमत्यन्तदुर्बुद्धिः क नु चात्महितेक्षणम् । यद्धितं मम देवेश ! तदाज्ञापय माधव ! ॥१६॥ सोऽहं ते देवदेवेश नार्ऽचनादौ स्तुतौ न च । सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥ २० ॥ उपचारापदेशेन क्रियतेऽहर्निशं मया । अपचारानिमान् सर्वान्क्षमस्व पुरुषोत्तम ! ॥२१॥ न जाने कर्म यत् किञ्चिन्नाऽपि लौकिकवैदिकौ । न निषेधविधी विष्णो ! तव दासोऽस्मि केवलम् ॥२२॥ स त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो ! कृपां परमकारुणिकः किल त्वम् । संसारसागरनिमग्नमनन्तदीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ २३ ॥ इति श्रीपञ्चरात्रागमे जितन्तेस्तोत्रे चतुर्थोऽध्यायः सम्पूर्णः ॥

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ! । नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥ नमस्ते वासुदेवाय शान्तानन्तचिदात्मने । अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥ २ ॥ महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ! । सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥ ३ ॥ सहस्रबाहवे तुभ्यं सहस्रनयनाय ते । अमूर्त्तये नमस्तुभ्यमेकमूर्त्ताय ते नमः ॥ ४ ॥ अनेकमूर्त्तये तुभ्यमक्षराय च ते नमः । व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥५॥ चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्त्तये । अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥६॥ वरिष्ठाय वसिष्ठाय कनिष्ठाय नमो नमः । नेदिष्ठाय दविष्ठाय क्षेपिष्ठाय च ते नमः ॥ ७ ॥ पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिणे नमः । कलाषोडशरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ८ ॥ नमस्ते गुणरूपाय गुणरूपानुवर्तिने । व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥ ६ ॥ लोकयात्राप्रसिद्ध्यर्थं सृष्टब्रह्मादिरूपिणे । नमस्तुभ्यं नृसिंहादिमूर्त्तिभेदाय विष्णवे ॥१०॥ आदिमध्यान्तशून्याय तद्वते च नमो नमः । प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ ११ ॥ विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः । नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥ १२ ॥ नित्यासाधारणानेकलोकरक्षापरिच्छदे । सच्चिदानन्दरूपाय वरेण्याय नमो नमः ॥ १३ ॥ यजमानाय यज्ञाय यष्टव्याय नमो नमः । नित्यकालात्मने

तुभ्यं नमः स्वाध्यायशालिने ॥ १४ ॥ नमः परमहंसाय नमः सत्त्वगुणाय ते। स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥ १५ ॥ हरिर्देहभृतामात्मा परप्रकृतिरीश्वरः। त्वत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥ १६ ॥ संसारसागरे घोरे विषयावर्त्तसङ्कुले। अपारे दुस्तरेऽगाधे वर्त्तेऽहं कर्मभिः स्वकैः ॥ १७ ॥ अनाथमगतिं भीरुं दयया परया हरे।। मामुद्धर दयासिन्धो संसाराब्धेः सुदुस्तरात् ॥ १८ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्। तत् क्षन्तव्यं प्रपन्नानामपराधमहो ह्यसि ॥ १९ ॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे। अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ २० ॥ जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते। त्वं च स्वामी गुरुर्माता पिता च मम माधव। ॥२१॥ नाऽहं हित्वा प्रजानामि त्वा भजाम्येव केवलम्। बुद्ध्यैवं मम गोविन्द मुक्त्युपायेन मां हरे ॥२२॥ त्वा विना नान्यः प्रियो मे नेदं नेदमितीति च। बुद्धिं नीतिं च मे देहि येन त्वामुपयाम्यहम ॥२३॥ इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि। कुर्यात्पञ्चमहायज्ञानपि गृह्योक्तकर्मणा ॥२४॥ इत्यादिममये तस्य कथितः कमलासनः। वेदाना सारमुद्धृत्य सर्वागमसमृद्धये ॥ २५ ॥

॥ इति श्रीपञ्चरात्रागमे महोपनिषदि ब्रह्मतन्त्रे श्रीमदष्टाक्षरकल्पे जितन्ते-स्तोत्रे पञ्चमोऽध्यायः समाप्तः ॥

---

## विप्रपत्नीकृतं कृष्णस्तोत्रम्

विप्रपत्न्य ऊचुः। त्वं ब्रह्म परमं धाम निरीहो निरहङ्कृतिः। निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥ १ ॥ साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः। प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥ २ ॥ सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः। ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ३ ॥ यस्य लोम्ना च

विवरे निखिलं विश्वमीश्वर ! । महाविराणमहाविष्णुस्त्वं तस्य जनको विभो ॥ ४ ॥ तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः । वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ५ ॥ महदादिसृष्टिसूत्रं पञ्चतन्मात्रमेव च । वीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ६ ॥ सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा । त्वमनीहः स्वयञ्ज्योतिः सर्वानन्दः सनातनः ॥ ७ ॥ अहो आकारहीनस्त्वं सर्वविग्रहवानपि । सर्वेन्द्रियणां विषयं जानासि नेन्द्रियी भवान् ॥ ८ ॥ सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे । जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम् ॥ ९ ॥ पार्वती कमला राधा सावित्री वेदसूरपि । वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥१०॥ वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर ! । प्रसन्नो भव नो देव दीनवन्धो कृपां कुरु ॥ ११ ॥ इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ १२ ॥ विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नाऽत्र संशयः ॥ १३ ॥

॥ इति श्रीब्रह्मवैवर्त्त महापुराणे कृष्णजन्मखण्डे विप्रपत्नीकृतं कृष्णस्तोत्रं सम्पूर्णम् ॥

---

## श्रीकृष्णलहरीस्तोत्रम्

कदा वृन्दारण्ये विपुलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम् । अहो कृष्ण स्वामिन् मधुरमुरलीमोहन विभो प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥ कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितततैः स्मरन्गोपीनाथं कमलनयनं सस्मितमुखम् । अहो पूर्णानन्दाम्बुजवदन ! भक्तैकललन प्रसीदेति क्रोशन्० ॥ २ ॥ कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः कुतश्चित्सम्प्राप्तं किमपि लसितं गोपललनम् अये राधे ! किं वा हरसि रसिके कञ्चुकयुगं प्रसीदेति क्रोशन्० ३ ॥ कदाचिद्गोपीनां हसितचितस्निग्धनयनं स्थितं गोपीवृन्दे नटमिव नटन्तं

मुललितम्। सुराधीशैः सर्वैः स्तुतपदमिदं श्रीहरिमिति प्रसीदेति क्रोशन्० ॥ ४ ॥ कदाचित्सच्छायाश्रितमभिमहान्तं यदुपति समाधिस्वच्छायाञ्चल इव विलोलैकमकरम्। अये भक्तोदाराम्बुजवदन नन्दस्य तनय प्रसीदेति क्रोशन्० ॥ ५ ॥ कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं स्मयन्तं साकूतं हृतवसनगोपीसुतपदम्। अहो शक्रानन्दाम्बुजवदन गोवर्धनधर प्रसीदेति क्रोशन्० ॥ ६ ॥ कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं वदन्तं पार्थेति नृपसुतसखे बन्धुरिति च। भ्रमन्तं विश्रान्तं श्रितमुरलिमास्यं हरिममी प्रसीदेति क्रोशन्० ॥ ७ ॥ कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशमहो विष्णो योगिन् रसिकमुरलीमोहन विभो!। दयां कर्तुं दीने परमकरुणाब्धे। समुचितं प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८ ॥

॥ इति श्रीवासुदेवानन्दसरस्वतीविरचितं श्रीकृष्णलहरीस्तोत्रं सम्पूर्णम् ॥

---

# श्रीकृष्णद्वादशनामस्तोत्रम्

श्रीकृष्ण उवाच। किं ते नामसहस्रेण विज्ञातेन तवाऽर्जुन!। तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ॥ १ ॥ प्रथमं तु हरिं विन्द्याद्द्वितीयं केशवं तथा। तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥ २ ॥ पञ्चमं वेदगर्भं तु षष्ठं च मधुसूदनम्। सप्तमं वासुदेवं च वराहं चाष्टमं तथा ॥ ३ ॥ नवमं पुण्डरीकाक्षं दशमं हि जनार्दनम्। कृष्णमेकादशं विन्द्याद्द्वादशं श्रीधरं तथा ॥ ४ ॥ द्वादशैतानि नामानि विष्णुप्रोक्तान्यनेकशः। सायम्प्रातः पठेन्नित्यं तस्य पुण्यफलं शृणु ॥ ५ ॥ चान्द्रायणसहस्राणि कन्यादानशतानि च। अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ॥ ६ ॥ अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः। प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥ इति श्रीमन्महाभारते अरण्यपर्वणि श्रीकृष्णद्वादशनामस्तोत्रं सम्पूर्णम् ॥

---

# श्रीगोपालाष्टकम्

यस्माद्विश्वं जातमिदं चित्रमतर्क्यं यस्मिन्नानन्दात्मनि नित्यं रमते वै। यत्रान्ते संयाति लयं चैतदशेषं तं गोपालं सन्ततकालं प्रति वन्दे ॥ १ ॥ यस्याज्ञानाज्जन्मजरारोगकदम्बं ज्ञाते यस्मिन्नश्यति तत्सर्वमिहाशु। गत्वा यत्रा याति पुनर्नो भवभूमिं तं गोपालं सन्ततकालं प्रति वन्दे ॥२॥ तिष्ठन्नन्तर्यो यमयत्येतदजस्रं यं कश्चिन्नो वेद जनोऽप्यात्मनि सन्तम्। सर्वं यस्येदं च वशे तिष्ठति विश्वं तं गोपालं सन्ततकालं प्रति वन्दे ॥ ३ ॥ धर्मोऽधर्मेणेह तिरस्कारमुपैति काले यस्मिन्मत्स्यमुखैश्चारुचरित्रैः। नानारूपैः पाति तदा योऽत्रनिविम्बं तं गोपालं सन्ततकालं प्रति वन्दे ॥४॥ प्राणायामैर्ध्वस्तसमस्तेन्द्रियदोषा रुद्ध्वा चित्तं यं हृदि पश्यन्ति समाधौ। ज्योतीरूपं योगिजना मोदनिमग्नास्तं गोपालं सन्ततकालं प्रति वन्दे ॥ ५ ॥ भानुश्चन्द्रश्चोडुगणश्चैव हुताशो यस्मिन्नैवाभाति तडिच्चापि कदापि यद्भासा चाभाति समस्तं जगदेतत्तं गोपालं सन्ततकालं प्रति वन्दे ॥ ६ ॥ सत्यज्ञानं मोदमवोचुर्निगमा यं यो ब्रह्मेन्द्राद्यादित्यगिरीशार्चितपादः। शेतेऽनन्तोऽनन्ततनावम्बुनिधौ यस्तं गोपालं सन्ततकालं प्रति वन्दे ॥ ७ ॥ शैवाः प्राहुर्यं शिवमन्ये गणनाथं शक्तिं चैकेऽर्कं च तथाऽन्ये मतिभेदात्। नानाकारैरर्भाति य एकोऽखिलशक्तिस्तं गोपालं सन्ततकालं प्रति वन्दे ॥ ८ ॥ श्रीमद्गोपालाष्टकमेतत् समधीते भक्त्या नित्यं यो मनुजो वै स्थिरचेताः। हित्वा तूर्णं पापकलापं स समेति पुण्यं विष्णोर्धाम यतो नैव निपातः ॥ ९ ॥

॥ इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं श्रीगोपालाष्टकं सम्पूर्णम् ॥

---

# सत्यव्रतोक्तदामोदरस्तोत्रम्

सिन्धुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः। विरक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम् ॥ १ ॥ वृन्दावने स्थितः कृष्णमाराराध दिवानिशम्। निःस्वः सत्यव्रतो विप्रो निर्जनेऽव्यग्रमानसः ॥ २ ॥ कार्तिके पूजयामास प्रीत्या दामोदरं नृप ! तृतीयेऽह्नि सकृद्भुङ्क्ते पत्रं मूलं फलं तथा ॥ ३ ॥ एवं भावसमायुक्तो भक्त्या तद्गतमानसः। पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम् ॥ ४ ॥ सत्यव्रत उवाच। नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानम्। यशोदाभियोलूखले धावमानं परामृष्टमत्यन्ततो द्रुतगोप्या ॥ ५ ॥ रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं कराम्भोजयुग्मेन सातङ्कनेत्रम्। मुहुः श्वासकं पत्रिरेखाङ्ककण्ठं स्थितं नौमि दामोदरं भक्तवन्द्यम् ॥ ६ ॥ वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह। इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः ॥ ७ ॥ इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं कुन्तलैः स्निग्धवक्त्रैश्च गोप्या। मुहुश्चुम्बितं बिम्बरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः ॥ ८ ॥ नमो देव दामोदरानन्त विष्णो प्रसीद प्रभो दुःखजालाब्धिमग्नम्। कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम् ॥ ९ ॥ कुवेरात्मजौ वृक्षमूर्ती च यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च। तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥१०॥ नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरःस्थविश्वस्य धाम्ने नमस्ते। नमो राधिकायै त्वदीयप्रियायै नमोऽनन्तलीलाय देवाय तुभ्यम् ॥११॥ नारद उवाच। सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः। विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥ १२ ॥

॥ दामोदरस्तोत्रं सम्पूर्णम् ॥

## श्रीकृष्णशरणाष्टकम्

सर्वसाधनहीनस्य पराधीनस्य सर्वतः। पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम ॥ १ ॥ संसारसुखसम्प्राप्तिसन्मुखस्य विशेषतः। वहिर्मुखस्य सततं श्रीकृष्णः शरणं मम ॥ २ ॥ सदा विषयकामस्य देहारामस्य सर्वथा। दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ॥ ३ ॥ संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः। लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ॥ ४ ॥ विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः। स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ॥५॥ संसारसिन्धुमग्नस्य भग्नभावस्य दुष्कृतेः। दुर्भावलग्नमनसः श्रीकृष्णः शरणं मम ॥ ६ ॥ विवेकधैर्यभक्त्यादिरहितस्य निरन्तरम्। विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ॥ ७ ॥ एतदष्टकपाठेन ह्येतदुक्तार्थभावनात्। निजाचार्यपदाम्भोजसेवकोऽदैन्यमाप्नुयात् ॥ ८ ॥

॥ इति श्रीकृष्णशरणाष्टकं सम्पूर्णम् ॥

---

## विट्ठलहृदयस्तोत्रम्

श्रीपार्वत्युवाच। महाशम्भो देवदेव भक्तानुग्रहकारक। श्रीविट्ठलाख्यं हृदयं तन्मे ब्रूहि सदाशिव ॥ १ ॥ श्रीशङ्कर उवाच। शृणु देवि महादेवि पार्वति प्राणवल्लभे। गुह्याद्गुह्यतरं श्रेष्ठं नास्ति गुह्यमतः परम् ॥ २ ॥ जीवस्य जीवनं साक्षात्प्राणिनां प्राण उच्यते। योगिनां हि महागम्यं पाण्डुरङ्गाभिधानकम् ॥ ३ ॥ अद्याऽपि महिमा तस्य सर्वथा ज्ञायते न हि। नित्यनूतनतत्क्षेत्रस्योपमा नास्ति निश्चितम् ॥ ४ ॥ मुखं कञ्जेन तुलितं पद्मपत्रसमेक्षणम्। कथं साम्यं भवेद्देवि ह्यन्तरं महदन्तरम् ॥ ५ ॥ गजैरावतयोश्चैव अश्वोच्चैःश्रवसोस्तथा। स्पर्शपाषाणयोश्चैव

# सत्यव्रतोक्तदामोदरस्तोत्रम्

सिन्धुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः। विरक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम् ॥ १ ॥ वृन्दावने स्थितः कृष्णमारिराध दिवानिशम्। निःस्वः सत्यव्रतो विप्रो निर्जनेऽप्यप्रमानमः ॥ २ ॥ कार्तिके पूजयामास प्रीत्या दामोदरं नृप !। तृतीयेऽह्नि सकृद्भुङ्क्ते पत्रं मूलं फलं तथा ॥ ३ ॥ एवं भावसमायुक्तो भक्त्या तद्गतमानसः। पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम् ॥ ४ ॥ सत्यव्रत उवाच। नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानम्। यशोदाभियोलूखले धावमानं परामृष्टमत्यन्ततो द्रुतगोप्या ॥ ५ ॥ रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं कराम्भोजयुग्मेन सातङ्कनेत्रम्। मुहुः श्वासकं पत्रिरेखाङ्ककण्ठं स्थितं नौमि दामोदरं भक्तवन्द्यम् ॥ ६ ॥ वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह। इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः ॥ ७ ॥ इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं कुन्तलैः स्निग्धवक्त्रैश्च गोप्या। मुहुश्चुम्बितं बिम्बरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः ॥ ८ ॥ नमो देव दामोदरानन्त विष्णो प्रसीद प्रभो दुःखजालाब्धिमग्नम्। कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम् ॥ ९ ॥ कुबेरात्मजौ वृक्षमूर्ती च यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च। तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥१०॥ नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरःस्थविश्वस्य धाम्ने नमस्ते। नमो राधिकायै त्वदीयप्रियायै नमोऽनन्तलीलाय देवाय तुभ्यम् ॥११॥ नारद उवाच। सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः। विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥ १२ ॥

॥ श्रीसत्यव्रतकृतं दामोदरस्तोत्रं सम्पूर्णम् ॥

## श्रीकृष्णशरणाष्टकम्

सर्वसाधनहीनस्य पराधीनस्य सर्वतः। पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम ॥ १ ॥ संसारसुखसम्प्राप्तिसन्मुखस्य विशेषतः। बहिर्मुखस्य सततं श्रीकृष्णः शरणं मम ॥ २ ॥ सदा विषयकामस्य देहारामस्य सर्वथा। दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ॥ ३ ॥ संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः। लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ॥ ४ ॥ विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः। स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ॥५॥ संसारसिन्धुमग्नस्य भग्नभावस्य दुष्कृतेः। दुर्भावलग्नमनसः श्रीकृष्णः शरणं मम ॥ ६ ॥ विवेकधैर्यभक्त्यादिरहितस्य निरन्तरम्। विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ॥ ७ ॥ एतदष्टकपाठेन ह्येतदुक्तार्थभावनात्। निजाचार्यपदाम्भोजसेवकोऽदैन्यमाप्नुयात् ॥ ८ ॥

॥ इति श्रीकृष्णशरणाष्टकं सम्पूर्णम् ॥

---

## विट्ठलहृदयस्तोत्रम्

श्रीपार्वत्युवाच। महाशम्भो देवदेव भक्तानुग्रहकारक। श्रीविट्ठलाख्यं हृदयं तन्मे ब्रूहि सदाशिव ॥ १ ॥ श्रीशङ्कर उवाच। शृणु देवि महादेवि पार्वति प्राणवल्लभे। गुह्याद्गुह्यतरं श्रेष्ठं नास्ति गुह्यमतः परम् ॥ २ ॥ जीवस्य जीवनं साक्षात्प्राणिनां प्राण उच्यते। योगिनां हि महागम्यं पाण्डुरङ्गाभिधानकम् ॥ ३ ॥ अद्याऽपि महिमा तस्य सर्वथा ज्ञायते न हि। नित्यनूतनतत्क्षेत्रस्योपमा नास्ति निश्चितम् ॥ ४ ॥ मुखं कञ्जेन तुलितं पद्मपत्रसमेक्षणम्। कथं साम्यं भवेद्देवि ह्यन्तरं महदन्तरम् ॥ ५ ॥ गजैरावतयोश्चैव अश्वोच्चैःश्रवसोस्तथा। स्पर्शपाषाणयोश्चैव

ह्यन्तरं महदन्तरम् ॥६॥ काश्याः शतगुणं श्रेष्ठं द्वारवत्या द्विलक्षयोः । एवं सर्वाणि तीर्थानि कला नार्हन्ति कानिचित् ॥ ७ ॥ तीर्थं क्षेत्रं दैवतं च मन्त्रः स्तोत्रं महाद्भुतम् । एतत्सर्वं यथाशक्त्या वर्णयामि मम प्रिये । ॥८॥ एकदा क्षीरसंस्थाने देवदेवं जगद्गुरुम् । गतोऽहं पादपूजार्थं सुरेन्द्रब्राह्मणैः सह ॥ ६ ॥ शेषनारदपक्षीन्द्रैर्लक्ष्मीकान्तं गणैः सह । प्रणम्य परमात्मानं तमुवाच चतुर्मुखः ॥१०॥ ब्रह्मोवाच । महाविष्णो जगन्नाथ सर्वविश्वगुहाशय । तव यच्च प्रियं देव । संस्थानं ब्रूहि केशव ॥११॥ श्रीभगवानुवाच । शृणु ब्रह्मन महाशम्भो अधिष्ठानं ममालयम् । पाण्डुरङ्गमिति ख्यातं न साम्यं भुवनत्रये ॥ १२ ॥ पाण्डुरङ्गं च वैकुण्ठं तुलयित्वा मयाऽधुना । पाण्डुरङ्गं गुरुं मत्वा पूर्णत्वेनास्थितोऽस्म्यहम ॥ १३ ॥ नाऽहं तिष्ठामि क्षीराब्धौ नाऽस्मि सूर्येन्दुमण्डले । मन्नामकीर्तनस्थाने तत्र तिष्ठामि शङ्कर । ॥ १४ ॥ कार्यकारणकर्तृत्वे सम्भवक्षेत्रमुच्यते । तादृशं नास्ति तत्क्षेत्रं यत्र तिष्ठामि सर्वदा ॥१५॥ सुखे सञ्जयति ब्रह्म ब्रह्मबीजं प्रशस्यते । बीजेन व्यज्यते बिन्दुर्बिन्दोर्नादः प्रकीर्तितः ॥ १६ ॥ आहतोऽनाहतश्चेति द्विधा नादस्तु विद्यते । ॐकारोऽनाहतो मूर्त्तिराहतो नामकीर्त्तनम ॥१७॥ बिन्दुनादात्मकं क्षेत्रं नादोऽव्यक्तः प्रदृश्यते । यत्र सङ्कीर्तनेनैव साक्षाद्ब्रह्ममयो भवेत् ॥ १८ ॥ कीदृशं धृतवान् रूपमित्याह परमेश्वरः । इष्टिकायां समपदं तत्त्वमस्यादिलक्षणम् ॥१९॥ कटिविन्यस्तहस्ताब्जं प्रणवाकृतिसौरमम् । ऊर्ध्वबीजसमाख्यातं पूर्णेन्दुमुखमण्डनम ॥२०॥ सर्वभूषणशोभाढ्यमीदृशं मोक्षदं नृणाम् । अज्ञानजनबोधार्थं तिष्ठामीह जनार्दनः ॥२१॥ विठ्ठलः परमो देवस्त्रयीरूपेण तिष्ठति । तीर्थं क्षेत्रं तथा देवो ब्रह्म ब्रह्मविदांवरः ॥ २२ ॥ गुह्याद्गुह्यतरं देवं क्षेत्राणां क्षेत्रमुत्तमम् । चन्द्रभागावरं तीर्थं न भूतं न भविष्यति ॥२३॥ इति श्रुत्वा रमेशस्य वचनं परमामृतम् । ब्रह्मा नारदसंयुक्तो हृदयं कीर्तयन् ययौ ॥ २४ ॥ इदं विठ्ठलहृदयं सर्वदारिद्र्यनाशनम् । सकृत्पठनमात्रेण लभते परमं पदम् ॥२५॥ ओऽमस्य हृदयमन्त्रस्य परब्रह्म ऋषिः स्मृतः । छन्दोऽनुष्टुप् प्रविख्यातो श्रीविठ्ठलो महः ॥२६॥ ॐ नमो बीजमाख्यातं श्री पातु शक्तिरीडिता । ॐ श्री

क्लीं कीलकं यस्य वेधको देवविट्ठलः ॥ २७ ॥ त्रिबीजैरङ्गुलिन्यासः षडङ्गानि ततः परम् । ध्यानादिकं महादिव्यं हृदये स्मरेत् ॥२८॥

ॐ अस्य श्रीविट्ठलहृदयस्तोत्रमन्त्रस्य परब्रह्मऋषिः अनुष्टुप्छन्दः । श्रीविट्ठलः परमात्मा देवता । ॐ नम इति बीजम् । ॐ श्रीं शक्तिः । ॐ श्रीं क्लीं कीलकम् । ॐ श्रीं विट्ठलो वेधकः । श्रीविट्ठलप्रीत्यर्थं जपे विनियोगः । ॐ श्रीं क्लीं अङ्गुल्यादिषडङ्गन्यासः ।

अथ ध्यानम् । ॐ श्रीं क्लीं प्रहसितमुखचन्द्रं प्रोल्लसत्पूर्णविम्वं प्रणमदभयहस्तं चारुनीलाम्बुदाभम् । समपदकमनीयं तत्त्ववोधावगम्यं सदयवरददेवं विट्ठलं तं नमामि ॥ २९ ॥ क्लीं श्रीं ॐ ॐ श्रीं क्लीम् । पाण्डुरङ्गः शिखां पातु मूर्धानं पातु विट्ठलः । मस्तकं माधवः पातु तिलकं पातु श्रीकरः ॥ ३० ॥ भर्गः पातु भ्रुवोर्मध्ये लोचने विष्णुरोजसा । दृष्टिं सुदर्शनः पातु श्रोत्रे पातु दिगम्बरः ॥ ३१ ॥ नासाग्रं सृष्टिसौन्दर्य ओष्ठौ पातु सुधार्णवः । दन्तान् दयानिधिः पातु जिह्वां मे वेदवल्लभः ॥३२॥ तालुदेशं हरिः पातु रसनां गोरसप्रियः । चिवुकं चिन्मयः पातु ग्रीवां मे गरुडध्वजः ॥ ३३ ॥ कण्ठं तु कम्बुकण्ठश्च स्कन्धौ पातु महावलः । भुजौ गिरिधरः पातु वाहू मे मधुसूदनः ॥३४॥ कूर्परौ कृपयाविष्टः करौ मे कमलापतिः । अङ्गुलीरच्युतः पातु नखानि नरकेसरी ॥ ३५ ॥ वक्षः श्रीलाञ्छनः पातु स्तनौ मे स्तनलालसः । हृदयं श्रीहृषीकेश उदरं परमामृतः ॥३६॥ नाभिं मे पद्मनाभश्च कुक्षिं ब्रह्माण्डनायकः । कटिं पातु कटिकरो जघनं तु जनार्दनः ॥३७॥ शिश्नं पातु स्मराधीशो वृषणे वृषभः पतिः । गुह्यं गुह्यतरः पातु ऊरू पातूरुविक्रमः ॥ ३८ ॥ जानू पातु जगन्नाथो जङ्घे मे मनमोहनः । गुल्फौ पातु गणाधीशः पादौ पातु त्रिविक्रमः ॥३९॥ शरीरं चाऽखिलं पातु नरनारायणो हरिः । अग्रे ह्यग्रतरः पातु दक्षिणे दक्षकप्रियः ॥ ४० ॥ पृष्ठे पुष्टिकरः पातु वामे मे वासवप्रभुः । पूर्वे पूर्वापरः पातु आग्नेय्यां चाग्निरक्षकः ॥ ४१ ॥ दक्षिणे दीक्षितार्थश्च नैर्ऋत्यामृतुनायकः । पश्चिमे वरुणाधीशो वायव्ये वातजापतिः ॥४२॥ उत्तरे धृतखड्गश्च ईशान्ये पातु ईश्वरः । उपरिष्टात्तु भगवानन्तरिक्षे चिदम्बरः ॥४३॥ भूतले धरणीनाथः पाताले कूर्मनायकः ।

नमस्तुभ्यमहम्ब्रह्मात्मने नमः ॥ ८५ ॥ नमो नमो नमस्तुभ्यं नमस्तेऽस्तु नमो नमः। ह्रीं श्रीं ॐ। आद्यन्ते सम्पटीकृत्य बीजैश्च प्राणवल्लभे ॥८६॥ अष्टोत्तरशतं मन्त्रान् हृदयं नमनैः सह। अनन्यैः कीर्त्तितं यैश्च तेषामाज्ञा वहाम्यहम् ॥८७॥ यावान्यस्य यथा भावो यन्नामन्यासपूर्वकम्। तावदेव हि विज्ञानं गदितं मदनुग्रहात् ॥ ८८ ॥ श्रीशङ्कर उवाच। इत्युक्तं वासुदेवोक्तं गोप्याद्गोप्यतरं महत्। नित्यं सङ्कीर्तनं यस्य प्राप्तमुक्तिर्न संशयः ॥८९॥ इदं गुह्यं हि हृदयं विट्ठलस्य महाद्भुतम्। शृणुयाच्छ्रद्धया युक्तो वैकुण्ठे लभते रतिम् ॥९०॥ एवमुक्त्वा महादेवः पार्वतीमनुकम्पया। समाधिस्थोऽभवच्छम्भुः सुस्मितः कमलाननः ॥ ९१ ॥

॥ इति श्रीभविष्योत्तरपुराणे पाण्डुरङ्गमाहात्म्ये श्रीविट्ठलहृदयस्तोत्रं सम्पूर्णम् ॥

---

## विट्ठलकवचम्

सूत उवाच। शिरो मे विट्ठलः पातु कपोलं मुद्गरप्रियः। नेत्रयोर्विष्णुरूपी च वैकुण्ठो घ्राणमेव च ॥ १ ॥ मुनिसेव्यो मुखं पातु दन्तपङ्क्तिं सुरेश्वरः। विद्याधीशस्तु मे जिह्वां कण्ठं विश्वेशवन्दितः ॥ २ ॥ व्यापको हृदयं पातु स्कन्धौ पातु सुखप्रदः। भुजौ मे नृहरिः पातु करौ च सुरनायकः ॥ ३ ॥ मध्यं पातु सुराधीशो नाभिं पातु सुरालयः। सुरवन्द्यः कटी पातु जानुनी कमलासनः ॥ ४ ॥ जङ्घे पातु हृषीकेशः पादौ पातु त्रिविक्रमः। निखिलं च शरीरं मे पातां गोविन्दमाधवौ ॥ ५ ॥ अकारो व्यापको विष्णुरक्षरात्मक एव च। पावकः सर्वपापानामकाराय नमो नमः ॥ ६ ॥ तारकः सर्वभूतानां धर्मशास्त्रेषु गीयते। पुनातु विश्वभुवनं तोङ्काराय नमो नमः ॥ ७ ॥ मूलप्रकृतिरूपा या महामाया च वैष्णवी। तस्या बीजेन संयुक्तयकाराय नमो नमः ॥ ८ ॥ वैकुण्ठाधिपतिः साक्षाद्वैकुण्ठपददायकः। वैजयन्तीसमायुक्तो विकाराय नमो नमः ॥ ९ ॥ स्नातः सर्वेषु तीर्थेषु पतो यज्ञा-

दिक्कर्मसु। पावनो द्विजपङ्क्तीनां ठकाराय नमो नमः ॥१०॥ वाहनं गरुडो यस्य भुजङ्गः शयनं तथा। वामभागे च लक्ष्मीश्च लकाराय नमो नमः ॥११॥ नारदादि-समायुक्तं वैष्णवं परमं पदम्। लभते मानवो नित्यं वैष्णवं धर्ममाश्रितः ॥ १२ ॥ व्याधयो विलयं यान्ति पूर्वकर्मसमुद्भवाः। भूतानि च पलायन्ते मन्त्रोपासकदर्श-नात् ॥ १३ ॥ इदं षडक्षरस्तोत्रं यो जपेच्छ्रद्धयान्वितः। विष्णोः सायुज्यमाप्नोति सत्यं सत्यं न संशयः ॥ १४ ॥

॥ इति श्रीपद्मपुराणे सूतशौनकसम्वादे श्रीविठ्ठलकवचं सम्पूर्णम् ॥

---

## श्रीविठ्ठलाष्टोत्तरशतनामस्तोत्रम्

श्रुत्वा नामसहस्रं श्रीविठ्ठलस्य गुणान्वितम्। पार्वती परिपप्रच्छ शङ्करं लोक-शङ्करम् ॥ १ ॥ श्रीपार्वत्युवाच। देवदेव महादेव देवानुग्रहविग्रह !। अष्टोत्तरशतं नाम्नां तस्य देवस्य मे वद ॥ २ ॥ जनः कलिमलादिग्धोऽलसः कामाविलो जडः। पाठाद्यस्य सकृद्वापि सौशील्यादियुतो भवेत् ॥ ३ ॥ तदहं श्रोतुमिच्छामि तवा-ज्ञानं न विद्यते। सूत उवाच। इत्युक्तो भार्यया शम्भुः संस्मरन् पुरुषोत्तमम् ॥ ४ ॥ कटिस्थितकरद्वन्द्वं जगाद नगपुत्रिकाम्। शङ्कर उवाच। देवि लोकोपकाराय कृतः प्रश्नस्त्वयानघे !॥५॥ हिताय सर्वजन्तूनां नाम्नामष्टोत्तरं शतम्। श्रीविठ्ठलस्य देवस्य वाग्मिसिद्धिप्रदं नृणाम् ॥ ६ ॥ अष्टोत्तरशतस्याहमृषिः प्रोक्तो मनीषिभिः। छन्दो-ऽनुष्टुब् देवता श्रीविठ्ठलः परिकीर्त्तितः ॥ ७ ॥ ध्यानम्। ध्यायेच्छ्रीविठ्ठलाख्यं सम-पदकमलं पद्मपत्रायताक्षं गम्भीरस्निग्धहासं कटिनिहितकरं नीलमेघावभासम्। विद्युद्वासो वसानं मणिमयमुकुटं कुण्डलोद्भासिगण्डं मायूरस्रग्विभूषाभयवरसहितं कौस्तुभोद्भासिताङ्गम् ॥ ८ ॥ ॐ क्लीम्। विठ्ठलः पुण्डरीकाक्षः पुण्डरीकनिभेक्षणः। पुण्डरीकाश्रमपदः पुण्डरीकजलाप्लुतः ॥ ९ ॥ पुण्डरीकक्षेत्रवासः पुण्डरीकवरप्रदः।

शारदाधिष्ठितद्वारः शारदेन्दुनिभाननः ॥ १० ॥ नारदाधिष्ठितद्वारो नारदेशप्रपूजितः । भुवनाधीश्वरीद्वारो भुवनाधीश्वरीश्वरः ॥११॥ दुर्गाश्रितोत्तरद्वारो दुर्गमागमसम्भृतः । क्षुद्रपेशीपिनद्धोरुगोपेष्ट्याश्लिष्टजानुकः ॥ १२ ॥ कटिस्थितकरद्वन्द्वो वरदाभयमुद्रितः । श्वेतातोरणपालस्थत्रिविक्रम इतीरितः ॥१३॥ तितउक्षेत्रपोऽश्वत्थकोटीश्वरवरप्रदः । स एव करवीरस्थो नारीनारायणीति च ॥१४॥ नीरासङ्गमसंस्थश्च सैकतः प्रतिमार्चितः । वेणुनादेन देवानां मनःश्रवणमङ्गल ॥ १५ ॥ देवकन्याकोटिकोटिनीराजितपदाम्बुजः। पद्मतीर्थस्थितोऽश्वत्थो नरो नारायणो महान् ॥१६॥ चन्द्रभागासरोनीरकेलिलोलदिगम्बरः। ससध्रीचीत्सवीपूर्चीरितिश्रुत्यर्थरूपधृक् ॥१७॥ ज्योतिर्मयक्षेत्रवासी सर्वोत्कृष्टत्रयात्मकः । स्वकुण्डलप्रतिष्ठाता पञ्चायुधजलप्रियः ॥ १८ ॥ क्षेत्रपालाग्रपूजार्थी पार्वतीपतिपूजितः । चतुर्मुखस्तुतो विष्णुर्जगन्मोहनरूपधृक् ॥ १९ ॥ मन्त्राक्षरावलीहृत्स्थकौस्तुभोरःस्थलप्रियः । स्वमन्त्रोज्जीवितजनः सर्वकीर्त्तनवल्लभः ॥२०॥ वासुदेवो दयासिन्धुर्गोगोपीपरिवारितः । युधिष्ठिरहृतारातिर्मुक्तकेशी वरप्रदः ॥२१॥ बलदेवोपदेष्टा च रुक्मिणीपुत्रनायकः । गुरुपुत्रप्रदो नित्यमहिमा भक्तवत्सलः ॥२२॥ भक्तारिहा महादेवो भक्ताभिलषितप्रदः । सव्यसाची ब्रह्मविद्यागुरुर्मोहापकारकः ॥२३॥ भीममार्गप्रदाता च भीमसेनमतानुगः । गन्धर्वानुग्रहकरो ह्यपराधसहो हरिः ॥ २४ ॥ स्वप्नदर्शी स्वप्नदृश्यो भक्तदुःस्वप्नशान्तिकृत् । आपत्कालनुपेक्षी चानपेक्षोऽपेक्षितो जनैः ॥२५॥ सत्योपयाचनः सत्यसङ्गः सत्याभितारकः । सत्याजानी रमाजानी राधाजानी रथाङ्गभाक् ॥ २६ ॥ सिञ्चनः क्रीडनो गोपैर्दधिदुग्धापहारकः । बोधिन्युत्सवयुक् तीर्थ. शयन्युत्सवभूमिभाक् ॥२७॥ मार्गशीर्षोत्सवाक्रान्तवेणुनादपदाङ्कभूः । दध्यन्नव्यञ्जनाभोक्ता दधिभुक्कामपूरकः ॥ २८ ॥ बिलान्तर्धानसक्केलिलोलुपो गोपवल्लभः । सखिनेत्रे पिधायाऽऽशु कोऽहंपृच्छाविशारदः ॥२९॥ समासमप्रश्नपूर्वमुष्टिमुष्टिप्रदर्शिकः । कुटिलीलासु कुशलः कुटिलालकमण्डितः ॥ ३० ॥ सारीलीलानुसारी च बाहक्रीडापरः सदा । कार्णाटकीरतिरतो मङ्गलोपवनस्थितः ॥ ३१ ॥ माध्याह्नतीर्थपूरेक्षाविस्मायितज-

गत्रयः। निवारितक्षेत्रविघ्नो दुष्टदुर्बुद्धिभञ्जनः ॥३२॥ वालुकावृक्षपाषाणपशुपक्षि-प्रतिष्ठितः। आशुतोषो भक्तवशः पाण्डुरङ्गः सुपावनः ॥३३॥ पुण्यकीर्त्तिः परम्ब्रह्म ब्रह्मण्यः कृष्ण एव च। अष्टोत्तरशतं नाम्नां विठ्ठलस्य महात्मनः ॥ ३४ ॥ इति ते कथितं देवि! पवित्रं मङ्गलं महत्। त्रिकालमेककालं वा यः पठेन्नियतः शुचिः ॥३५॥ करस्थाः सिद्धयस्तस्य सत्यं सत्यं वदाम्यहम्। अपुत्रो बहुपुत्रः स्यादविद्यः सर्वविद्यते ॥ ३६ ॥ निर्धनो धनदो नूनं भवेदस्य निषेवणात्। अविनाभूतभार्यश्च जितारातिर्निरामयः ॥ ३७ ॥ बहुनोक्तेन किं देवि हरिवल्लभताभियात्। सूत उवाच। श्रुत्वा तन्महदाश्चर्यमष्टोत्तरशतं परम् ॥ ३८ ॥ पुनः पुनः प्रणम्येशं पार्वती वाक्यमब्रवीत्। पार्वत्युवाच। तत्क्षेत्रवसतिश्चैव तत्तीर्थस्यावगाहनम् ॥ ३९ ॥ तन्मूर्त्तिदर्शनं चैव तन्नामावलिकीर्त्तनम्। देहि मे सर्वदा स्वामिन्नेकाग्रमनसा विभो! ॥४०॥ श्रीशङ्कर उवाच। तदस्तु तव देवेशि ममाप्येतन्मनीषितम्। इत्युक्त्वा प्रययौ तस्य निवासं परमादरात् ॥ ४१ ॥

॥ इति श्रीपद्मपुराणे पञ्चोनषष्टिसाहस्र्यां संहितायां हररहस्ये उमामहेश्वर-सम्वादे विठ्ठलनामाष्टोत्तरशतं सम्पूर्णम् ॥

---

## पाण्डुरङ्गाष्टकम्

महायोगपीठे तटे भीमरथ्यां वरं पुण्डरीकाय दातुं मुनीन्द्रैः समागत्य तिष्ठन्तमानन्दकन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ १ ॥ तडिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशम्। वरं त्विष्टिकायां समन्यस्तपादं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ २ ॥ प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां धृतो येन तस्मात्। विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ३ ॥ स्फुरत्कौस्तुभालङ्कृतं कण्ठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम्। शिवं शान्तमीड्यं

वरं लोकपालं परब्रह्मरूपं भजे पाण्डुरङ्गम् ॥ ४ ॥ शरच्चन्द्रबिम्बाननं चारुहासं लसत्कुण्डलाक्रान्तगण्डस्थलागम्। जपारागबिम्बाधरं कञ्जनेत्रं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ५ ॥ किरीटोज्ज्वलत्सर्वदिक्प्रान्तभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः। त्रिभङ्गाकृतिं बर्हमाल्यावतंसं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ६ ॥ विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम्। गवां वृन्दकानन्ददं चारुहासं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ७ ॥ अजं रुक्मिणीप्राणसञ्जीवनं तं परं धाम कैवल्यमेकं तुरीयम्। प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ८ ॥ स्तवं पाण्डुरङ्गस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम्। भवाम्भोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥ ९ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं पाण्डुरङ्गाष्टकं सम्पूर्णम् ॥

---

## श्रीरामचन्द्रस्तुतिः

नमामि भक्तवत्सलं कृपालुशीलकोमलं भजामि ते पदाम्बुजं अकामिनां स्वधामदम्। निकामश्यामसुन्दरं भवाम्बुनाथमन्दरं प्रफुल्लकञ्जलोचनं मदादिदोषमोचनम् ॥ १ ॥ प्रलम्बबाहुविक्रमं प्रभोऽप्रमेयवैभवं निषङ्गचापसायकं धरं त्रिलोकनायकम्। दिनेशवंशमण्डनं महेशचापखण्डनं मुनीन्द्रसन्तरञ्जनं सुरारिवृन्दभञ्जनम् ॥ २ ॥ मनोजवैरिवन्दितं अजादिदेवसेवितं विशुद्धबोधविग्रहं समस्तदूषणापहम्। नमामि इन्दिरापतिं सुखाकरं सतां गतिं भजे सशक्तिसानुजं शचीपतिप्रियानुजम् ॥ ३ ॥ त्वदङ्घ्रिमूल ये नरा भजन्ति हीनमत्सराः पतन्ति नो भवार्णवे वितर्कवीचिसङ्कुले। विविक्तवासिनः सदा भजन्ति मुक्तये मुदा निरस्य इन्द्रियादिकं प्रयान्ति ते गतिं स्वकाम् ॥ ४ ॥ त्वमेकमद्भुतं प्रभुं निरीहमीश्वरं विभुं जगद्गुरुं च शाश्वतं तुरीयमेव केवलम्। भजामि भाववल्लभं कुयोगिनां सुदुर्लभं स्वभक्तकल्प-

पादपं समस्तसेव्यमन्वहम् ॥ ५ ॥ अनूपरूपभूपतिं नतोऽहमुर्विजापतिं प्रसीद मे नमामि ते पदाब्जभक्ति देहि मे । पठन्ति ये स्तवं इदं नरादरेण ते पदं व्रजन्ति नाऽत्र संशयस्त्वदीयभावसंयुतम् ॥ ६ ॥

॥ इति श्रीमद्गोस्वामितुलसीदासकृता श्रीरामचन्द्रस्तुतिः सम्पूर्णा ॥

---

## श्रीराममङ्गलाशासनम्

मङ्गलं कोशलेन्द्राय महनीयगुणाब्धये । चक्रवर्त्तितनूजाय सार्वभौमाय मङ्गलम् ॥ १ ॥ वेदवेदान्तवेद्याय मेघश्यामलमूर्त्तये । पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ २ ॥ विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः । भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ३ ॥ पितृभक्ताय सततं भ्रातृभिः सह सीतया । नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ४ ॥ त्यक्तसाकेतवासाय चित्रकूटविहारिणे । सेव्याय सर्वयमिनां धीरोदयाय मङ्गलम् ॥ ५ ॥ सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ६ ॥ दण्डकारण्यवासाय खरदूषणशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायाऽस्तु मङ्गलम् ॥ ७ ॥ सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ ८ ॥ हनुमत्सममेताय हरीशाभीष्टदायिने । बालिप्रमथनायाऽस्तु महाधीराय मङ्गलम् ॥ ९ ॥ श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १० ॥ विभीषणकृते प्रीत्या लङ्काभीष्टप्रदायिने । सर्वलोकशरण्याय श्रीराघवाय मङ्गलम् ॥ ११ ॥ आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १२ ॥ ब्रह्मादिदेवसेव्याय ब्रह्मण्याय महात्मने । जानकीप्राणनाथाय रघुनाथाय मङ्गलम् ॥१३॥ श्रीसौम्यजामातृमुनेः कृपयास्मानुपेयुषे । महते मम नाथाय रघुनाथाय मङ्गलम् ॥१४॥ मङ्गलाशासन-

परैर्मन्नाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायाऽस्तु मङ्गलम् ॥१५॥ रम्यजा-मातृमुनिना मङ्गलाशासनं कृतम् । त्रैलोक्याधिपतिः श्रीमान् करोतु मङ्गलं सदा ।१६।

॥ इति श्रीवरवरमुनिस्वामिकृतं श्रीराममङ्गलाशासनं सम्पूर्णम् ॥

---

# श्रीरामप्रेमाष्टकम्

श्यामाम्बुदाभमरविन्दविशालनेत्रं बन्धूकपुष्पसदृशाधरपाणिपादम् । सीतासहायमुदितं धृतचापबाणं रामं नमामि शिरसा रमणीयवेषम् ॥ १ ॥ पटुजलधरधीरध्वानमादाय चापं पवनदमनमेकं बाणमाकृष्य तूणात् । अभयवचनदायी सानुजः सर्वतो मे रणहतदनुजेन्द्रो रामचन्द्रः सहायः ॥ २ ॥ दशरथकुलदीपोऽमेयबाहुप्रतापो दशवदनसकोपः क्षालिताशेषपापः । कृतसुररिपुतापो नन्दितानेकभूपो विगततिमिरपङ्को रामचन्द्रः सहायः ॥ ३ ॥ कुवलयदलनीलः कामितार्थप्रदो मे कृतमुनिजनरक्षो रक्षसामेकहन्ता । अपहृतदुरितोऽसौ नाममात्रेण पुंसामखिलसुरनृपेन्द्रो रामचन्द्रः सहायः ॥ ४ ॥ असुरकुलकृशानुर्मानसाम्भोजभानुः सुरनरनिकराणामग्रणीर्मे रघूणाम् । अगणितगुणसीमा नीलमेघौघधामा शमदमितमुनीन्द्रो रामचन्द्रः सहायः ॥ ५ ॥ कुशिकतनययागं रक्षिता लक्ष्मणाढ्यः पवनशरनिकायक्षिप्तमारीचमायः । विदलितहरचापो मेदिनीनन्दनाया नयनकुमुदचन्द्रो रामचन्द्रः सहायः ॥ ६ ॥ पवनतनयहस्तन्यस्तपादाम्बुजात्मा कलशभववचोभिः प्राप्तमाहेन्द्रधन्वा । अपरिमितशरौघैः पूर्णतूणीरधीरो लघुनिहतकपीन्द्रो रामचन्द्रः सहायः ॥ ७ ॥ कनकविमलकान्त्या सीतयालिङ्गिताङ्गो मुनिमनुजवरेण्यः सर्ववागीशवन्द्यः । स्वजननिकरबन्धुर्लीलया बद्धसेतुः सुरमनुजकपीन्द्रो रामचन्द्रः सहायः ॥ ८ ॥ यामुनाचार्यकृतं दिव्यं रामाष्टकमिदं शुभम् । यः पठेत् प्रयतो भूत्वा स श्रीरामान्तिकं व्रजेत् ॥९॥ इति श्रीयामुनाचार्यकृतं श्रीरामप्रेमाष्टकं सम्पूर्णम् ॥

# गोविन्दाष्टकम्

चिदानन्दाकारं श्रुतिसरससारं समरसं निराधाराधारं भवजलधिपारं परगुणम्। रमाग्रीवाहारं व्रजवनविहारं हरनुतं सदा तं गोविन्दं परमसुखकन्दं भजत रे ॥ १ ॥ महाम्भोधिस्थानं स्थिरचरनिदानं दिविजपं सुधाधारापानं विहगपतियानं यमरतम्। मनोज्ञं सुज्ञानं मुनिजननिधानं ध्रुवपदं सदा० ॥ २ ॥ धिया धीरैर्ध्येयं श्रवणपुटपेयं यतिवरैर्महावाक्यैर्ज्ञेयं त्रिभुवनविधेयं विधिपरम्। मनोमानामेयं सपदि हृदि नेयं नवतनुं सदा० ॥ ३ ॥ महामायाजालं विमलवनमालं मलहरं सुभालं गोपालं निहतशिशुपालं शशिमुखम्। कलातीतं कालं गतिहतमरालं मुररिपुं सदा० ॥ ४ ॥ नभोबिम्बस्फीतं निगमगणगीतं समगतिं सुरौघैः सम्प्रीतं दितिजविपरीतं पुरिशयम्। गिरां मार्गातीतं स्वदितनवनीतं नयकरं सदा० ॥ ५ ॥ परेशं पद्मेशं शिवकमलजेशं शिवकरं द्विजेशं देवेशं तनुकुटिलकेशं कलिहरम्। खगेशं नागेशं निखिलभुवनेशं नगधरं सदा० ॥ ६ ॥ रमाकान्तं कान्तं भवमयभयान्तं भवसुखं दुराशान्तं शान्तं निखिलहृदि भान्तं भुवनपम्। विवादान्तं दान्तं दनुजनिचयान्तं सुचरितं सदा० ॥ ७ ॥ जगज्ज्येष्ठं श्रेष्ठं सुरपतिकनिष्ठं क्रतुपतिं बलिष्ठं भूयिष्ठं त्रिभुवनवरिष्ठं वरवहम्। स्वनिष्ठं धर्मिष्ठं गुरुगुणगरिष्ठं गुरुवरं सदा० ॥ ८ ॥ गदापाणेरेतद्दुरितदलनं दुःखशमनं विशुद्धात्मा स्तोत्रं पठति मनुजो यस्तु सततम्। स भुक्त्वा भोगौघं चिरमिह ततोऽपास्तवृजिनः परं विष्णोः स्थानं व्रजति खलु वैकुण्ठभुवनम् ॥ ९ ॥

॥ इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं गोविन्दाष्टकं सम्पूर्णम् ॥

---

# श्रीगोविन्दाष्टकम्

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं गोष्ठप्राङ्गणरिङ्गणलोलमनायासं परमायासम्। मायाकल्पितनानाकारमनाकारं भुवनाकारं क्ष्माया नाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसन्त्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम्। लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥ २ ॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम्। वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥ गोपालं भूलीलाविग्रहगोपालं कुलगोपालं गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम्। गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं गोपीगोचरदूरं प्रणमत गोविन्दं परमानन्दम् ॥ ४ ॥ गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं शश्वद्गोखुरनिर्धूतोद्गतधूलीधूसरसौभाग्यम्। श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥ ५ ॥ स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं व्यादित्सन्तीरथ दिग्वस्त्रा ह्युपदातुमुपाकर्षन्तम्। निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्थं सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥ ६ ॥ कान्तं कारणकारणमादिमनादिं कालमनाभासं कालिन्दीगतकालियशिरसि मुहुर्नृत्यन्तं नृत्यन्तम्। कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराध्यं वन्देऽहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम्। वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥८॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो गोविन्दाच्युत माधव विष्णो गोकु-

लानायक कृष्णेति। गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो गोविन्दं परमानन्दामृतमन्तःस्थं स समभ्येति ॥ ६ ॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं श्रीगोविन्दाष्टकं सम्पूर्णम् ॥

---

## श्रीकृष्णाष्टकम्

भजे व्रजैकमण्डनं समस्तपापखण्डनं स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्। सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥ १ ॥
मनोजगर्वमोचनं विशाललोललोचनं विधूतगोपशोचनं नमामि पद्मलोचनम्। करारविन्दभूधरं स्मितावलोकसुन्दरं महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥ २ ॥
कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम्। यशोदया समोदया सगोपया सनन्दया युतं सुखैकदायकं नमामि गोपनायकम् ॥ ३ ॥
सदैव पादपङ्कजं मदीयमानसे निजं दधानमुत्तमालकं नमामि नन्दबालकम्। समस्तदोषशोषणं समस्तलोकपोषणं समस्तगोपमानसं नमामि नन्दलालसम् ॥ ४ ॥
भुवो भरावतारकं भवाब्धिकर्णधारकं यशोमतीकिशोरकं नमामि चित्तचोरकम्। दृगन्तकान्तभङ्गिनं सदासदालसङ्गिनं दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥ ५ ॥ गुणाकरं सुखाकरं कृपाकरं कृपापरं सुरद्विषन्निकन्दनं नमामि गोपनन्दनम्। नवीनगोपनागरं नवीनकेलिलम्पटं नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥ ६ ॥ समस्तगोपनन्दनं हृदम्बुजैकमोदनं नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम्। निकामकामदायकं दृगन्तचारुसायकं रसालवेणुगायकं नमामि कुञ्जनायकम् ॥ ७ ॥ विदग्धगोपिकामनोमनोज्ञतल्पशायिनं नमामि कुञ्जकानने प्रवृद्धवह्निपायिनम्। यदा तदा यथा तथा तथैव कृष्णसत्कथा मया सदैव गीयतां तथा कृपा विधीयताम्। प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान् भवेत्स नन्दनन्दने भवे भवे सुभक्तिमान् ॥ ८ ॥ इति श्रीमच्छङ्कराचार्यकृतं श्रीकृष्णाष्टकं सम्पूर्णम् ॥

# भीष्मकृता श्रीभगवत्स्तुतिः

भीष्म उवाच । इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि । स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ १ ॥ त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने । वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ २ ॥ युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये । मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३ ॥ सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य । स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममाऽस्तु ॥ ४ ॥ व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या । कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ५ ॥ स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः । धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥६॥ शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे । प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ७ ॥ विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये । भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम् ॥ ८ ॥ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः । कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्किल यस्य गोपवध्वः ॥ ९ ॥ मुनिगणनृपवर्यसङ्कुलेऽन्तःसदसि युधिष्ठिरराजसूय एषाम् । अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥ १० ॥ तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् । प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥ ११ ॥

॥ इति श्रीमद्भागवते महापुराणे प्रथमस्कन्धे नवमेऽध्याये भीष्मकृता भगवत्स्तुतिः सम्पूर्णा ॥

# गोविन्ददामोदरस्तोत्रम्

अग्रे कुरूणामथ पाण्डवानां दुःशासनेनाऽऽहृतवस्त्रकेशा। कृष्णा तदाक्रोशदनन्यनाथा गोविन्द दामोदर माधवेति ॥ १ ॥ श्रीकृष्ण विष्णो मधुकैटभारे भक्तानुकम्पिन् भगवन् मुरारे। त्रायस्व मां केशव लोकनाथ गोविन्द दामोदर माधवेति ॥ २ ॥ विक्रेतुकामाखिलगोपकन्या मुरारिपादार्पितचित्तवृत्तिः। दध्यादिकं मोहवशादवोचद् गोविन्द दामोदर माधवेति ॥ ३ ॥ उलूखले सम्भृततण्डुलांश्च सङ्घट्टयन्त्यो मुसलैः प्रमुग्धाः। गायन्ति गोप्यो जनितानुरागा गोविन्द दामोदर माधवेति ॥ ४ ॥ काचित्कराम्भोजपुटे निषण्णं क्रीडाशुकं किंशुकरक्ततुण्डम्। अध्यापयामास सरोरुहाक्षी गोविन्द दामोदर माधवेति ॥ ५ ॥ गृहे गृहे गोपवधूसमूहः प्रतिक्षणं पिञ्जरसारिकाणाम्। स्खलद्गिरं वाचयितुं प्रवृत्तो गोविन्द दामोदर माधवेति ॥ ६ ॥ पर्य्यङ्किकाभाजमलं कुमारं प्रस्वापयन्त्योऽखिलगोपकन्याः। जगुः प्रबन्धं स्वरतालबन्धं गोविन्द दामोदर माधवेति ॥ ७ ॥ रामानुजं वीक्षणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम्। आबालकं बालकमाजुहाव गोविन्द दामोदर माधवेति ॥ ८ ॥ विचित्रवर्णाभरणाभिरामेऽभिधेहि वक्त्राम्बुजराजहंसि। सदा मदीये रसनेऽग्ररङ्गे गोविन्द दामोदर माधवेति ॥ ९ ॥ अङ्काधिरूढं शिशुगोपगूढं स्तनंधयन्तं कमलैककान्तम्। सम्बोधयामास मुदा यशोदा गोविन्द दामोदर माधवेति ॥ १० ॥ क्रीडन्तमन्तर्व्रजमात्मजं स्वं समं वयस्यैः पशुपालबालैः। प्रेम्णा यशोदा प्रजुहाव कृष्णं गोविन्द दामोदर माधवेति ॥ ११ ॥ यशोदया गाढमुलूखलेन गोकण्ठपाशेन निबध्यमानः। रुरोद मन्दं नवनीतभोजी गोविन्द दामोदर माधवेति ॥ १२ ॥ निजाङ्गणे कङ्कणकेलिलोलं गोपी गृहीत्वा नवनीतगोलम्। आमर्दयत्पाणितलेन नेत्रे गोविन्द दामोदर माधवेति ॥ १३ ॥ गृहे गृहे गोपवधूकदम्बाः सर्वे मिलित्वा समवाययोगे। पुण्यानि नामानि पठन्ति

नित्यं गोविन्द दामोदर माधवेति ॥ १४ ॥ मन्दारमूले वदनाभिरामं बिम्बाधरे पूरितवेणुनादम् । गोगोपगोपीजनमध्यसंस्थं गोविन्द दामोदर माधवेति ॥ १५ ॥ उत्थाय गोप्योऽपररात्रभागे स्मृत्वा यशोदासुतबालकेलिम् । गायन्ति प्रोच्चैर्दधि मन्थयन्त्यो गोविन्द दामोदर माधवेति ॥ १६ ॥ जग्धोऽथ दत्तो नवनीतपिण्डो गृहे यशोदा विचिकित्सयन्ती । उवाच सत्यं वद हे मुरारे गोविन्द दामोदर माधवेति ॥१७॥ अभ्यर्च्य गेहं युवतिः प्रवृद्धप्रेमप्रवाहा दधि निर्ममन्थ । गायन्ति गोप्योऽथ सखीसमेता गोविन्द दामोदर माधवेति ॥ १८ ॥ कचित् प्रभाते दधि-पूर्णपात्रे निक्षिप्य मन्थं युवती मुकुन्दम् । आलोक्य गानं विविधं करोति गोविन्द दामोदर माधवेति ॥१९॥ क्रीडापरं भोजनमज्जनार्थं हितैषिणी स्त्री तनुजं यशोदा । आजूहवत् प्रेमपरिप्लुताक्षी गोविन्द दामोदर माधवेति ॥ २० ॥ सुखं शयानं निलये च विष्णुं देवर्षिमुख्या मुनयः प्रपन्नाः । तेनाच्युते तन्मयता व्रजन्ति गोविन्द दामोदर माधवेति ॥ २१ ॥ विहायनिद्रामरुणोदये च विधाय कृत्यानि च विप्र-मुख्याः । वेदावसाने प्रपठन्ति नित्यं गोविन्द दामोदर माधवेति ॥ २२ ॥ वृन्दा-वने गोपगणाश्च गोप्यो विलोक्य गोविन्द वियोगखिन्नाम् । राधा जगुः साश्रु-विलोचनाभ्यां गोविन्द दामोदर माधवेति ॥ २३ ॥ प्रभातसञ्चारगता नु गाव-स्तद्रक्षणार्थं तनयं यशोदा । प्राबोधयत् पाणितलेन मन्दं गोविन्द दामोदर माध-वेति ॥ २४ ॥ प्रवालशोभा इव दीर्घकेशा वाताम्बुपर्णाशनपूतदेहाः । मूले तरूणां मुनयः पठन्ति गोविन्द० ॥ २५ ॥ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्ण-विषक्तमानसाः । विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द० ॥२६॥ गोपी कदा-चिन्मणिपिञ्जरस्थं शुकं वचो वाचयितुं प्रवृत्ता । आनन्दकन्द व्रजचन्द्र कृष्ण गोविन्द० ॥२७॥ गोवत्सबालैः शिशुकाकपक्षं बध्नन्तमम्भोजदलायताक्षम् । उवाच माता चिबुकं गृहीत्वा गोविन्द० ॥ २८ ॥ प्रभातकाले वरवल्लवौघा गोर-क्षणार्थं धृतवेत्रदण्डाः । आकारयामासुरनन्तमाद्यं गोविन्द० ॥२९॥ जलाशये कालि-यमर्दनाय यदा कदम्बादपतन्मुरारिः । गोपाङ्गनाश्चुक्रुशुरेत्य गोपा गोविन्द० ॥३०॥

अक्रूरमासाद्य यदा मुकुन्दश्चापोत्सवार्थं मथुरां प्रविष्टः। तदा स पौरैर्जयतीत्यभापि गोविन्द दामोदर माधवेति ॥ ३१ ॥ कंसस्य दूतेन यदैव नीतो वृन्दावनान्ताद् वसुदेवसूनूः। रुरोद गोपी भवनस्य मध्ये गोविन्द० ॥३२॥ सरोवरे कालियनागवद्धं शिशुं यशोदातनयं निशम्य। चक्रुर्लुठन्त्यः पथि गोपबाला गोविन्द० ॥ ३३ ॥ अक्रूरयाने यदुवंशनाथं सङ्गच्छमानं मथुरां निरीक्ष्य। ऊचुर्वियोगात् किल गोपबाला गोविन्द० ॥३४॥ चक्रन्द गोपी नलिनीवनान्ते कृष्णेन हीना कुसुमे शयाना। प्रफुल्लनीलोत्पललोचनाभ्यां गोविन्द० ॥ ३५ ॥ मातापितृभ्यां परिवार्यमाणा गेहं प्रविष्टा विललाप गोपी। आगत्य मां पालय विश्वनाथ गोविन्द० ॥३६॥ वृन्दावनस्थं हरिमाशु बुद्ध्वा गोपी गता कापि वनं निशायाम्। तत्राप्यदृष्ट्वाऽतिभयादवोचद् गोविन्द० ॥३७॥ सुखं शयाना निलये निजेऽपि नामानि विष्णोः प्रवदन्ति मर्त्याः। ते निश्चितं तन्मयतां व्रजन्ति गोविन्द० ॥३८॥ सा नीरजाक्षीमवलोक्य राधां रुरोद गोविन्दवियोगखिन्नाम्। सखी प्रफुल्लोत्पललोचनाभ्यां गोविन्द० ॥३९॥ जिह्वे रसज्ञे मधुरप्रिया त्वं सत्यं हितं त्वां परमं वदामि। आवर्णयेथा मधुराक्षराणि गोविन्द० ॥ ४० ॥ आत्यन्तिकव्याधिहरं जनानां चिकित्सकं वेदविदो वदन्ति। संसारतापत्रयनाशबीजं गोविन्द० ॥४१॥ ताताज्ञया गच्छति रामचन्द्रे सलक्ष्मणेऽरण्यचये ससीते। चक्रन्द रामस्य निजा जनित्री गोविन्द० ॥४२॥ एकाकिनी दण्डककाननान्तात् सा नीयमाना दशकन्धरेण। सीता तदाऽक्रन्ददनन्यनाथा गोविन्द० ॥४३॥ रामाद्वियुक्ता जनकात्मजा सा विचिन्तयन्ती हृदि रामरूपम्। रुरोद सीता रघुनाथ पाहि गोविन्द० ॥ ४४ ॥ प्रसीद विष्णो रघुवंशनाथ सुरासुराणां सुखदुःखहेतो। रुरोद सीता तु समुद्रमध्ये गोविन्द० ॥ ४५ ॥ अन्तर्जले ग्राह गृहीतपादो विसृष्टविक्लिष्टसमस्तबन्धुः। तदा गजेन्द्रो नितरां जगाद गोविन्द० ॥ ४६ ॥ हंसध्वजः शङ्खयुतो ददर्श पुत्रं कटाहे प्रपतन्तमेनम्। पुण्यानि नामानि हरेर्जपन्तं गोविन्द० ॥४७॥ दुर्वाससो वाक्यमुपेत्य कृष्णा सा चाब्रवीत् काननवासिनीशम्। अन्तःप्रविष्टं मनसाजुहाव गोविन्द० ॥४८॥ ध्येयः सदा योगिभि-

रप्रमेयश्चिन्नाशिकान्वितपारिजात । कस्तूरिकाकलिपतनीलवर्णो गोविन्द० ॥४९॥ संसारकूपे पतितोऽप्यगाधे मोहान्धपूर्णे विषयाभितप्ते । करावलम्बं मम देहि विष्णो गोविन्द० ॥५०॥ त्वामेव याचे मम देहि जिह्वे समागते दण्डधरे कृतान्ते । वक्तव्यमेवं मधुरं सुभक्त्या गोविन्द० ॥ ५१ ॥ भजस्व मन्त्रं भवबन्धमुक्त्यै जिह्वे रसज्ञे सुलभं मनोज्ञम् । द्वैपायनाद्यैर्मुनिभिः प्रजप्तं गोविन्द० ॥ ५२ ॥ गोपाल वंशीधर रूपसिन्धो लोकेश नारायण दीनबन्धो । उच्चस्वरैस्त्वं वद सर्वदैव गोविन्द० ॥५३॥ जिह्वे सदैवं भज सुन्दराणि नामानि कृष्णस्य मनोहराणि । समस्तभक्तार्तिविनाशनानि गोविन्द० ॥५४॥ गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द मुकुन्द कृष्ण । गोविन्द गोविन्द रथाङ्गपाणे गोविन्द० ॥५५॥ सुखावसाने त्विदमेव सारं दुःखावसाने त्विदमेव गेयम् । देहावसाने त्विदमेव जाप्यं गोविन्द० ॥ ५६ ॥ दुर्वारवाक्यं परिगृह्य कृष्णा मृगीव भीता तु कथं कथञ्चित् । सभां प्रविष्टा मनस्माजुहाव गोविन्द० ॥ ५७ ॥ श्रीकृष्ण राधावर गोकुलेश गोपाल गोवर्धन नाथ विष्णो । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ५८ ॥ श्रीनाथ विश्वेश्वर विश्वमूर्त्ते श्रीदेवकीनन्दन दैत्यशत्रो । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ५९ ॥ गोपीपते कंसरिपो मुकुन्द लक्ष्मीपते केशव वासुदेव । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६० ॥ गोपीजनाह्लादकर व्रजेश गोचारणारण्यकृतप्रवेश । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६१ ॥ प्राणेश विश्वम्भर कैटभारे वैकुण्ठ नारायण चक्रपाणे । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६२ ॥ हरे मुरारे मधुसूदनाद्य श्रीराम सीतावर रावणारे । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६३ ॥ श्रीयादवेन्द्राद्रिधराम्बुजाक्ष गोगोपगोपीसुखदानदक्ष । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६४ ॥ धराभरोत्तारणगोपवेष विहारलीलाकृतबन्धुशेष । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६५॥ बकीबकाघासुरधेनुकारे केशीतृणावर्तविघातदक्ष । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६६ ॥ श्रीजानकीजीवन रामचन्द्र निशाचरारे भरताग्रजेश । जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६७ ॥ नारायणानन्त हरे

नृसिंह प्रह्लादबाधाहर हे कृपालो। जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ६८ ॥ लीलामनुष्याकृतिरामरूप प्रतापदासीकृतसर्वभूप। जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥६९॥ श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव। जिह्वे पिबस्वामृतमेतदेव गोविन्द० ॥ ७० ॥ वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनाभिमुख्यम्। जिह्वे पिबस्वामृतमेतदेव गोविन्द दामोदर माधवेति ॥ ७१ ॥

॥ इति श्रीबिल्वमङ्गलाचार्यविरचितं श्रीगोविन्ददामोदरस्तोत्रं सम्पूर्णम् ॥

---

# श्रीप्रपन्नगीतम्

( पञ्चमस्वरमेकतालं भजनम्, विहागरागेण गीयते )

परमसख श्रीकृष्ण भयङ्करभवार्णवेऽव्यय विनिमग्नम्।
मामुद्धर ते श्रीकरलालितचरणकमलपरिधौ लग्नम् ॥
( ध्रुवपदम् )

गुणमृगतृष्णाचलितधियं विषयार्थसमुत्सुकदशकरणम्। परिभूतं दुर्मतिनरनिकरैर्मतिभ्रमार्जितगुणशरणम् ॥ सततं सभयमनो निवहन्तं षड्रिपुभिर्निखिलेड्यगुरुम्। कालिन्दीहृदयप्रियविष्णोश्चरणकमलरजसो विधुरम् ॥ मनःशोकमतिमोहक्षतयेऽभिकाङ्क्षन्तमजमुरुपद्मम्। मामुद्धर ते श्रीकरलालितचरणकमलपरिधौ लग्नम् ॥ १ ॥ कालिन्दीरुक्मिणीराधिकासत्याजाम्बवतीसुहृदम्। निजशरणागतभक्तजनेभ्यः कृपया गतभवभयवरदम् ॥ गोपीजनवल्लभरासेश्वरगोवर्धनधरमधुमथनम्। वन्देऽहं निखिलाधिपतिं त्वामतिशयसुन्दरगुणभवनम् ॥ कृष्णलालजीद्विजाधिपं हे मनोऽनिशं त्वं भज यज्ञम्। मामुद्धर ते श्रीकरलालितचरणकमलापरिधौ लग्नम् ॥ २ ॥

॥ इति श्रीकृष्णलालद्विजविरचितायां गीताभजनसप्तशत्यां प्रपन्नगीतं सम्पूर्णम् ॥

## श्रीकृष्णः शरणं मम

श्रीकृष्ण एव शरणं मम श्रीकृष्ण एव शरणम् ॥

( ध्रुवपदम् )

गुणमय्येषा न यत्र माया न च जनुरपि मरणम्। यद्यतयः पश्यन्ति समाधौ परममुदाभरणम् ॥ १ ॥ यद्धेतोर्निवहन्ति बुधा ये जगति सदाचरणम्। सर्वापद्भ्यो विहितं सहसा येन समुद्धरणम् ॥ २ ॥ भगवति यत्सन्मतिमुद्वहतां हृदयतमोहरणम्। हरिपरमा यद्व्रजन्ति सततं निषेव्य गुरुचरणम् ॥ ३ ॥ असुरकुलक्षतये कृतममरैर्यस्य सदादरणम्। भुवनतरुं धत्ते यन्निखिलं विविधविषयपर्णम् ॥४॥ अवाप्य यद्भूयोऽच्युतभक्ता न यान्ति संसरणम्। कृष्णलालजीद्विजस्य भूयात्तदघहरस्मरणम् ॥ ५ ॥

॥ इति श्रीकृष्णलालजीद्विजविरचितं श्रीकृष्णः शरणं ममनामकस्तोत्रं समाप्तम् ॥

---

## मधुराष्टकम्

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम्। हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥ वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम्। चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥ वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ। नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥ गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम्। रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥ करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम्। वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥ गुञ्जा

मधुरा माला मधुरा यमुना मधुरा वीची मधुरा। सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥ गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम्। दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥ गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा। दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥

॥ इति श्रीमद्वल्लभाचार्यकृतं मधुराष्टकं सम्पूर्णम् ॥

---

# श्रीनन्दकुमाराष्टकम्

सुन्दरगोपालं उरवनमालं नयनविशालं दुःखहरम्। वृन्दावनचन्द्रमानन्दकन्दं परमानन्दं धरणिधरम् ॥ वल्लभघनश्यामं पूरणकामं अत्यभिरामं प्रीतिकरम्। भज नन्दकुमारं सर्वसुखसारं तत्त्वविचारं ब्रह्मपरम् ॥ १ ॥ सुन्दरवारिजवदनं निर्जितमदनम् आनन्दसदनं मुकुटधरम्। गुञ्जाकृतिहारं विपिनविहारं परमोदारं चीरहरम्। वल्लभपटपीतं कृतउपवीतं करनवनीतं विबुधवरम्। भज० ॥ २ ॥ शोभितमुखधूलं यमुनाकूलं निपटअतूलं सुखदतरम्। मुखमण्डितरेणुं चारितधेनुं वादितवेणुं मधुरसुरम् ॥ वल्लभमतिविमलं शुभपदकमलं नखरुचिअमलं तिमिरहरम्। भज० ॥ ३ ॥ शिरमुकुटसुदेशं कुञ्चितकेशं नटवरवेशं कामवरम्। मायाकृतमनुजं हलधरअनुजं प्रतिहतदनुजं भारहरम् ॥ वल्लभव्रजपालं सुभगसुचालं हितमनुकालं भावपरम्। भज० ॥ ४ ॥ इन्दीवरभासं प्रकटसुरासं कुसुमविकासं वंशिधरम्। हृतमन्मथमानं रूपनिधानं कृतकलगानं चित्तहरम् ॥ वल्लभमृदुहासं कुञ्जनिवासं विविधविलासं केलिकरम्। भज० ॥ ५ ॥ अतिपरप्रवीणं पालितदीनं भक्ताधीनं कर्मकरम्। मोहनमतिधीरं फणिवलवीरं हतपरवीरं तरलतरम् ॥ वल्लभव्रजरमणं वारिजवदनं हलधरशमनं शैलधरम्। भज० ॥ ६ ॥ जलधरद्युति-

अङ्गं ललितत्रिभङ्गं बहुकृतरङ्गं रसिकवरम्। गोकुलपरिवारं मदनाकरं कुञ्ज-विहारं गूढतरम्॥ वल्लभव्रजचन्द्रं सुभगसुछन्दं कृतआनन्दं भ्रान्तिहरम्। भज० ॥ ७॥ वन्दितयुगचरण पावनकरण जगदुद्धरण विमलधरम्। कालियशिरगमनं कृतफणिनमनं घातितयमनं मृदुलतरम्॥ वल्लभदुःखहरण निर्मलचरण अशरण-शरण मुक्तिकरम्। भज नन्दकुमारं सर्वसुखसारं सत्त्वविचारं ब्रह्मपरम्॥ ८॥*

॥ इति श्रीमहाप्रभुवल्लभाचार्यविरचितं श्रीनन्दकुमाराष्टकं सम्पूर्णम्॥

---

## चतुःश्लोकी

सदा सर्वात्मभावेन भजनीयो व्रजेश्वरः। करिष्यति स एवास्मदैहिकं पारलौकिकम्॥ १॥ अन्याश्रयो न कर्तव्यः सर्वथा बाधकस्तु सः। स्वकीये स्वात्मभावश्च कर्तव्यः सर्वथा सदा॥ २॥ सदा सर्वात्मना कृष्णः सेव्यः कालादिदोषनुत्। तद्भक्तेषु च निर्दोषभावेन स्थेयमादरात्॥ ३॥ भगवत्येव सततं स्थापनीयं मनः स्वयम्। कालोऽयं कठिनोऽपि श्रीकृष्णभक्तान्न बाधते॥ ४॥

॥ इति श्रीविट्ठलेश्वरोक्ता ( द्वितीया ) चतुःश्लोकी समाप्ता॥

---

* अष्टकेऽत्र व्याकरणाशुद्धयो विद्वद्भिर्विचारणीयाः।

# श्रीसुदर्शनाष्टकम्

श्रीमतेरामानुजायनमः। प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण जनिभयस्थान-तारण जगदवस्थानकारण। निखिलदुष्कर्मकर्शननिगमसद्धर्मदर्शन जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ १ ॥ शुभजगद्रूपमण्डनसुरजनत्रासखण्डन शतमख ब्रह्मवन्दित शतपथब्रह्मनन्दित। प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित जयजय श्री० ॥ २ ॥ निजपदप्रीतसद्गुण निरुपथस्फीतषड्गुण निगमनिर्व्यूढवैभव निज-परव्यूहवैभव। हरिहयद्वेषिदारण हरपुरप्लोषकारण जयजय श्री० ॥ ३ ॥ स्फुटत-टिज्जालपिंजर पृथुकरज्वालपञ्जर परिगतप्रत्नविग्रह पटुतरप्रज्ञदुर्ग्रह। प्रहरणग्राम-मण्डित परिजनत्राणपण्डित जयजय श्री० ॥ ४ ॥ भुवननेतस्त्रयीमय सवनतेज-स्त्रयीमय निरवधिस्वादुचिन्मय निखिलशक्ते जगन्मय। अमितविश्वक्रियामय शमितविष्वग्भयामय जयजय श्री० ॥ ५ ॥ महितसम्पत्सदक्षर विहितसम्पत्ष-डक्षर षडर चक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित। विविधसङ्कल्पकल्पक विबुधसङ्कल्प-कल्पक जयजय श्री० ॥ ६ ॥ प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर विकटमालाप रिष्कृत विविधमायाबहिष्कृत। स्थिरमहायन्त्रयन्त्रित दृढदयायन्त्रयन्त्रित जयजय श्री० ॥ ७ ॥ दनुजविस्तारकर्तन दनुजविद्याविकर्तन जनितमिस्राविकर्तन जगद-विद्यानिकर्तन। अमरदुष्टस्वविक्रम समरजुष्टभ्रमिक्रम जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ८ ॥ द्विचतुष्कमिदं प्रभूतसारं पठतां वेङ्कटनायकप्रणीतम्। विषमेऽपि मनोरथप्रधावन्न विहन्येत रथाङ्गधुर्यगुप्तः ॥ ९ ॥

॥ इति श्रीसुदर्शनाष्टकं सम्पूर्णम् ॥

# श्रीसुदर्शनशतकम्

श्रीमतेरामानुजाय नमः। श्रीयतिराजाय सुदर्शनाय नमः। रङ्गेशविज्ञप्तिकरामयस्य चकार चक्रेशनुतिं निवृत्तये। समाश्रये यं वरपूरणीयं तङ्कूरनारायणनामकं मुनिम् ॥१॥ सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चिर्बाह्याबाह्यान्धकारक्षतजगदगदङ्कारभूम्ना स्वधाम्ना। दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्या ज्वालाजाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि ॥१॥ प्रत्युद्यातम्मयूखैर्नभसि दिनकृतः प्राप्तसेवं प्रभाभिर्भूमौ सौमेरवीभिर्दिवि वरिवसितं दीप्तिभिर्देवधाम्नाम्। भूयस्यै भूतये वः स्फुरतु सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं चाक्रं जाग्रत्प्रतापं त्रिभुवनविजयव्यग्रमुग्रं महस्तत् ॥ २ ॥ पूर्णे पूरैस्सुधानां सुमहति लसतः सोमबिम्बालवाले बाह्वाशाखावरुद्धक्षितिगगनदिवश्चक्रराजद्रुमस्य। ज्योतिश्छद्मप्रवालः प्रकटितसुमनः संपदुत्तंसलक्ष्मीं पुष्णन्नाशामुखेषु प्रदिशतु भवतां सप्रकर्षं प्रहर्षम् ॥ ३ ॥ आरादाराः सहस्राद्विसरति विमतक्षेपदक्षाद्यदक्षान्नाभेर्भास्वत्सनाभेर्निजविभवपरिच्छिन्नभूम्नश्च नेमेः। आम्नायैरेककण्ठैः स्तुतमहिममहो माधवीयस्य हेतेस्तद्वो दिक्ष्वेधमानं चतसृषु चतुरः पुष्यतात्पूरुषार्थान् ॥ ४ ॥ श्यामं धामप्रसृत्या क्वचन भगवतः क्वापि बभ्रु प्रकृत्या शुभ्रं शेषस्य भासा क्वचन मणिरुचा क्वापि तस्यैव रक्तम्। नीलं श्रीनेत्रकान्त्या क्वचिदपि मिथुनस्यादिमस्यैव चित्रा व्यातन्वानं वितानश्रियमुपचिनुताच्छर्म वश्चाक्रभानम् ॥ ५ ॥ शंसत्युन्मेषमुच्छोषितपरमहसो भास्वतः कैटभारेरिन्धे सन्ध्येव नक्तं चरविलयकरी या जगद्वन्दनीया। बन्धूकच्छायबन्धुच्छविघटितघनच्छेदभेदस्विनी सा राथाङ्गी रश्मिभङ्गी प्रणुदतु भवतां प्रत्यहोत्थानमेनः ॥ ६ ॥ साम्यं धूम्या प्रवृद्ध्या प्रकटयति नभस्तारकाजालकानि स्फौलिङ्गी यानि कानि दिशति यदुदये मेरुरङ्गारशङ्काम्। अग्निर्भ्राचिरैक्यं भजति दिननिशावल्लभौ दुर्लभाभौ ज्वालावर्तो विवस्तः प्रहरणपतिजं धाम यत्तद्धिनोतु ॥७॥ दृष्टेऽधिव्योमचक्रे त्रिक-

चनवजपासंनिकाशे सकाशं स्वर्भानुर्भानुरेषः स्फुटमितिकलयन्नागतो वेगतोऽस्य। निष्प्रतोयैर्निवृत्तो विधुमिहसहसा स्रष्टुमद्याऽपि नेष्टे घर्मांशुं ते घटंतामहितविहतये भानवो भास्वरावः॥ ८॥ देवं हेमाद्रितुंगं पृथुभुजशिखरं बिभ्रती मध्यदेशे नाभिद्वीपाभिरामारवि‌पिनवर्ती शेषशीर्षासनस्थाम्। नेमिं पर्यायभूमिं दिनकरकिरणादृष्टसीमः परीत्य प्रीत्यै चश्चक्रवालाचल इव विलसन्नस्तु दिव्यास्त्ररश्मिः॥९॥ एकं लोकस्य चक्षुर्द्विविधमपनुदन्ममनस्त्रिनेत्रं दात्रर्थानां चतुर्णां गमयदरिगणं पंचतां षड्गुणाढ्यम्। सप्तार्चिःशोषिताष्टापदनवकिरणश्रेणिरज्यद्दशांशंपर्यस्याद्वः शतांगावयवपरिवृढज्योतिरीतीः सहस्रम्॥ १०॥ उचंडे यच्छिखंडे निबिडयति नभः क्रोडमकोटितिग्मामभ्यस्य प्रौढतापप्लपितत्रपुरपो बिभ्रतीरभ्रपंक्तीः। धत्ते शुष्यत्तनुधोरसोविधुरपमधुनः क्षौद्रकोशस्य साम्यं रक्षंत्वस्त्रप्रभोस्ते रचितसुचरितव्युष्टये घृष्टयो वः॥११॥ पद्मौघो दीर्घिकांभस्स्ववनिधरतटे गैरिकांबुप्रपातः सिंदूरं कुंजराणां दिशि दिशि गगने सांध्यमेघप्रबन्धः। पारावारे प्रवालोच्चनभुवि च तथा प्रेक्षमाणः प्रमुग्धैः साधिष्ठं वः प्रबोधं जनयतु दनुजद्वेषिणस्त्वैपराशिः॥१२॥ भानो! भा नो त्वदीया स्फुरति कुमुदिनीमित्र ते कुत्र तेजस्ताराध्यारादधीरोस्यनलनमवतः स्वैरमैरं मदार्चिः। शंसंतीत्थं नभस्था यदुदयसमये चक्रराजांशवस्ते युष्माकं प्रौढतापप्रभवभयगदापक्रमाय क्रमंताम्॥१३॥ जग्ध्वा कर्णेषु दूर्वांकुरमरिसुदृशामक्षिषु स्ववधूनां पीत्वा चांभश्चरंत्यः सवृषमनुगता वल्लवेनादिमेन। गावोवश्चक्रभर्तुः परममृतरसं प्रश्रितानां दुहाना ऋद्धि स्वालोकलुप्तत्रिभुवनतमसः सानुबन्धं ददन्ताम्॥ १४॥ सेनांसेनांसयोनो महति रणमुखे लंभयं लंभयंतीरुरसेकोष्णालुदोष्णां प्रथमदिविचिपदामावलीयावलीढे। विश्वंविश्वंभराख्यं रथपदधिपतेर्लीलया पालयंती वृद्धिः सा दीधितीनां वृजिनमनुदिनं मार्ज्जयित्वार्ज्जितं वः॥१५॥ तप्तास्वेनोष्मणेव प्रतिभटवपुषामस्त्रधारां धयंती प्राप्तेव क्षीबभावं प्रतिदिशमसकृत्तन्वती घूर्णितानि। वंशास्थिस्फोटशब्दं प्रकटयति पटूनावहंत्यट्टहासान् भाः सा वः स्यन्दनांगप्रभुसमुदयिनीरपंद्वतां चिंतिताय॥ १६॥ देवैरासेव्यमानोदनुजभटभुजास्तंभदर्पोष्णतातैराशारोधोतिलंघी लुठदुडुपटलीलक्ष्य-

डिंडीरपिंडः। गिल्लञ्ज्वालातरङ्गत्रुटितरिपुतरुत्रातपातोग्रमार्गश्चाक्रो वः शोचिरोघः शमयतु दुरितापह्नवं दाववह्निम् ॥१७॥ भ्राम्यंती संश्रितानां भ्रमशमनकरी छन्नसूर्य-प्रकाशामूर्ध्यालोकानुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का। धारासंपातिनी च प्रकटितदहना दीप्तिरस्त्रेशितुर्वश्चित्रा भद्राय चित्राचितविमलजना जायतामायताय ॥ ॥१८॥ नित्ये वन्येवकाशीदवशिखिजटिल ज्योतिषा येनदाहं कृत्यावृत्त्या विलिल्ये शलभसुलभया यत्र चित्रप्रभावे। रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहा यद्भयादभ्ययासी-द्दिश्याद्विश्वार्चितो वः स्फुरभसनिभृतं शौरिहेतिप्रताप ॥१९॥ उद्यद्दूर्विवादुदारां नय-नहिमजलं मार्जयन्निर्जरीणामज्ञानध्वान्तमूर्च्छाकरजनिरजनीभंजितस्यंजिताध्वा। न्यक्कुर्वाणो ग्रहाणां स्फुरणमपहरन्नर्चिषः पावकीयाश्चक्रेशार्कप्रकाशो दिशतु दशदिशो व्यश्नुवानं यशो वः ॥२०॥ वर्गस्य स्वर्गधाम्नामपि दनुजनुषा विग्रहं निग्रहीतुं दातुं सद्यो बलानां श्रियमतिशमनीं पत्रभंगानुवृत्त्या। योक्तुं देदीप्यते या युगपदपि पुरो-भूतिमय्या प्रकृत्या सा वो नुद्यादविद्यां द्युतिरमृतरसस्यंदिनी स्यादनागी ॥ २१ ॥ दाहंदाहं सपत्नान्समरभुवि लसद्भस्मना वर्त्मनायान् क्रव्यादप्रेतभूताभिलषित-पुषा प्रीतकापालिकेन। कंकालैः कालधौतं गिरिमिव कुरुते या स्वकीर्तेर्न्निहन्तुं धूर्जटिः साट्टहासं वः सकलमुपनयत्वायुधाग्रेसरस्य ॥२२॥ दग्धानां दानवानां सभसि-तनिचयैरस्थिभिः सर्वशुभ्रां पृथ्वीं कृत्वाऽपि भूयो नवरुधिरभरैः कौतुकं कौणपेभ्यः। कुर्वाण बाष्पपूरैः कुचतटघुसृणक्षालनैस्तद्वधूनां पापं पापच्यमानं शमयतु भवतामस्त्र-राजस्य तेजः ॥२३॥ मागान्मोपंल्ललाटानलइतिमदनद्वेपिणाध्यायतेव स्रष्टाम्भोनि-द्रवासांबुजदलपटलप्लोपमुत्पश्यतेव। वज्राग्निर्मास्मनाशंन्नजदिनिचकितेनेव शक्रेण-वद्वैः स्तोत्रैरस्त्रेश्वरस्य द्यनु दुरितशतं द्योतमाना द्युतिर्वः ॥२४॥ इतिचक्रज्वालावर्णनम्।

अथ नेमिवर्णनम्। शस्त्रास्त्रं शात्रवाणां शलभकुलमिव ज्वालया लेलिहाना घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान्तरामुद्राम्। व्यूढोरःप्रौढधारत्रुटितपटुरटत्की-कसक्षुण्णदैत्या नेमिः सौदर्शनी वः श्रियमतिशयिनीं दाशनादाशनाब्दम् ॥२५॥ धारा-चक्रस्य तारागणकणविलनिद्योतितद्युप्रचारा पाराधाराम्बुपूरक्षशनपिशुनितोत्ताल-

पातालयात्रा। गोत्राद्रिस्फोटशब्द-प्रकटितवसुधामण्डलीचण्डयाना पंथानम्वःप्रदिश्यात् प्रशमनकुशला पाप्मनामात्मनीनम् ॥ २६ ॥ यात्रायात्रातलोका प्रकटितवरुणत्रासमुद्रे समुद्रे सत्वासत्वासहोष्णाकृत सगरुदगापन्ददानाददाना। हानिहानिन्दितानाञ्जगतिपरिपदां दानवीनां नवीनां चक्रं चक्रेशनेमिः शममुपहरतात् सप्रभावप्रभावः ॥ २७ ॥ यत्रामित्रान्दिधक्षौ प्रविशति वह्निनोधाम निस्सीमधाम्निप्रस्तापस्तापशीर्णैः प्रगुणितसिकतैर्मौक्तिकैः शौक्तिकेयैः। राशिर्वारामपारां प्रकटयति पुनर्वैरिदाराश्रुपूरैर्वृद्धिनिर्य्याति निर्यापयतु सदुरितान्यत्रधुर्य्यप्रधिर्वः ॥ २८ ॥ कक्षातौल्येनक्रद्रूतनयफणमणीन्कल्पयदीपस्ययुञ्जन् पातालान्त प्रपाती निखिलमपितमः स्वेनधाम्ना निगीर्य्य। दैतेयप्रेयसीनाम्वमतिहृदिहृतप्रेयसां भूयसां यश्चक्राग्रीयाग्रदेशो दहतुविलसितम्वह्नसामंहसाम्वः ॥ २९ ॥ कृष्णाम्भोदस्यभूपाकृतनयननयव्याहृतिभार्गवस्य प्राप्तामावेदयन्ती प्रतिभटसुदृशामुद्भटाम्बाप्पवृष्टिम्। निष्टामाष्टापदश्रीः सममरचमूर्जितैरुज्जिहाना कीर्तिम्वः केतकीभिः प्रथयतुसदृशीं चञ्चलाचक्रधारा ॥३०॥ वप्राणाम्भेदनीं यः परिणतिमखिलश्लाघनीयां दधानः क्षुण्णांनक्षत्रमालां दिशिदिशिविकिरन्विद्युता तुल्यकक्ष्यः। निर्याणेनोत्कटेन प्रकटयति नवं दानवारिप्रकपञ्चक्राधीशस्य भद्रो वसयतु भवतां सप्रधिश्चित्तवृत्तिम ॥३१॥ नाकौकः शत्रुजत्रुत्रुटनविघटित-स्कन्धनीरन्ध्रनिर्य्यै-त्ष्यक्रव्यास्र-हव्यप्रसनरसल-सज्ज्वालजिह्वालवह्निम्। यन्दृष्ट्वा सांयुगीनं पुनरपि विदधत्याशिषो वीर्य्यवृद्ध्यै गीर्वाणानिर्वृणाना वितरतु विजयं विष्णुहेतिप्रधिर्वः ॥३२॥ धन्वाध्वन्यस्य धारासलिलमिव धनं दुर्गतस्येवदृष्टिर्जात्यंधस्येव पङ्गोः पदविहृतिरिव प्रीणती प्रेमभाजाम्। पत्युर्मायाक्रियायां प्रकटपरिणतिर्विश्वरक्षाक्षमायां मायामायासिनीस्त्वस्त्रुटयतुमहतीनेमिरस्त्रेश्वरस्य ॥३३॥ त्राणं या विष्टपानां वितरति च यया कल्प्यते कामपूर्त्तिर्न्नस्त्रातुं यत्पुरस्तात्प्रभवति कलयाप्योपधीनामधीशः। उन्मेषो याति यस्या न समयनियतिं सा श्रियम्वः प्रदेयान्न्यक्कृत्यद्योतमाना त्रिपुरहरदृशान्नेमिरस्त्राधिपस्य ॥३४॥ नक्षत्रक्षोदभूतिप्रकरविकिरणश्वेतिताशावकाशा जीर्णैः पर्णैरिवद्याञ्जलधरपटलैश्चूर्णि-

तैरुणवाना । आजायाजानवाजानतरिपुजनतारण्यमावर्त्तमाना नेमिर्भात्येव चाक्री-प्रणुदतु भवता संहृतं पापतूलम् ॥३५॥ क्षिप्त्वा नेपथ्यशाटीमिव जलदघटां जिष्णु-कोदण्डचित्रां तारापुंजप्रसूनाञ्जलिमिव विपुले व्योमरङ्गे विकीर्य । निर्वेदग्लानिचि-न्ताप्रभृतिपरवशान्नन्तरादानवेन्द्रान्नृत्यन्नानालयाढ्यं नटइवतनुतां शर्म चक्रप्र-धिर्वः ॥ ३६ ॥ दौर्गत्यप्रौढतापप्रतिभटविभवावित्तधारास्सृजन्ती गर्ज्जन्ती चीत्क्रि-याभिर्ज्वलदनलशिखोद्दामसौदामिनीका । अव्यात्कव्याद्वधूटीनयनजलभरैर्दिक्षु नव्याननाव्यान् पुष्यन्ती सिन्धुपूरान् रथचरणपतेर्नेमिकादम्बिनी वः ॥३७॥ सन्दोहं दानवानामजसमजमिवालभ्यजाज्वल्यमाने वह्नावह्नायजुह्वत्रिदशपरिषदेस्स्वभा-गप्रदायी । स्तोत्रैर्ब्रह्मादिगीतैर्मुखरपरिसरं श्लाघ्यशस्त्रप्रयोगं प्राप्तः सद्मामसत्रं प्रधिरसुररिपोः प्रार्थितं प्रस्तुताम्वः ॥ ३८ ॥ इतिचक्रनेमिवर्णनम् ॥ अथ अरव-र्णनम् ॥ उत्पातालातकल्पान्यसुरपरिषदामाहव-प्रार्थिनीनां-मध्वानध्वानबोधक्ष-पणचणतमः क्षेपदीपोपमानि । त्रैलोक्यागारभारोद्वहनसहमणिस्तम्भसम्पत्सखानि श्रायंतामन्तिमायां विपदि सपदि वोराणिसौदर्शनानि ॥ ३९ ॥ ज्वालाजालप्र-वालस्तबकितशिरसोनाभिमावालयन्त्यः सिक्तारक्ताम्बुपूरैः शकलितवपुषां शात्रवा-नीकिनीनाम् । चक्राक्रीडप्ररूढाभुजगशयभुजोपघ्ननिघ्नप्रचाराः पुष्यन्तः कीर्तिपुष्पा-ण्यरकनकलता. प्रीतये वः प्रथन्ताम् ॥४०॥ ज्वालाजालाब्धिमुद्रं क्षितिवलयमि-वाबिभ्रतीनेमिचक्रं नागेन्द्रस्येवनाभे. फणपरिषदिव प्रौढरत्नप्रकाशा । दत्ताम्वोदिव्य-हेतेर्मतिमरविततिः ख्यातसाहस्रसंख्याः संख्यावत्सङ्घचित्तश्रवणहरगुणस्यान्दि-सन्दर्भगर्भाम् ॥ ४१ ॥ ब्रह्मशोपक्रमाणा बहुविधविमतक्षोदसम्मोदितानां सेवायै-देवतानां दनुजकुलरिपोः पिण्डकाद्यङ्गभाजाम् । तत्तद्धामान्तसीमाविभजनविधये मानदण्डायमाना भूमानं भूयसाम्वोदिशतु दशशतीभास्वराणामराणाम् ॥४२॥ ज्वालाकल्लोलमालानिबिडपरिसरां नेमिवेलां दधाने पूर्वेणाक्रान्तमध्ये भुवनमयह्न-विभोजिना पूरुषेण । प्रस्फूर्जत्प्राज्यरत्ने रथपथजलधावेधमानैः स्फुलिङ्गैर्द्रुम्वो विद्रु-माणांश्रियमरविततिर्विस्तृणानाविधत्ताम् ॥ ४३ ॥ नासीरस्वैरभग्न-प्रतिभटरुधि-

रासारधारावसेकानेकान्तस्मेरपद्मप्रकरसहचरच्छाययाप्राप्यनाभ्या। मुक्तानीघाङ्कुराणि स्फुरदनलशिखादर्शितप्राग्प्रवालान्यव्याघातेनभव्यम्प्रददतु भवतां दिव्यहेतेरराणि ॥ ४४ ॥ दावोल्कामण्डलीवद्द्रुमगणगहने वाडवस्येवदह्ने ज्वलावृद्धिर्महाब्धौ प्रवयसितमसिप्रातरर्कप्रभेव। चाक्रेयादानवानां हयकरटिघटासङ्घटेजाघटीति प्राज्यं सा वः प्रदेयात्पदमरपरिपत्पद्मनाभायुधस्य ॥ ४५ ॥ तापाद्दैत्यप्रतापातपसमुपचितात्त्रायमाणं त्रिलोकीं लोलैर्ज्वालाकलापैः प्रकटयदभितश्चीनपट्टाञ्चलानि। छत्राकारं शलाकाइवकनकक्रृताः शौरिदोर्दण्डलग्नं भूयासुर्भूपयन्त्योरथचरणमरस्फूर्त्तयः कीर्त्तयेवः ॥ ४६ ॥ नाभीशालानिखालान्नहनसमुचितां वैरिलक्ष्मीवशानां संयद्वारीहृतानां समनुविदधती काञ्चनालानपङ्क्तिम्। राज्याचप्राज्य दैत्यव्रजविजयमहोत्तम्भितानां भुजानां तुल्याचक्रारमाला तुलयतुभवतां तूलवच्छत्रुलोकम् ॥४७॥ आनेमेश्चक्रवालात्विपइवविततः पिण्डिकाचण्डदीप्तेर्दीप्तादीपाइवारादृहनरणतमीगाहिनः पूरुषस्य। शाणेरोपाणितानां रथचरणमयेशत्रुशौण्डीर्यहेम्नां रेखाप्रत्यग्रलग्नाइव भुवनमरश्रेणयः प्रीणयन्तु ॥ ४८ ॥ दीप्तैरर्चिःप्ररोहैर्दलवतिविधृते बाहुनालेन विष्णोरुद्यत्प्रद्योतनाभं प्रथयतिपुरुपं कर्णिकावर्णिकायाम्। चूडालम्वेदमौलिङ्कलयति कमले चक्रनाम्नोपलक्ष्ये लक्ष्मींस्फारामराणि प्रतिविदधतुवः केसरश्रीकराणि ॥ ४९ ॥ धातुस्यन्दैरमन्दैः कलुपितवपुषोनिर्भराम्भःप्रपातानर्चिष्मत्या स्वमूर्त्या रथचरणगिरेर्नेमिनाभीतटस्य। व्याकुर्वाणारपङ्क्तिर्चितरतु विभुताविस्तृतिं चित्तकोटीकोटीरच्छत्रपीठीकटककरिघटाचामरस्त्रग्विणीस्वः ॥ ५० ॥ इत्यरवर्णनम् ॥ अथ नाभिवर्णनम् ॥ ऐक्येनद्वादशानामशिशिरमहसां दर्शयन्तीप्रवृत्तिं दत्तस्वर्लोकलक्ष्म्यास्तिलकइवमुखेपद्मरागद्रवेण। देयाद्दैतेयदर्पक्षतिकरणरणप्रीणिताम्भोज—नाभिर्नाभिर्नाभित्व-मुर्व्याः सुरपतिविभवस्पर्शिसौदर्शिनीवः ॥५१॥ शस्त्रश्यामे शताङ्गक्षितिभृतितरलैस्तत्तरङ्गे तुरङ्गे त्वङ्गन्मातङ्गनक्रे कुपितभटमुखच्छायमुग्धप्रवाले। अस्तोकं प्रस्नुवाना प्रतिभटजलधौ पाटवम्वाडवस्यश्रेयोवः सम्विधत्तांश्रितदुरितहराश्रीधरास्त्रस्य नाभिः ॥ ५२ ॥ ज्वालाचूडालकालानलचलनस-

माडम्बरासांपरायं यासावासाद्यमाद्यत्सुरभटसुभुजास्फोटकोलाहलाढ्यम् । दैत्यारण्यं दहन्ती विरचयति यशो भूतिशुभ्रा धरित्रीं सा वक्षक्ष्स्यनक्ष्स्यदमृदितगजत्रायणी नाभिरव्यात् ॥५३॥ विन्दन्तीसान्ध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः स्फायन्नक्षत्रराशिं दिशिदिशिकणशः कीकसैः कीर्यमाणैः । नाकौकः पक्ष्मलाक्षीनवमदहसितच्छायया चन्द्रपादान् राथाङ्गी वितृणाना रचयतु कुशलं पिण्डिकायामिनी वः ॥ ५४ ॥ निस्सीमन्निस्तृनायाभुजधरणिधराघाटतः कैटभारेराशाकूलङ्कपार्द्धे रहितबलमहाम्भोधिमासादयन्त्याः । चक्रज्वालापगायाश्चलदरलहरीमालिकादन्तुरायाः बिभ्रत्यावर्त्तभावम्भ्रमयतु भुवने पिण्डिका वः प्रशस्तिम् ॥ ५५ ॥ पाणौ कृत्याहवाग्रे प्रतिभटविजयोपार्जितां वीरलक्ष्मीमानीतायास्ततोस्याः स्वसविधमसुरद्वेषिणापूरुषेण । प्रासादम्वासहेतोर्विरचितमरुणैररश्मिभिः सूचयन्ती नाभिर्वो निर्मिमीतां रथचरणपतेर्निर्वृतिनिर्विघाताम् ।५६। डिण्डीरापाण्डुगण्डैररियुवतिमुखैः पिण्डिका कृष्णहेतेरुच्चण्डाश्रुप्रवर्पैरुपरततिलकैरुग्रशौण्डीर्यचर्या । द्विव्रग्रामाधिपत्यद्रुहिणमदमपीदूषिताक्षक्षमाभृत् सेवाहेवाकपाकं शमयतुभवतां कर्मशर्म प्रतीपम् ॥५७॥ पर्याप्तामुन्नतिं या प्रथयति कमलं या तिरोभाव्यभाति स्रष्टुः सृष्टेर्द्वबीयः कुवलयमहितं या बिभर्ति स्वरूपम् । भूम्नास्वेनान्तरिक्षं कवलयतिच या साविचित्रा विधत्तां दैतेयारातिनाभिर्द्रविणपतिपदद्वेषिणीं सम्पदम्वः ॥ ५८ ॥ वाणीयाङ्गैश्चतुर्भिस्सदसि सुमनसा द्योतमानस्वरूपा बाह्यन्तश्चामुरारेरभिमतमखिलं श्रीरिवप्रदर्शयन्ती । दुर्गर्वोग्राकृतिर्या त्रिभुवनजननस्थेमसंहारधुर्या मर्यादालङ्घनम्वः क्षपयतुमहतीहेतिवर्यस्यनाभिः ॥ ५९ ॥ स्रग्भिः सन्तानजाभिर्मधुरमधुरसस्यन्दसन्दोहिनीभिः पाटीरैः प्रौढचन्द्रातपचयसुषमालोपनैर्लेपनैश्च । धूपैः कालागुरूणामपिसुरसदृशो विस्मयश्चोसुयस्यागन्धं रुन्धन्निसावश्चिरमसुरभिदोनाभिरव्यादभव्यात् ॥ ६० ॥ अंहस्संहृत्य दग्ध्वा प्रतिजनिजनितं प्रौढसंसारवन्या दूराध्वन्यानधन्यान् महति विनतिभिर्धामनि स्थापयन्ती । विश्रान्तिशाश्वती या नयति रमयता चक्रराजस्य नाभिः संयन्मोमुह्यमानत्रिदशरिपुदशासाक्षिणीसाक्षिणीवः ॥ ६१ ॥ वन्ि

नाभिवर्णनम्॥ अथ अक्षवर्णनम्॥ श्रुत्वायन्नामशब्दं श्रुतिपथकटुकन्दैवनक्रीडनेपुस्व-वैरिस्वैरवत्योभयविवशधियः कातरन्यस्तशम्बराः। मन्दाक्षं यान्त्यमन्दम्प्रतियुवति-मुखैर्दर्शितोत्त्रासदर्पेरक्षं सौदर्शनन्तत् क्षपयतु भवतामेधमानां धनायाम्॥६२॥ व्यस्त-स्कन्धं विशीर्णप्रसवपरिकरम्प्रस्तपत्रोपमर्दं संयद्वर्षासु तर्षातुरखगपरिपत्पीतरक्तोद-कासु। अक्षं रक्षस्तरूणामशनिवदशनैरापतन्मूर्ध्निमूर्ध्निस्वादसाधीशितुर्वः स्तवकितयश-सेद्वेषिणां प्लोपणाय॥६३॥ दीक्षां सङ्ग्रामसत्रेमहतिकृतवतोदीप्तिभिः संहताभिर्जिह्वा-लेसप्तजिह्वे दनुजकुलहविर्जुह्वतोनेमिजिह्वा। वैकुण्ठास्त्रस्यकुण्डं महदिवविलसत्पिण्डि-कावेदिमध्ये दिश्याद्दिव्यर्द्धिदेश्यं पदमिहभवतामक्षतोन्मेपमक्षम्॥ ६४॥ तुङ्गाद्दो-रद्रिशृङ्गाद्दनुजविजयिनः स्पष्टदानोद्यमानां शत्रुस्तम्बेरमाणां शिरसिनिपततः स्रस्त-मुक्तास्थिपुञ्जे। रक्तैरभ्यक्तमूर्त्तेर्विदलनगलितैर्व्यक्तवीरायितर्द्धेर्हर्यक्षस्यारिभङ्गं जनयतु जगतामीडितं क्रीडितम्वः॥ ६५॥ उन्मीलत्पद्मरागं कटकमिवधृतम्बाहु-नायन्मुरारेर्दीप्तान् रश्मीन्दधानं नयनमिवयदुत्तारकं विष्टपस्य। चक्रेशार्करस्य यद्वापरिधिरभिदधैदत्यहत्यामिव द्रागक्षं पक्षे पलित्वा परिघटयतु वस्तद्द्रढिष्ठाम्प्र-तिष्ठाम्॥६६॥ क्रीडत्प्रायक्रोडदंष्ट्राहतिदलितहिरण्याक्षवक्षःकवाटप्रादुर्भूतप्रभूतक्षत-जसमुदितारुण्यमुद्रं समुद्रम्। उन्मीलत्किंशुकाभैरपहसदमितैरंशुभिः संशयघ्नीमक्षं चक्रस्य दत्तामघशतशमनन्दाशुपीशेमुषीं वः॥ ६७॥ पद्मोल्लासप्रदं यज्जनयति जगतीमेधमानप्रबोधां यस्यच्छायासमानालसति परिसरे रोहिणीतारकाग्र्या। नानाहेत्युन्नतत्वम्प्रकटयति च यत्प्राप्तकृष्णप्रयाणन्त्रेधाभिन्नस्वधाम्नः समुदयइव-तत्पातुवश्चाक्रमक्षम्॥ ६८॥ शोचिर्भिः पद्मरागद्रवसमसुषमैः शोभमानावकाशं प्रत्यग्राशोकरागप्रतिभटवपुषाभूषितं पूरुषेण। अन्तः स्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रि-याणां क्षतानामारब्धं शोणितौघैः सर इव भवतो दिव्यहेत्यक्षमव्यात्॥ ६९॥ मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानां स्रष्टं चक्रेश्वरेणग्रहणधिषणया-वारिवद्वारणानां। गम्भीरंयन्त्रगर्त्तङ्कमपि कृतधियोमन्वते यत्प्रदेयादस्थूलां सम्विदं वस्त्रिजगदभिमतस्थूललक्षन्तदक्षम्॥ ७०॥ प्राणादीन्सन्नियम्य प्रणिहितमनसां

योगिनामन्तरङ्गं तुङ्गं सङ्कोच्य रूपं विरचितदहराकाशकृच्चङ्क्रमित्वेन । प्राप्तं यत्पूरुषेणस्वमहिमसदृशं धामकामप्रदम्भो भूयात् तद्भूर्भुवस्स्त्रयपरिवमितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥ विद्धान्धीध्रेणधाम्ना चरणनखभुवाबद्धवासम्यमध्येचक्राध्यक्षस्य विभ्रत्परिहमितजपापुष्पकोशान्प्रकाशान् । शुभ्रैरभ्रैरदभ्रैश्शरदि तत इतो व्योमविभ्राजमानं प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातुराथाङ्गमक्षम् ॥ ७२ ॥ श्रीवाणीवाङ्मृडान्योविदधति भजनंशक्तयोयस्यदिक्षु प्राह व्यूहंयदाद्यं प्रथममपि गुणं भारतीपाञ्चरात्री । घोरांशान्ताञ्चमूर्त्तिं प्रथयति पुरुषः प्राक्तनप्रार्थनाभिर्भक्तानां यस्य मध्ये दिशतु मदनधामक्षमध्यक्षताम्वः ॥७३॥ रक्ष पक्षेण रक्षस्क्षममरगणंलक्ष्यवैलक्ष्यमाजौ लक्ष्मीमक्षीयमाणां बलमथनभुजे चक्रशिक्षानपेक्षे । निक्षिप्यक्षिप्रमध्यक्षयति जगतियद्क्षणं द्विव्यहेतेरक्षामामक्षमा ता क्षपयतु भवतामक्षजिह्लक्ष्यमक्षम् ॥ ॥ ७४ ॥ इत्यक्षवर्णनम् ॥ अथ पुरुषवर्णनम् ॥ ज्योतिश्चूडालमौलिस्त्रिनयनवदनः षोडशोत्तुङ्गबाहुः प्रत्यालीढेनतिष्ठन्प्रणवशशधराधारषट्कोणवर्ती । निस्सीमेनस्वभूम्नानिखिलमपि जगत्क्षेमवन्निर्मिमाणो भूयास्सौदर्शनोवः प्रतिभटपुरुष. पूरुष· पौरुषाय ॥७५॥ वाणी पौराणिकीयं प्रथयतिमहितं प्रेक्षणङ्कैटभारेः शक्तिर्यस्येषु दंष्ट्रानखपरशुमुखव्यापिनीतद्विभूत्याम् । कर्तुं यत्तत्त्वबोधोननिशितमतिभिर्नारदाद्यैश्चशक्यो दैवीम्वोमानुषीञ्च क्षिपतुमविपदं दुस्तरामस्त्रराजः ॥ ७६ ॥ रुढस्ताराजवालेरुचिरदलचयः श्यामलैः शस्त्रजालैर्ज्वालाभिस्सप्रवालः प्रकटितकुसुमोद्भवद्भसङ्घैः स्फुलिङ्गैः । प्राप्तानाम्पादमूलं प्रकृतिमधुरयाछाययातापहृद्यो दद्यादुद्दो प्रकाण्डः फलमभिलषितं विष्णुसङ्कल्पवृक्षः ॥ ७७ ॥ धाम्नामैस्म्मदाना निचयमिवचिरंस्थायिना द्वादशानां मार्त्तण्डानासमूहं महद्दवबहुला रत्नभासामिवर्द्धिम् । अर्चिः सङ्घातमेकीकृतमिव शिखिना वाडवाग्नेस्सराणां शङ्कन्तेयस्यरूपं स भवतु भवतां तेजसे चक्रराजः ॥७८॥ उग्रम्पश्याक्षमुग्रभ्रुकुटिसमुकुटं कुण्डलिस्पष्टदंष्ट्रं चण्डास्त्रैर्बाहुदण्डैर्लसदनलसमक्षौमलक्ष्मोरुकाण्डम् । प्रत्यालीढस्थपादं प्रथयतुभवता पालनव्यग्रमग्रे चक्रेशोऽकालकालेरितभटविकटाटोपलोपाय रूपम् ॥७९॥ चण्डं कुन्तं कृपाणं

परशुहुतवहावङ्कुशन्दण्डशक्तीशङ्खं कोदण्डपाशौ हलमुशलगदावज्रशूलांश्चहेतीन्। दोर्भिः सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पैर्व्यूहस्तेजोभिमानी नरकविजयिनोजृम्भतां सम्पदेवः ॥८०॥ पीतङ्के शेरिपोरप्यसृजिरथपथेसंश्रितेष्युत्कटाक्षं चन्द्राधःकारियन्त्रे वपुषि च दलने मण्डलेचस्वराङ्कम्। हस्तेवक्रेचहेतिस्तवकितमसमंलोचनेमोचनेचस्तादस्तोकायधाम्ने सुरवरपरिषत्सेवितं दैवतम्वः॥ ८१॥ चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापोमन्त्रं तन्त्रानुरूपं मनसिकलयतो मानयन्नात्मगुह्यान्। पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयोधामषण्णाङ्गुणानां लक्ष्मीराजासनस्थोवितरतुभवतां पूरुषश्चक्रवर्ती ॥ ८२॥ अक्षावृत्ताभ्रमालान्यरविवरलुठच्चन्द्रचण्डद्युतीनि ज्वालाजालावलीढस्फुटदुडुपटलीपाण्डुदिङ्मण्डलानि। चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालार्त-शेषाण्यस्त्रग्रामाग्रिमस्य प्रददतुभवतां प्रार्थितं प्रस्थितानि ॥ ८३॥ शूलन्त्यक्तात्मशीलं सृणिरणुकघृणिः पट्टिशः स्पष्टपादः शक्तिः शालीनशक्तिः कुलिशमकुशलङ्कुण्ठधारः कुठारः। दण्डश्चण्डत्वशून्योभवलिततनुधनुर्यत्पुरस्तात्स वः स्तादुग्रस्ताशेषास्त्रवर्गोरथचरणपतिः कर्मणे शार्मणाय ॥८४॥ क्षुण्णाजानेयवृन्दं क्षुभितरथगणं सन्नसन्नाग्ययूथं क्ष्वेलासंरम्भहेलाकलकलविगलत्पूर्वगीर्वाणगर्वम्। कुर्वाणः साम्परायं रथचरणपतिः स्थेयसींवः प्रशस्तिन्दुग्धां दुग्धाब्धिभासं भयविवशशुनासीरनासीरवर्ती ॥ ८५॥ द्रुह्याहोस्शालिमालिप्रहरणरभसोत्तानितैवैनतेयेविद्रातिद्रावप्रयुक्तः प्रधनभुविपरावर्तमानेनभर्त्रा। निर्जित्यप्रत्यनीकं निरवधिकचरद्वास्तिकाश्चीयरथ्यं पथ्यं विश्वस्यदाश्वान् प्रथयतुभवतोहेतिरिन्द्रानुजस्य ॥८६॥ नन्दिन्यानन्दशून्ये गलतिगणपतौव्याकुलेवाहुलेये चण्डेचाकित्यकुण्ठेप्रमथपरिषदिप्राप्तवत्याम्प्रमादम्। उच्छिद्याजौबलिष्ठं बलिजभुजवनं योददावादिभिक्षोर्भिक्षान्तरप्राणरूपां समवदकुशलं कृष्णहेतिः क्षिणोतु ॥८७॥ रक्तौघाभ्यक्तमुक्ताफलुलिसलसद्वीचिवृद्धौ महाब्धौ सन्ध्यासम्बन्धताराजलधरशवलाकाशनीकाशिकान्तौ। गम्भीरारम्भमम्भश्चरमसुरकुलं वेदविघ्नं विनिघ्नम् निर्विघ्नं वः प्रसूतां व्यपगतविपदं सम्पदञ्चक्रराजः ॥ ८८॥ काशीविप्लोपचैद्यक्षपणधरणिजध्वंस-

सूर्यापिधान प्रौढैर्धास्त्रमालि श्रुटमुख्यकथावस्तुमत्कीर्तिगाथाः। गीयन्ते किन्नरीभि कनकगिरिगुहागेहिनीभिर्यदीया देयाद्दैत्येन्द्रवैरीस्फुटभुवनसंश्लाघनीयाश्रियम्वः ॥८९॥ नानावर्णान्विघूण्वन्विरचितभुवनानुग्रहाग्निग्रहान यक्षश्रेष्ठयष्टासुमृष्टासुरवरतरुणीकण्ठकस्तूरिवेषु। आसारादर्णमालावधिपुवसतिय पूर्पोवत्सवध्यादुव्यध्वैन्द्रभूनमस्वैरूपहितमहितध्वान्तमध्वान्तवर्त्ती ॥९०॥ द्वात्रिंशत्षोडशाष्टप्रभृतिपृथुभुजस्फूर्तिभिर्मूर्तिभेदैः कालाद्ये चक्रपट्के प्रकटितविभवः पञ्चकृत्यानुरूपम्। अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः कुर्वाणो भक्तवर्गं कुशलिनमवतादायुधग्रामणीर्वः ॥९१॥ कोणैरर्णै. सरोजैरपिकदिशगुणैः षड्भिरुद्भिन्नशोभे श्रीबाजी पूर्विकाभिर्दधति विलसतः शक्तिभिः केशवादीन्। तारान्तेभूपुराद्यैरथचरणगदाशङ्खशार्ङ्गाङ्कितांशे यन्त्रेतन्त्रोदिते वः स्फुरतुकृतपदं लक्ष्म लक्ष्मीसखस्य। ९२॥ दंष्ट्राकान्त्याकडारे कपटकिटितनोः कैटभारेरधस्तादुर्ध्वंहासेनविद्धे नरहरिवपुषो मण्डलेवासवीये। प्रावप्रत्यक्सान्ध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानोदैतेयोत्पातशंसीरविरिवरहयस्वक्षराजोरजम्वः ॥ ९३ ॥ कोणेकापिस्थितोपि त्रिभुवनविततश्चन्द्रधामापिरक्षो रुक्मच्छायोपिकृष्णाकृतिरनलमयोप्याश्रितत्राणकारी। धारासारोपि दीप्तो दिनकररुचिरोप्युल्लसत्तारकश्रीश्चवेशश्चित्रभूमाविसरतुविमतग्रामनंशासनम्वः ॥ ९४ ॥ शुक्लः शक्रस्तवस्तेसहदहनकलाङ्कालतेयन्नकालः किम्वोरक्षासिरक्षानवफलतुपतेयादसाम्पादसेवा। वायोद्द्योसिभर्तुस्त्यजधनदमदंसेव्यतास्त्र्यम्बकेति प्राहुर्यद्यंत्रपालाः सदनुजविजयीहन्तुनन्द्रालुताम्वः ॥ ९५ ॥ गायत्र्यर्णारचक्रे प्रथममनुमखस्मेरपत्रारविन्दे बिम्बम्वह्नेस्त्रिकोणं वहतिजयिजयाद्यष्टशक्तौ निषण्णा। शोकस्वोशोकमूलेपदमविधलसद्धीमभीमाक्षभीमापुंसो दिव्यास्त्रधामा पुरुषहरिमयीमूर्तिरस्यत्वपूर्वा ॥ ९६ ॥ पाश्चात्याशोकपुष्पप्रकरनिपतितैः प्रासरागं परागैः सन्ध्यारोचिः सगन्धैः स्वपदशशधरं प्रेक्ष्यतारानुपक्तम्। पद्मानावद्धकोशानिवसुरनिवहैरञ्जलीन्कल्प्यमानान् चक्राधीशोभिनन्दन् प्रदिशतुसदृशीमुत्तमश्लोकता वः ॥९७॥ रक्ताशोकस्य वेदस्य चनिहितपदस्प्राप्तशाखस्य मूले चक्रैरश्रैस्तदा-

धैरपिमहितचतुर्द्विश्चतुर्बाहुदण्डम्। प्रासीनम्भासमानं स्थितमपिभयतस्त्रायतां तत्त्व-मेकम्पश्चात्पूर्वत्रभागे स्फुटतरहरितामानुपं जानुपाद्यः ॥९८॥ प्राणे दत्तप्रयाणे सुपि-तद्दशिद्दशित्यक्तसारेशरीरे भत्याम्व्यामोहयत्यां सतमसि मनसि व्याहृतेव्याहृतेच। चक्रान्तर्वर्तिमृत्युप्रतिभयमुभयाकारचित्रं पवित्रं तेजस्त्वत्तिष्ठताम्वच्छिदशकुलधनन्त्री-क्षणन्तीक्ष्णदंष्ट्रं ॥ ९९ ॥ यस्मिन्विन्यस्यभारं विजयिनि जगतां जङ्गमस्थावराणां लक्ष्मीनारायणाख्यं मिथुनमनुभवत्यस्युदारान्विहारान्। आरोग्यं भूतिमायुः कृतमिह वहुनायद्यदास्थापदम्वस्तत्तन्नित्यं समस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्त्ती ॥ १०० ॥ इति पुरुषवर्णनम् ॥ पद्यानान्तरत्वविद्याद्युमणिगिरिशविध्यङ्कसंख्याध-राणामर्चिःष्वङ्गेषु नेम्यादिषु च परमतः पुंसि पड्विंशतेश्च। सङ्घैः सौदर्शनं यः पठति कृतमिदं कूरनारायणेन स्तोत्रं निर्विष्टभोगो भजति स परमाश्चक्रसायुज्यल-क्ष्मीम् ॥ १०१ ॥

॥ इति श्रीसुदर्शनशतकं सम्पूर्णम् ॥

---

# अथ संतानगोपालस्तोत्रंप्रारम्भ्यते

श्रीमतेरामनुजाय नमः ॥ श्रीशङ्कमलपत्राक्षं देवकीनन्दनं हरिम्। सुतसम्प्राप्तये कृष्णं नमामि मधुसूदनम् ॥१॥ नमाम्यहं वासुदेवं सुतसम्प्राप्तये हरिम्। यशोदाङ्कगतं वालं गोपालं नन्दनन्दनम् ॥ २ ॥ अस्माकं पुत्रलाभाय गोविन्दं मुनिवन्दितम्। नमाम्यहं वासुदेवं देवकीनन्दनं सदा ॥ ३ ॥ गोपालं डिम्भकं वन्दे कमलापतिमच्युतम्। पुत्रसम्प्राप्तये कृष्णं नमामि यदुपुङ्गवम् ॥ ४ ॥ पुत्रकामेष्टि-फलदं कञ्जाक्षङ्कमलापतिम्। देवकीनन्दनं वन्दे सुतसम्प्राप्तये मम ॥ ५ ॥ पद्मापते पद्मनेत्र पद्मनाभ जनार्दन। देहि मे तनयं श्रीश वासुदेवजगत्पते ॥६॥ यशोदाङ्कगतं वालं गोविन्दं मुनिवन्दितम्। अस्माकं पुत्रलाभाय नमामि श्रीशमच्युतम् ॥ ७ ॥

श्रीपते देवदेवेश दीनार्तिहरणाच्युत । गोविन्द मे सुतं देहि नमामि त्वां जनार्दन ॥८॥ भक्तकामद गोविन्द भक्तरक्ष शुभप्रद । देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥९॥ रुक्मिणीनाथ सर्वेश देहि मे तनयं सदा । भक्तमन्दारपद्माक्ष त्वामहं शरणागतः ॥१०॥ देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणागतः ॥११॥ वासुदेव जगद्वन्द्य श्रीपते पुरुषोत्तम । देहि मे तनयं कृष्ण त्वामहं शरणंगतः ॥१२॥ कञ्जाक्षकमलानाथ परकारुणिकोत्तम । देहिमेतन० ॥१३॥ लक्ष्मीपते पद्मनाभ मुकुन्दमुनिवन्दित । देहिमेतन० ॥१४॥ कार्यकारणरूपाय वासुदेवायते सदा । नमामि पुत्रलाभार्थं सुखदाय बुधाय ते ॥१५॥ राजीवनेत्र श्रीराम रावणारे हरे कवे । तुभ्यं नमामि देवेश तनयं देहि मे हरे ॥१६॥ अस्माकं पुत्रलाभाय भजामि त्वा जगत्पते । देहि मे तनयं कृष्ण वासुदेव रमापते ॥१७॥ श्रीमानिनीमानचोर गोपीवस्त्रापहारक । देहि मे तनयं कृष्ण वासुदेवजगत्पते ॥१८॥ अस्माकं पुत्रसम्प्राप्तिं कुरुष्वयदुनन्दन । रमापते वासुदेव मुकुन्द मुनिवन्दित ॥१९॥ वासुदेव सुतं देहि तनयं देहि माधव । पुत्रं मे देहि श्रीकृष्ण वत्सं देहि महाप्रभो ॥२०॥ डिम्भकं देहि श्रीकृष्ण आत्मजं देहि राघव । भक्तमन्दार मे देहि तनयं नन्दनन्दन ॥२१॥ नन्दनं देहि मे कृष्ण वासुदेव जगत्पते । कमलानाथ गोविन्द मुकुन्द मुनिवन्दित ॥२२॥ अन्यथा शरणं नास्ति त्वमेव शरण मम । सुतं देहि श्रियं देहि श्रियं पुत्रं प्रदेहि मे ॥२३॥ यशोदास्तन्यपानज्ञं पिबन्तं यदुनन्दनम् । वन्देऽहं पुत्रलाभार्थं कपिलाक्षं हरिं सदा ॥२४ नन्दनन्दन देवेश नदनं देहि मे प्रभो । रमापते वासुदेव श्रियं पुत्रं जगत्पते ॥२५॥ पुत्रं श्रियं श्रियं पुत्रं पुत्रं मे देहि माधव । अस्माकं दीनवाक्यस्य अवधारय श्रीपते ॥२६॥ गोपाल डिम्भगोविन्द वासुदेव रमापते । अस्माकं डिम्भकं देहि श्रियं देहि जगत्पते । मद्वाञ्छितफलं देहि देवकीनन्दनाच्युत। मम पुत्रार्थिनं धन्यं कुरुष्व यदुनन्दन ॥२८॥ याचेऽहं त्वां श्रियं पुत्रं देहि मे पुत्रसम्पदम्। भक्तचिन्तामणे राम कल्पवृक्ष महाप्रभो ।२९। आत्मज नन्दनं पुत्रं कुमारंडिम्भकं सुतम् । अर्भकं तनयं देहि मे सदा रघुनन्दन ।३०। वन्दे सन्तानगोपालं माधवं भक्तकामदम्। अस्माकं पुत्रसम्प्राप्त्यै सदा गोविन्द-

मच्युतम् ॥३१॥ अकारयुक्तं गोपालं श्रीयुक्तं यदुनन्दनम्। क्लींयुक्तं देवकीपुत्रं नमामि यदुनायकम् ॥३२॥ वासुदेव मुकुन्देश गोविन्द माधवाच्युत। देहि मे तनयं कृष्ण रमानाथ महाप्रभो ॥३३॥ राजीवनेत्र गोविन्द कपिलाक्ष हरे प्रभो। समस्तकाम्यवरद देहि मे तनयं सदा ॥३४॥ अब्जपद्मनाभिपद्मवृन्दरूप जगत्पते। देहि मे वर सत्पुत्रं रमानायक माधव ॥३५॥ नन्दपाल धरापाल गोविन्द यदुनन्दन। देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥३६॥ दासमन्दार गोविन्द मुकुन्द माधवाच्युत। गोपाल पुण्डरीकाक्ष देहि मे तनयं श्रियम् ॥ ३७ ॥ यदुनायक पद्मेश नन्दगोपवधूसुत देहि मे तनयं कृष्ण श्रीधरप्राणनायक ॥३८॥ अस्माकं वाञ्छितं देहि देहि पुत्रं रमापते। भगवन्कृष्ण सर्वेश वासुदेव जगत्पते ॥३९॥ रमाहृदयसम्भार सत्यभामामनःप्रिय। देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो ॥४०॥ चन्द्रसूर्याक्षगोविन्द पुण्डरीकाक्ष माधव। अस्माकं भाग्यसत्पुत्रं देहि देव जगत्पते ॥४१॥ कारुण्यरूप पद्माक्ष पद्मनाभसमर्चित। देहि मे तनयं कृष्ण देवकीनन्दनन्दन ॥४२॥ देवकीसुत श्रीनाथ वासुदेव जगत्पते। समस्तकामफलद देहि मे तनयं सदा ॥४३॥ भक्तमन्दार गम्भीर शङ्कराच्युत माधव। देहि मे तनयं गोप बालवत्सक श्रीपते ॥ ४४ ॥ श्रीपते वासुदेवेश देवकीप्रियनन्दन। भक्तमन्दार मे देहि तनयं जगतां प्रभो ॥४५॥ जगन्नाथ रमानाथ भूमिनाथ दयानिधे। वासुदेवेश सर्वेश देहि मे तनयं प्रभो ॥४६॥ श्रीनाथ कमलपत्राक्ष वासुदेव जगत्पते। देहि मे तनयं कृष्ण त्वामहं शरणंगतः ॥ ४७ ॥ दासमन्दार गोविन्द भक्तचिन्तामणे प्रभो। देहि मे तनयं कृष्ण त्वामहं शरणंगतः ॥४८॥ गोविन्द पुण्डरीकाक्ष रमानाथ महाप्रभो। देहि मे तनयं कृष्ण त्वामहं शरणंगतः ॥४९॥ श्रीनाथ कमलपत्राक्ष गोविन्द मधुसूदन। मत्पुत्रफलसिद्ध्यर्थं भजामि त्वां जनार्दन ॥५०॥ स्तन्यं पिबन्तं जननीमुखाम्बुजं विलोक्यमन्दस्मितमुज्ज्वलाङ्गम्। स्पृशन्तमन्यस्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥५१॥ याचेऽहं पुत्रसन्तानं भवन्तं पद्मलोचन। देहि मे तनयं कृष्ण त्वामहं शरणंगतः ॥५२॥ अस्माकं पुत्र[illegible]

दातव्यं भवता मुनिवन्दित ॥५३॥ वासुदेव जगन्नाथ श्रीपतेपुरुषोत्तम। कुरु मां पुत्रदत्तञ्च कृष्ण देवेन्द्रपूजित ॥५४॥ कुरु मां पुत्रदत्तञ्च यशोदाप्रियनन्दन। मह्यं वै पुत्रसन्तानं दातव्यं भवता हरे ॥५५॥ वासुदेव जगन्नाथ गोविन्द देवकीसुत देहिमे तनयं राम कौसल्याप्रियनन्दन ॥५६॥ पद्मपत्राक्ष गोविन्द विष्णो वामन माधव। देहिमे तनयं सीताप्राणनायक राघव ॥५७॥ कञ्जाक्षकृष्ण देवेन्द्र मण्डितं मुनिवन्दितम्। लक्ष्मणाग्रज श्रीराम देहि मे तनयं सदा ॥५८॥ देहिमे तनयं राम दशरथप्रियनन्दन। सीतानायककञ्जाक्ष मुचुकुन्दवरप्रद ॥ ५९ ॥ विभीषणस्यया लङ्का भवता दीयते पुरा। अस्माकं तत्प्रकारेण तनयं देहि माधव ॥६०॥ भवदीय पदाम्भोजे चिन्तयामि निरन्तरम्। देहि मे तनयं सीताप्राणवल्लभ राघव ॥ ६१ ॥ राम मत्काम्यवरद पुत्रोत्पत्तिफलप्रद। देहि मे तनयं श्रीश कमलासनवन्दित ॥६२॥ राम राघव सीतेश लक्ष्मणानुज देहि मे। भाग्यवत्पुत्रसन्तानं दशरथात्मज श्रीपते ॥ ६३ ॥ देवकीगर्भसञ्जात यशोदाप्रियनन्दन। देहि मे तनयं राम कृष्णगोपाल माधव ॥ ६४ ॥ कृष्णमाधव गोविन्द वामनाच्युत शङ्कर। देहि मे तनयं श्रीश गोपबालकनायक ॥ ६५ ॥ गोपबाल महाधन्य गोविन्दाच्युत माधव। देहि मे तनयं कृष्ण वासुदेव जगत्पते ॥६६॥ दिशतु दिशतु पुत्रं देवकीनन्दनोऽयं दिशतु दिशतु शीघ्रं भाग्यवत्पुत्रलाभम्। दिशतु दिशतु श्रीशो राघवोरामभद्रो दिशतु दिशतु पुत्रं वंशविस्तारहेतोः ॥६७॥ दीयता वासुदेवेन तत्रयोमत्प्रियः सुतः। कुमारो नन्दनः सीतानायकेन सदा मम ॥६८॥ राम राघव गोविन्द देवकीसुत माधव। देहि मे तनयं श्रीश गोपबालकनायक ॥६९॥ वंशविस्तारकं पुत्रं देहि मे मधुसूदन। सुतं देहि सुतं देहि त्वामहं शरणंगतः ॥७०॥ ममाभीष्टसुतं देहि कंसारे माधवाच्युत। सुतं देहि सुतं देहि त्वामहं शरणागतः ॥७१॥ चन्द्रार्ककल्पपर्यन्तं तनयं देहि माधव। सुतं देहि सुतं देहि त्वामहं शरणागतः ॥७२॥ विद्यावन्तं बुद्धिमन्तं श्रीमन्तं तनयं सदा। देहिमे तनयं कृष्ण देवकीनन्दनं सदा ॥ ७३ ॥ नमामित्वा पद्मनेत्र सुतलाभाय कामदम्। मुकुन्दं पुण्डरीकाक्षं गोविन्दं मधुसूदनम् ॥७४॥ भगवन्कृष्ण

गोविन्द सर्वकामफलप्रद । देहि मे तनयं स्वामिंस्त्वामहं शरणंगतः ॥७५॥ स्वामिंस्त्वं भगवन् राम कृष्ण माधव कामद । देहि मे तनयं नित्यं त्वामहं शरणंगतः ॥७६॥ तनयं देहि गोविन्द कञ्जाक्ष कमलापते । सुतं देहि सुतं देहि त्वामहं शरणंगतः ॥ ७७ ॥ पद्मापते पद्मनेत्र प्रद्युम्नजनक माधव । सुतं देहि सुतं देहि त्वामहं शरणं गतः ॥ ७८ ॥ शङ्खचक्रगदाखड्गशार्ङ्गपाणे रमापते । देहिमे तनयं कृष्ण त्वामहं शरणंगतः ॥ ७९ ॥ नारायण रमानाथ राजीवपत्रलोचन । मे सुतं देहि मे देहि पद्मसद्मानुवन्दित ॥ ८० ॥ राम राघव गोविन्द देवकीवरनन्दन । रुक्मिणीनाथ सर्वेश नारदादिसुरार्चित ॥८१॥ देवकीसुत गोविन्द वासुदेव जगत्पते । देहिमे तनयं श्रीश गोपबालकनायक ॥८२॥ मुनिवन्दित गोविन्द रुक्मिणीवल्लभ प्रभो । देहिमेत० ॥ ८३ ॥ गोपिकार्जितपङ्केरुहमरन्दासक्तमानस । देहि मे त० ॥ ८४ ॥ रमाहृदयपङ्केरुहलोलमाधव कामद । ममाभीष्टसुतं देहि त्वामहं श० ॥८५॥ वासुदेव रमानाथ दासानां मङ्गलप्रद । देहिमेत० ॥८६॥ कल्याणप्रद गोविन्द मुरारे मुनिवन्दित । देहिमेत० ॥ ८७ ॥ पुत्रप्रद मुकुन्देश रुक्मिणीवल्लभ प्रभो । देहिमेत० ॥ ८८ ॥ पुण्डरीकाक्ष गोविन्द वासुदेव जगत्पते । देहिमेत० ॥ ८९ ॥ दयानिधे वासुदेव मुकुन्द मुनिवन्दित । देहिमेत० ॥ ९० ॥ पुत्रसम्पत्प्रदातारं गोविन्दं देवपूजितम् । वन्दामहे सदा कृष्णं पुत्रलाभप्रदाय ते ॥ ९१ ॥ कारुण्यनिधये गोपीवल्लभाय मुरारये । वन्दामि पुत्रलाभार्थं देहि मे तनयं विभो ॥ ९२ ॥ नमस्तस्मै रमेशाय रुक्मिणीवल्लभाय ते । देहिमे तनयं श्रीश गोपबालकनायक ॥९३॥ नमस्ते वासुदेवाय नित्यश्रीकामुकाय च । पुत्रदाय च शेषेन्द्रशायिने रङ्गशायिने ॥ ९४ ॥ रङ्गशायिरमानाथ मङ्गलप्रद माधव । देहिमे तनयं श्रीश गोपबालकनायक ॥९५॥ दासस्य मे सुतं देहि दीनमन्दार राघव । सुतं देहि सुतं देहि पुत्रं देहि रमापते ॥९६॥ यशोदा ते ममाभीष्टपुत्रदानं कुरु प्रभो । देहिमेतनयं० ॥९७॥ मदिष्टदेव गोविन्द वासुदेव जनार्दन । देहिमेत० ॥ ९८ ॥ नीतिवान् धनवान् पुत्रो विद्यावांश्च सुजायते । भगवंस्त्वत्कृपायाश्च वासुदेवेन्द्रपूजित ॥९९॥ यः पठेत्पुत्रशतकं सोऽपि सत्पु-

त्रवान् भवेत्। श्रीवासुदेवकथितं स्तोत्ररत्नं सुखाय च ॥१००॥ जपकाले पठेन्नित्यं पुत्रलाभं धनं श्रियम्। ऐश्वर्यं राजसन्मानं सद्यो याति न संशयः ॥१०१॥

॥ इति श्रीलक्ष्मीकेशवसम्वादे सन्तानगोपालस्तोत्रं सम्पूर्णम् ॥

---

# अथ श्रीरङ्गराजसुप्रभातम्

श्रीमते रामानुजाय नमः ॥ श्रीरङ्गभूमितलभूसुरदेशिकेन्द्रैः श्रीरङ्गवाटमिद-मित्युदितैः प्रबोधैः। श्रीभूमिपाणिकमलैश्च समाश्रिताङ्घ्रे श्रीरङ्गराज जगदीश्वर सुप्रभातम् ॥ १ ॥ कस्तूरिकाकलिकयाकलितालकस्य कन्दर्पकोटिसदृशस्य कृपा-म्बुराशेः। कल्याणभूमिधरकाङ्क्षितधैर्यसिन्धो श्रीरङ्गराज जगदीश्वर सुप्रभातम् ॥२॥ लीलाविशेषललितालळितेन्दिरायाः मालाकवेरतनया मणिरेव साक्षात्। श्रीरङ्गरा-डिति जना निगदन्ति सर्वे श्रीरङ्गराज जगदीश्वर सुप्रभातम् ॥ ३ ॥ जम्बुद्रुमा-द्विमतेः शशिराजमौले. सम्भूतनिर्जरनदीहृतकल्मषस्य। उद्दीपनं वितनुते तव पादसेवा श्रीरङ्गराज विजयीभव सुप्राभतम् ॥ ४ ॥ श्रीरङ्गराजभवने भुवनैकमान्ये सीताकराम्बुरुहसेव्यतयातिधन्ये। याने विमानशयने वरवेदशृङ्गे श्रीरङ्गराज जग-दीश्वर सुप्रभातम् ॥ ५ ॥ श्रीचन्द्रपुष्करणिकासरसः प्रतीरे श्रीवृक्षमूलकमलाक्षक-टाक्षपूरे। श्रीसह्यजावरविभूषणदिव्यमूर्ते श्रीरङ्गराज जगदीश्वर सुप्रभातम् ॥ ६ ॥ सूर्येन्दुमण्डलमृगेन्द्रसुवर्णशेषवालाभिवर्यगजवाजिरथप्रधानैः दिव्यैर्विमानशयने दययात्तनाथः श्रीरङ्गराज जगदीश्वर सुप्रभातम ॥ ७ ॥ लक्ष्मीश केशव हरे नृहरे मुरारे शौरे रमारमण कारणदीनबन्धो। इत्यादरेण वदतामिह वाञ्छितार्थ श्रीरङ्ग-

राज जगदीश्वर सुप्रभातम् ॥ ८ ॥ श्रीसुप्रभातकमिदं सुकृताभिधेयं प्रातः समाहितमतीरितवाक् पठेत । तस्मै भुजङ्गशयनो भुवि रङ्गनाथः सर्वाणि वाञ्छितफलानि सदा प्रसूते ॥ ९ ॥

॥ इति श्रीरङ्गराजसुप्रभातं सम्पूर्णम् ॥

---

# अथ श्रीगोविन्दराजसुप्रभातम्

श्रीभूमिनायक दयापरदिव्यमूर्ते देवादिदेव जगेदकशरण्य विष्णो । गोपाङ्गनाकुचतटेपु निमग्नदृष्टे गोविन्दराजविजयिन् तव सुप्रभातम् ॥१॥ देवादिदेवफणिराजविहङ्गराजराजत्किरीटमणिराजविराजिताङ्घ्रे । राजाधिराज यदुराज कुलाधिराज गोविन्दराज विजयिन् तव सुप्रभातम् ॥ २ ॥ देवप्रसिद्धकरुणाकर भक्तवर्गसेनापतिप्रणमिताखिललोकभानो । श्रीवासदिव्यनगराधिपराजराज गोविराजविजयिन तव सुप्रभातम् ॥ ३ ॥ कासारयोगिपरमाद्भुतभक्तिबद्धवाङ्मूलभूपितमहोत्पलरम्यपाद । गोपाधिनाथ वसुदेवकुमार कृष्ण गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ४ ॥ श्रीभूतयोगिपरिकल्पितदिव्यमान ज्ञानप्रदीपपरिदृश्यरतैकतान । गोगोपजालपरिरक्षणदीक्ष रक्ष गोविन्दराज विजयिन् तव सुप्रभातम् ॥५॥ मान्यानुभावमहदाह्वययोगिदृष्टे श्रीशङ्खचक्रकमलासहितामलाब्ज । गोपीजनप्रियचरित्रितचित्रवेष गोविन्दराज विजयिन् तव सुप्रभातम् ॥६॥ श्रीमत्त्वदीयपदपङ्कजभक्तिनिष्ठश्रीभक्तिसारमुनिनिश्चितमुख्यतत्त्व । गोपीजनार्तिहर गोपजनान्तरङ्ग गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ७ ॥ श्रीमत्पराङ्कुशमुनीन्द्रसहस्रशाख-

संस्तूयमानचरणाम्बुज सर्वशेषिन्। गोपालवंशतिलकाच्युतपादपद्म गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ८ ॥ शेषाचले महति पादपपक्षिजन्मा तद्भक्तितत्स्पृहयता कुलशेखरेण। राजा पुनः पुनरुपासितपादपद्म गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ९ ॥ श्रीविष्णुचित्तकृतमङ्गलदिव्यसूक्ते तन्मानसाम्बुरुहकल्पितनित्यवास। गोपालबालयुवतीविट सार्वभौम गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १० ॥ श्रीविष्णुचित्तकृतनन्दनकल्पवल्लीगोदालकान्तविनिवेशितमाल्यलोल। गोपाङ्गनाकुचकुलाचलमध्यसुप्त गोविन्दराज विजयिन् तव सुप्रभातम् ॥ ११ ॥ भक्ताङ्घ्रिरेणुमुनिना परमं तदीयशेषत्वमाश्रितवता विमलेन नित्यम्। प्राबोधकीस्तवकृतैर्ह्यवबोधितश्रीगोविन्दराज विजयिन् तव सुप्रभातम् ॥१२॥ श्रीपाणनामक महामुनिदिव्यनामदिव्यानुभावदयमानदृगञ्चलाढ्य। पूर्णानुकम्प पुरुषोत्तम पुष्कराक्ष गोविन्दराज विजयिन् तव सुप्रभातम् ॥१३॥ भक्तोत्तमायपरकालमुनीन्द्रनाम्ने विश्राणितातुलमतानतमूलमन्त्र। सर्वात्मरक्षणविचक्षण चक्रपाणे गोविन्दराज विजयिन् तव सुप्रभातम् ॥१४॥ श्रीमच्छठारिकरुणाश्रितदेवगानसारज्ञनाथ मुनिसन्नुतपुण्यमूर्ते। गोब्राह्मणप्रियगुरो श्रितपारिजात गोविन्दराज विजयिन् तव सुप्रभातम् ॥ १५ ॥ भक्तप्रपन्नकुलनायकभाष्यकारसङ्कल्पकल्पतरुदिव्यफलामलात्मन्। श्रीशेषशैलनिकटाश्रितशेषशायिन् गोविन्दराज विजयिन् तव सुप्रभातम् ॥१६॥ सत्त्वोत्तरैस्सततसेव्यपदाम्बुजेन संसारतारकदयार्द्रदृगञ्चलेन। सौम्योपयन्तृमुनिना परिपूजिताङ्घ्रे गोविन्दराज विजयिन् तव सुप्रभातम् ॥१७॥

॥ इति श्रीगोविन्दराजसुप्रभातम् सम्पूर्णम् ॥

---

